| | | |
|---|---|---|
| ८९. | अक्षण्यापः | अक्षन्नापः |
| ९६. | मुत्त्युभयत्वेन | मुत्त्युपायत्वेन |
| ९६. | तुभ्यं मे | तुभ्यं व्याचक्षाणस्य मे |
| ११५. | उदताम् गृह्णातु | उदजातम्। अज गतौ क्षपणे च गृह्णातु |
| १३८. | अत इति | त इति |
| १४७. | तपति करोति | तपः करोति |
| १५०. | परिमिताः | मानं ज्ञानं लयश्चैव मयाया चेति कथ्यत इत्यभिधानम् |
| १६१. | यत्र यत् | यत्र यस्मात् |
| १८२. | न जायते | न ज्ञायते |
| १८७. | शारीर | शरीर |

**Acknowledgements :**

I have carried out research work of the present publication with the blessings & kindness of His Holiness *Sri Vishveshatirtha Swamiji* – Chairman of the Research wing of the Poornaprajna Samshodhana Mandiram. I pray almighty that this service continue uninterrupted by His grace.

I express my gratitude to Prof. Kutumba Shastry – Vice Chancellor - *Rashtriya Sanskrit Samsthan,* New Delhi for his benign guidance. I also offer my thanks to finance officer of this *Samshtan* Sri C S Kaniyal.

I offer my gratitude to Prof. Prabhanjanacharya, recipient of various titles such as Vidyavachaspati and others, a researcher and publisher of ancient works, who provided useful manuscripts for preparation of this work. The other two manuscripts used here belong to our *Samshodhana Mandiram.*

I thank Sri B Raghavendra of Bangalore for his help in rendering Kannada introduction in to English.My best wishes to him that he might render more service to God in this way.

I acknowledge with gratitude to the guidance of revered Prof. K.T. Pandurangi, Vice Chancellor of *Poornaprajna Vidyapeetha*, who is the recipient of Presidential award and author of many works. I also acknowledge with all sincerity, the benign guidance of revered Prof. D. Prahladachar,' former Honorary Director of *Poornaprajna Samshodhana Mandira* & former Vice-Chancellor of *Rashtriya Sanskrit Vidyapeetha*, *Tirupati* and recipient of Presidential award. I cordially express my salutations to both.

I pray for blessings of God to my pupil Sri Ananth, Chartered Accountant, by profession, who has rendered great service to Sri Raghavendra Swamiji by bearing the entire cost of printing this book on his father's 80th birthday and thereby seeking blessings to his parents for good health & longivity. I wish to place on record with gratitude that his contribution has met the complete expenses for printing of *Bhashya-Bhavabodha & Bhasya Kandartha.* I pray Sri Lord Krishna to bless Sri Ananth and his family for noble service rendered by them.

I am indebted to the service of both Sri Prahlad and the staff of Sri Aniketana Mudrana, Bangalore, for excellent DTP and printing work respectively.

*Sujanavidheya*

**Dr. A.V. Nagasampige**
Director
Poornaprajna Samshodhana Mandiram

# विषयानुक्रमणिका

## तृतीयोऽध्यायः

I acknowledge with gratitude to the guidance of revered Prof. K.T. Pandurangi, Vice Chancellor of *Poornaprajna Vidyapeetha*, who is the recipient of Presidential award and author of many works. I also acknowledge with all sincerity, the benign guidance of revered Prof. D. Prahladachar, former Honorary Director of *Poornaprajna Samshodhana Mandira* & former Vice-Chancellor of *Rashtriya Sanskrit Vidyapeetha*, *Tirupati* and recipient of Presidential award. I cordially express my salutations to both.

I pray for blessings of God to my pupil Sri Ananth, Chartered Accountant, by profession, who has rendered great service to Sri Raghavendra Swamiji by bearing the entire cost of printing this book on his father's 80th birthday and thereby seeking blessings to his parents for good health & longivity. I wish to place on record with gratitude that his contribution has met the complete expenses for printing of *Bhashya-Bhavabodha & Bhasya Kandartha.* I pray Sri Lord Krishna to bless Sri Ananth and his family for noble service rendered by them.

I am indebted to the service of both Sri Prahlad and the staff of Sri Aniketana Mudrana, Bangalore, for excellent DTP and printing work respectively.

*Sujanavidheya*

**Dr. A.V. Nagasampige**
Director
Poornaprajna Samshodhana Mandiram

# विषयानुक्रमणिका

## तृतीयोऽध्यायः

## चतुर्थोऽध्यायः

## पञ्चमोऽध्यायः

## षष्ठोऽध्यायः

## सप्तमोऽध्यायः

## अष्टमोऽध्यायः

श्रीराघवेन्द्रतीर्थविरचितः

# बृहदारण्यकोपनिषत्खण्डार्थः

**[मङ्गलाचरणम्]**

कल्याणगुणपूर्णाय दोषदूराय विष्णवे ।
नमः श्रीप्राणनाथाय भक्ताभीष्टप्रदायिने ॥
प्रणम्य श्रीमदानन्दतीर्थादिगुरुशेखरान् ।
काण्वोपनिषदोऽर्थानां सङ्ग्रहः क्रियते मया ॥

अस्या उपनिषदो ब्रह्मसूर्ययाज्ञवल्क्यकण्वा क्रमादृषयः । लक्ष्मीशो देवता । वाक्यरूपत्वान्न च्छन्दोऽन्वेषणम् । अस्या उपनिषदोऽध्यायाष्टात्मकत्वेऽपि पूर्वाध्यायद्वयस्य विद्याधिकारार्थं अश्वमेधकर्मनिरूपणपरत्वेन तदव्याख्याय कर्मणा शुद्धान्तःकरणस्य ब्रह्मस्वरूपं निरूपयितुं प्रवृत्तं तृतीयाध्यायादिग्रन्थसन्दर्भं व्याचख्यौ भगवान् भाष्यकारः । तथाहि । आदौ पूर्वप्रकृताश्वमेधयागीयाश्वनिष्ठां ब्रह्मविद्यामाह– **उषा वा इत्यादिना खण्डद्वयेन** ॥ यागीयाश्वो हि उच्चैःश्रवाः। तत्राश्वरूपो ब्रह्मा तत्र च तद्रूपो हरिः सन्निहितः । तत्र सन्निहितयोरश्वरूपयोर्ब्रह्मविष्ण्वोरङ्गेषु जगदाश्रित्यास्तीति शिरःप्रभृत्युत्तमाङ्गक्रमेणाह– **उषा वा इति** ॥

**अथ अश्वब्राह्मणम्**

**[मेध्याश्वनिष्ठब्रह्मविद्या]**

**उषा वा अश्वस्य मेध्यस्य शिरः सूर्यश्चक्षुर्वातः प्राणो व्यात्तमग्निर्वैश्वानरः संवत्सर आत्माऽश्वस्य मेध्यस्य द्यौः पृष्ठमन्तरिक्षमुदरं पृथिवी पाजस्यं दिशः पार्श्वे अवान्तरदिशः पर्शव ऋतवोऽङ्गानि मासाश्चार्धमासाश्च पर्वाण्यहोरात्राणि प्रतिष्ठा नक्षत्राण्यस्थीनि नभो माꣳसानि [१]ऊवध्यꣳ सिकताः**

---

१. 'उवध्यम्' इति क. ।

**सिन्धवो गुदा यकृच्च क्लोमानश्च पर्वता ओषधयश्च वनस्पतयश्च लोमान्युद्यन् पूर्वार्धो निम्लोचन् जघनार्धो यद् विजृम्भते तद् विद्योतते यद् विधूनुते तत् स्तनयति यन्मेहति तद् वर्षति वागेवास्य वाक्॥ १ ॥**

मेध्यस्य मेधशब्दितयागार्हस्य अश्वस्य तत्र सन्निहिताश्वरूपब्रह्मगतस्याश्वरूपस्याश्वनाम्नो हरेः शिरः उषाः उषोदेवी ततो जाता। तदाश्रित्य तिष्ठतीत्यर्थः। शिर इत्यादि प्रथमा पञ्चमीसप्तम्योरर्थे ध्येया। तथा तृतीयार्थे चतुर्थ्यर्थे [१]षष्ठ्यर्थे च ज्ञेया। उषाः शिरसा सत्ताप्रतीतिप्रवृत्तिमतीति। उषाः शिरसे तदुपास्त्यर्था। "अङ्गेषु यथाश्रयभाव"(ब्र.सू. ३.३.६३) इति सूत्रात्। उषाः शिरसस्तत्स्वामिकेति। एवमग्रेऽपि ध्येयम्। वैशब्दः प्रसिद्ध्यर्थः।

सूर्यश्चक्षुः अश्वस्य मेध्यस्येति सर्वत्रानुषज्यते। तदर्थः प्राग्वत्। सूर्यो मण्डलाभिमानी देवश्चक्षुषो जातस्तत्र तिष्ठतीत्यादिरर्थः। एवमग्रेऽपि। [२]वातो वाय्वभिमानी प्राणः। वैश्वानरनामाग्निः व्यात्तं विवृतमुखम्। संवत्सरः संवत्सराभिमानी ब्रह्मा अश्वस्य मेध्यस्यात्मा सर्वदेहः। प्राक्तनस्यैव सर्वत्रानुषङ्गसम्भवे पुनरश्वस्य मेध्यस्येत्युक्तिः कस्यचिदश्वस्यैवं महिमा न किन्तु सर्वस्यापि यागीयाश्वस्येति द्योतनाय। द्यौः द्युलोकाभिमानी पृष्ठम्। अन्तरिक्षं अन्तरिक्षाभिमानी विघ्नेशसूनुरुदरम्। पृथिवी पृथिव्यभिमानी पाजस्यं [३]पादश्रिता। दिशो दिगभिमानिनश्चत्वारः पार्श्वे। पूर्वापरविभागेनैकपार्श्वस्य द्वित्वेन पार्श्वद्वयस्य चतुष्ट्वात् पार्श्वेभ्यो जातास्तानाश्रित्य तिष्ठन्ति चेत्येवमादिरर्थः। अवान्तरदिशः कोणमानिनः परिशवः [४]परिशवशब्दितपार्श्वस्थास्थिपुच्छानि। ऋतवः वसन्तादिषड्ऋतुमानिनः अङ्गानि [५]शिरःपादमूलचतुष्टयपुच्छभेदेन षडङ्गानि।

---

१. **'षष्ठ्यर्थे'** इति नास्ति ख.। २. **'वातो'** इति नास्ति ख.। नासिक्यवायुः प्राणः घ्राणगतः इत्यर्थः। ३. **'पादाः'** क.। ४. **'परिशव'** इति नास्ति ख.। ५. पादमूलचतुष्टयेत्यस्य खुरचतुष्टयेत्यर्थः।

मासा अधर्ममासाश्च मासपक्षाभिमानिनः पर्वाणि प्रधान-सन्धयोऽवान्तरसन्धयः । अहोरात्रमानिनः [१]प्रतिष्ठाः पादाः । [२]नक्षत्राणि नक्षत्राभमानिनः अस्थीनि । नभः आकाशाभिमानी विघ्नेशः [३]मांसानि । सिकताः सिकताभिमानिनः ऊवध्यं पुरीषम् । मेध्याश्वगतभगवदुदरस्थमिति योज्यम् । ऊवध्याश्रितपृथिवीदेव्यां सिकताभिमानिनस्तिष्ठन्तीत्यादिरर्थो ध्येयः । पृथिव्याः पादाश्रयत्वोक्तावपि ऊवध्याश्रयत्वं न विरुद्धम् ऐश्वर्याद्बहुरूपत्वाच्च ।

सिन्धवो नदीमानिनः गुदा आन्त्राणि । पर्वताः पर्वताभिमानिनो देवाः यकृच्च क्लोमानश्च यकृत्क्लोमशब्दितमांसविशेषाः । ओषधयश्च वनस्पतयश्च तदभिमानिनो देवाः लोमानि। उद्यन् उदयङ्गतो रविः [४]पूर्वार्धः नाभेः पूर्वभागः । निम्लोचन् अस्तं गच्छन् जघनार्धः नाभेरधोभागः । यत् विद्योतते यो विद्युदभिमानी तत् स विजृम्भते। मेध्याश्वस्य विजृम्भणं औदरवायुवशेन मुखव्यादानं विजृम्भणम्। यत्तच्छब्दयोर्व्यत्यासेन योजना। यत् स्तनयति मेघगर्जनाभिमानी यः तत् सः विधूनुते गात्रं कम्पयते । गात्रकम्पनाश्रित इत्यादिरर्थः । यद्वर्षति वर्षाभिमानी यः तत् सः मेहति मूत्रयति । मूत्रणाश्रित इत्यादिः । वागेव प्रसिद्धवागभिमानिदेव [५]एव । अस्य मेध्याश्वस्थस्य हरेः वाक् ततो जाता तामाश्रित्य तिष्ठीतति ज्ञेयम् । एवं शिरःप्रभृतिप्रथमान्तशब्दानां 'उषाः शिरो ब्रह्म नाम' इत्यादिभाष्योक्तस्मृत्या सप्तम्यर्थादिपरत्वमुपेत्य उषो-देवीप्रभृतिदेवानां मेध्याश्वगतहरेश्शिरःप्रभृत्यङ्गाश्रितत्वादिरूप एकार्थोऽस्य खण्डस्योक्तः । 'ईशाङ्गवाचिनो वा स्युः' इत्यादिस्मृत्यनुरोधेन मेध्याश्वगतस्य हरेश्शिरः प्रकाशरूपत्वादुषा इत्युच्यते । चक्षुः सूरिप्राप्यत्वादिहेतुना सूर्य इत्युच्यत इत्यादिरूपेण योगवृत्त्या उषस्सूर्यवातवैश्वानराग्निसंवत्सरादि-

---

१. प्रतितिष्ठन्ति एतैः इति प्रतिष्ठाः पादाः तदाश्रिताः । एकस्यापि भगवदङ्गस्यानेकदेवाश्रयत्वोपपत्तेः पृथिवी पाजस्यमहोरात्राणि प्रतिष्ठा इत्याद्युक्तिरुपपन्ना । २. **'नक्षत्राणि'** इति नास्ति ग. । ३. **'मांसानि'** इति नास्ति । ४. **'पूर्वार्ध'** इति नास्ति क. । ५. **'एव'** इति नास्ति ख. ।

शब्दानां शिरःप्रभृतिभगवदवयववाचित्वपरत्वेनान्योऽप्यर्थो ध्येयः । अस्मिन् पक्षे यथाश्रुतमेव सामानाधिकरण्यम् ॥ ३-१-१ ॥

**अहर्वा अश्वं पुरस्तान्महिमाऽन्वजायत तस्य पूर्वे समुद्रे योनी रात्रिरेनं पश्चान्महिमाऽन्वजायत तस्यापरे समुद्रे योनिरेतौ वा अश्वं महिमानावभितः सम्बभूवतुर्हयो भूत्वा देवानवहद् वाजी गन्धर्वानर्वाऽसुरानश्वो मनुष्यान् समुद्र एवास्य बन्धुः समुद्रो योनिः ॥ २ ॥**

**इति अश्वब्राह्मणम् ॥ ३-१ ॥**

मेध्याश्वनिष्ठभगवत्सम्बन्धिविद्याविशेषमाह– **अहरिति** ॥ अश्वेधीयमेध्याश्वस्य पूर्वापरदेशौ होमयोग्यौ महिमशब्दितौ । तदभिमान्युक्तिपूर्वं तयोर्जन्मकारणाद्याहात्र खण्डे । अश्वं पुरस्तान्मेध्याश्वस्य पुरोभागो महिमनामा 'अहः' अहरभिमानि-मन्मथाभिमन्यमानः 'अन्वजायत' आसीदित्यर्थः । वै प्रसिद्धिद्योतकः । 'तस्य' महिमाभिमानिनोऽहश्शब्दितस्य मन्मथस्य 'पूर्वे' अनादौ मुख्ये इति वा । समुद्रे सम्यग्गुणैरुद्रिक्तत्वादुत्कृष्टत्वाद्धेतोस्समुद्रनामके हरौ योनिरुत्पत्तिः ।

एनं अस्याश्वस्य पश्चात् पश्चाद्भागो महिमनामा 'रात्रिः' रात्रिदेवतारत्यभिमन्यमानः अन्वजायत अभवत् । तस्य पश्चाद्भागाभिमानिनो रात्रिदैवतस्य अपरे अमुख्ये समुद्रे समुद्रिक्ते अमुख्यसमुद्रेकवति चतुर्मुखे योनिरुत्पत्तिः । विक्षिप्योक्तं बुद्ध्यारोहाय सङ्गृह्याह– **एताविति** ॥ एतौ महिमानौ महिमशब्दिता-वश्वदेहपूर्वोत्तरभागौ अहोरात्रशब्दितमन्मथरत्यभिमन्यमानौ अश्वमभितः अश्वदेहस्य पूर्वापरदेशे सम्बभूवतुः वै इति ।

न केवलं भगवान् अश्वरूपी मेध्याश्वे तिष्ठति किन्तु देवादिवाहकेष्वपि स्थित्वा तत्तत्कर्मकर्तृतया तत्तन्नामा वर्तत इत्याह– **हयो भूत्वेति** ॥ हत्वा शत्रून् यातीति व्युत्पत्त्या हयनामा सन् हयरूपी देवाश्वेषु तेषां शत्रुहननाय आविष्ट-

स्सन् देवानवहत् । नित्यं युद्धकर्तृत्वहेतुना वाजिनामा सन् वाजिरूपी गन्धर्वाश्वेषु स्थित्वा गन्धर्वानवहत्। देवप्रेष्यतया गन्धर्वाणां सर्वदा युद्धरतत्वात्तदश्वा वाजिनः । वाजं युद्धमस्यास्तीति वाजी । अतिगतिमत्त्वहेतुना अर्वनामा सन् असुराश्वेषु स्थित्वा असुरानवहत् । तेषामश्वा अतिगतिमन्तः । ईषदाशु-गमनहेतुना अश्वनामा सन् मनुष्याश्वेषु स्थित्वा मनुष्यानवहत् । ईषद्गतिमन्तो हि मनुष्याश्वाः । अस्य शत्रुहननादिव्यापारे कस्सहायः? नानाविधरूपजनकश्च क इत्यत आह– **समुद्र एवेति** ।। समुद्रेकहेतुना समुद्रनामा हरिरेवास्य हरेः बन्धुः । समुद्र एवास्य योनिः कारणम्। स्वस्मादेव स्वयं नानारूपाण्याविर्भावयति ऐश्वर्यातिशयादिति भावः ।। ३-१-२ ।।

इति **अश्वब्राह्मणम्** ।। ३-१ ।।

## अथ अश्वमेधब्राह्मणम्

[अप्सृष्टिः]

**नैवेह किञ्चनाग्र आसीन्मृत्युनैवेदमावृतमासीदशनायया अशनाया हि मृत्युस्तन्मनोऽकुरुतात्मन्वी स्यामिति । सोऽर्चन्नचरत्तस्यार्चत आपोऽजायन्ता[१]र्चतो ह वै मे कम-भूदिति तदेवार्कस्यार्कत्वं कꣳह वा अस्मै भवति य एवमेतदर्कस्या-र्कत्वं वेद ।। १ ।।**

प्रकृताश्वमेधयज्ञो भगवदाराधनत्वेन [२]ब्रह्मादिभिरप्यनुष्ठित इति 'सोऽकामयत मेध्यम्' इति 'तं संवत्सरस्य' 'परस्तादात्मन आलभत' इत्यादिना वक्तुं तदुपयुक्तां काञ्चन कथामाह– **नैवेहेति** ।। [३]इह अवकाशे अग्रे विश्वजनेः प्राक्, प्रलय इति यावत् । किञ्चन वस्तु नैवासीत् । [४]प्रकृत्यादेः कारणजातस्य

---

१. **'अर्चतो वै'** इति ख. । २. **'ब्राह्मणादि'** - ग. । ३. **'अस्वतन्त्रवर्गे'** भा.बो. । ४. प्रकृत्यादे-रित्यत्रादिपदेन–'सर्वसंहारकं विष्णुं देवीं जीवांस्तथैव च । कालं त्रिगुणसाम्यं च कर्माणि प्राण-मिन्द्रियम् ।। संस्कारं चैव वेदांश्च नर्ते किञ्चिल्लये त्वभूत् ।।' इति भाष्योक्तदिशा जीवादयो ग्राह्याः ।

सत्त्वान्नैव किञ्चनासीदित्युक्तिः कथमित्यत आह– **मृत्युनैवेति** ।। अश्यते भुज्यत इत्यशम्। आहारभूतं जगत् नयति प्रेरयतीति अशनाया तया अशनायया मृत्युना [1]सर्वसंहारकेण हरिणा इदं सर्वं नित्यजातमावृतमासीत्। अभिभूतं सुप्तशक्तिकमासीत् । तदधीनमेवासीत् न स्वतन्त्रम् अतो नासीदित्युक्तिरिति भावः । तथाहि श्रुत्यन्तरं 'नान्यत्किञ्चन मिषत्' (ऐ.आ. २.१) इति। जगन्नेतृत्वस्य श्रीतत्वादौ सत्त्वेऽपि मुख्यतो मृत्युनामा हरिरेव नेतेति स एवात्र ग्राह्य इति भावेनाह– **अशनाया हि मृत्युरिति**।। हिशब्दः 'एकः पुरस्ताद् य इदं बभूव यतो बभूव भुवनस्य गोपाः । यमप्येति भुवनं साम्पराये स नो हरिर्घृतमिहायुषेऽत्तु देवः' (नृ.पु. २.८) इत्यादिश्रुतिप्रसिद्धिद्योतकः[2]। तत् तस्मात् स्वस्मादन्यस्याभावात् मनोऽकुरुत ऐच्छत्। अप्सृष्ट्यर्थमिति शेषः ।

इच्छाप्रकारमाह– **आत्मन्वीति** ।। आत्मवान् जगदाख्यगौणदेहवान् स्यां भवेयमिति । विश्वसृजं विरिञ्चं सृष्ट्वा तद्द्वारा स्वाधीनं जगत्सृजेयं ततः प्रागपस्सृजेयमित्यैच्छदिति तात्पर्यार्थः। अपां प्राणिसुखहेतुत्वात्पूजासाधनत्वाच्चादौ तत्सृष्टिमाह– **स इति** ।। स मृत्युनामा हरिः । अप्सृष्ट्यर्थमात्मानमर्चन्नचरत्। तस्यार्चतः स्वात्मानं पूजयतस्सकाशादापोऽजायन्त। अर्चतो जातत्वादुदकस्यार्कनामान्वर्थत्वेन प्राप्तमित्याह वेदपुरुषः– **अर्चतो वै म इति** ।। अर्चतस्स्वात्मानं पूजयतः । मे मदन्तर्यामिणो हरेस्सकाशात्। कं सुखहेतुतया कंपदवाच्यमुदकं अभूदिति यत्तदेवार्कस्या[3]र्कपदवाच्यस्यार्कपदप्रवृत्तिनिमित्तम्। अनेन निमित्तेनोदकस्यार्कनाम प्राप्तमिति प्रसिद्धिद्योतको वैशब्दः ।

---

१. **'सर्व'** इति नास्ति-क. । २. अयमर्थः य एकः इदं–अस्य जगतः पुरस्तात्–प्रलये बभूव। यतश्चेदं जगत् बभूव–जातं यश्चैको भुवनस्य गोपाः गोप्ता साम्पराये मुक्तिप्रलययोः भुवनं अप्येति–प्रवशिति। सः हरिः नः आयुषे 'इह' यज्ञस्थाने धृतं आहुतिरूपं अत्तु। ब्र.सू. भाष्ये अत्तृत्वाधिकरणे (१-२-९) उदाहृता। ३. **'अर्कपदवाच्यस्य'** इति नास्ति।

तात्पर्यज्ञापनायैतज्ज्ञानिनः फलमाह– **कमिति** ॥ योऽधिकारी एवं विष्णुजातत्वपूजासाधनत्वसुखसाधनत्वप्रकारेणैतदर्कत्वं अर्कपदप्रवृत्तिनिमित्तं अर्कस्य अर्कपदवाच्यस्योदर्कस्य वेद अस्मै कं सुखं भवति ह वा इति। अर्चतो जातं कमर्कमिति व्युत्पत्तिः। निरुक्तिबलादरित्येतावत एवोपपदस्य शेषः ॥ ३-२-१ ॥

[ब्रह्माण्डसृष्टिः, श्रीहरेः शयनम्]

**आपो वा अर्कस्तद्यदपाꣳशर आसीत्तत्समहन्यत सा पृथिव्यभवत्तस्यामश्राम्यत्तस्य श्रान्तस्य तप्तस्य तेजो रसो निरवर्तताग्निः ॥ २ ॥**

अर्कनाम्नस्सूर्ये प्रसिद्धत्वात्तद्बलादप्शब्दोऽपि तत्पर एव किन्न स्यादिति शङ्कामपाकर्तुं प्रागुक्तमपामर्कनामत्वमनुवदंस्ताभ्यः पृथिवीसृष्ट्यादिकमाह– **आपो वा अर्क इति** ॥ वैशब्दोऽवधारणे । आप एवात्रार्को नादित्य इति लोकरूढितोऽपि वाचनिकयोगस्य निरवकाशतया प्राबल्येन अपामेव अर्कनाम 'अर्चतो वै म' इति प्रागुक्तनिरुक्तिबलादिति भावः। उक्तं हि 'कम्पनात्' (ब्र.सू. १-३-१०) इत्यत्र रूढितोऽपि वाचनिकयोगस्य प्राबल्यम् । तद्यदपां तत् तासां अपां यत् शरः यः शरः मण्ड आसीत् तत् सशरः स महन्यत निबिडोऽभवत् । सा विधेयापेक्षया स्त्रीलिङ्गनिर्देशः। संहतः शरः पृथिव्यभवत् । तस्यां पृथिव्यां श्वेतद्वीपे अश्राम्यत् शिश्ये । मृत्युरित्यनुषङ्गः। अग्निर्मे स्यादित्यतपच्चेति शेषः । तस्य श्रान्तस्य तप्तस्य अग्निर्मे स्यादिति चिन्तयतस्तेजोरसस्तेजस्सामर्थ्यस्य [१]रसः जगत्सामर्थ्यसारभूतो बलदेवतारूपोऽग्निः अग्रजत्वादग्रणीत्वादङ्गिनां नेतृत्वाद्वा अग्निनामा मुख्यवायुः निरवर्तत उदपद्यतेति ॥ ३-२-२ ॥

---

१. रसशब्दोऽत्र 'रसः सारो वरश्चेति शब्दाः पर्यायवाचका' इत्यभिधानात् सारवाचकः।

[रूपत्रयेण वायोर्जनिः]

**स त्रेधाऽऽत्मानं व्यकुरुतादित्यं तृतीयं वायुं तृतीयꣳ [१]अग्निं तृतीयं स एष प्राणस्त्रेधा विहितस्तस्य प्राची दिक् शिरोऽसौ चासौ चेर्मावथास्य प्रतीची दिक् पुच्छमसौ चासौ च सक्थ्यौ दक्षिणा चोदीची च पार्श्वे द्यौः पृष्ठमन्तरिक्षमुदरमियमुरस्स एषोऽप्सु प्रतिष्ठितो यत्र क्व चैति तदेव प्रतितिष्ठत्येवं विद्वान् ॥ ३ ॥**

तस्याग्निनाम्नो वायोर्महिमानमाह– **स इति** ॥ सोऽग्निनामा वायुः आत्मानं त्रेधा व्यकुरुत व्यभजत् । आदित्यं तृतीयं वायुं तृतीयम् अग्निं तृतीयमिति । त्रयाणां मध्ये एकैकस्येतरद्वयापेक्षया तृतीयत्वमस्तीति सर्वरूपाणां समत्वसिद्धये तृतीयं तृतीयमित्येवोक्तम् । प्रथमं द्वितीयं तृतीयमित्युक्तौ रूपाणां तरतमभावः प्रतीयेत । प्राणिनामायुरादाय यातीति व्युत्पत्त्या आदित्यनामकं जगत्प्रकाशकत्वेनादित्यस्थं रूपमेकं सर्वप्राणिशरीरगं सज्जगत्पालकं वायुरूपमेकं, प्रागुक्तनिरुक्त्या अग्निनामकं अग्निस्थं सर्वयज्ञप्रवर्तकं रूपमेकं चेति त्रेधा व्यकुरुतेत्यर्थः। प्राङ् निरवर्तताग्निरित्युक्त्या अग्नेरेव त्रिरूपतेति भ्रमनिरासायोक्तमेव रूपान्तरविवक्षयान्वाह– **स एष प्राणस्त्रेधा विहित इति** ॥ प्राणो मुख्यवायुस्स च कूर्मरूपेण जगद्धारकः सन्नप्यास्त इति तस्य स्थितिमाह– **तस्येति** ॥ कूर्मरूपेण स्थितस्य वायोः प्राची दिक् शिरः । प्रथमा सप्तम्यर्थे । प्राच्यां दिशि शिरस्तिष्ठतीत्यर्थः । एवमग्रेऽपि ॥ **असौ चासौ चेर्मौ** ॥ [२]ईर्मौ बाहू । असौ चासौ च आग्नेय्यैशान्यौ दिशौ । अथेत्यर्थान्तरे पश्चिमदिगवस्थिताङ्गानि वच्मीत्यर्थः । अस्य कूर्मरूपस्य वायोः पुच्छं प्रतीची दिक् । अस्य सक्थ्यौ पादौ असौ चासौ च नैर्ऋतवायव्यदिशौ । अस्य पार्श्वे दक्षिणा

---

१. **'अग्निं तृतीयं'** इति ग. नास्ति । २. **'ईर्मौ पादौ'** -क., ख. ।

चोदीची च । द्यौः द्युलोकः पृष्ठम्। कूर्मदेहस्योर्ध्वभागे अस्योदरमन्तरिक्षम्। आकाशमुदरेऽस्तीत्यर्थः । अस्य उरः वक्षः। अधोभाग इति यावत् । इयं पृथिवी कूर्मरूपस्य उरःप्रभृत्यधोभागाश्रिता इत्यर्थः ॥

सोऽयं वायुकूर्मः कुत्र तिष्ठतीत्यत आह– **स एषोऽप्सु प्रतिष्ठित इति** ॥ अण्डोदके प्रतिष्ठित इत्यर्थः । यद्यप्ययं कूर्मरूपो वायुः पञ्चाशत्कोटिविस्तीर्णायाः पृथिव्याः निखिलमपि प्रदेशमभिव्याप्य तामुरस्संश्लिष्टां कृत्वा तस्या उपरि तिष्ठति। अत एव तावत्परिमाणकूर्मदेहस्योपरिभागो द्युलोकपर्यन्तमास्त इति द्युलोकाधारत्वं पृष्ठस्यान्तरिक्षाश्रयत्वं मध्यभागस्योदरशब्दितस्य युक्तम्। तथापि वायवीयकूर्मदेहस्याप्रतिघत्वात् शिरोबाहुपादपुच्छपार्श्वानां लक्षयोजनघनीभूतभूखण्डपार्श्वेषु अनुप्रविश्यातिरिच्याण्डोदपर्यन्तं गत्वा तदुदके अवस्थितत्वादप्सु प्रतिष्ठित इत्युक्तम् । वायुकूर्मादिज्ञानिनः फलमाह– **यत्रेति**॥ य एवं विद्वान् वायोरादित्यादिरूपत्रयं कूर्मरूपं चोक्तप्रकारेण जानन् यत्र क्वच यस्मिन् कस्मिंश्चिद्देशे एति गच्छति तिष्ठासा चेत्तदेव तत्रैव प्रतितिष्ठति संस्थितिमान् भवतीत्यर्थः[१] ॥ ३-२-३ ॥

[ब्रह्मसरस्वत्युत्पत्तिः]

**सोऽकामयत द्वितीयो म आत्मा जायेतेति स मनसा वाचं मिथुनꣳ समभवदशनायां मृत्युस्तद्यद्रेत आसीत्स संवत्सरोऽभवन्न ह पुरा ततः संवत्सर आस तमेतावन्तं कालमबिभर्यावान् संवत्सरस्तमेतावतः कालस्य परस्तादसृजत तं जातमभिव्याददात्स भाणमकरोत्सैव वागभवत् ॥ ४ ॥**

---

१. यद्वा एवं विद्वान् विष्ण्वपरोक्षज्ञानद्वारा यत्र क्वच योगयुक्तस्थाने गच्छति तत्रैव प्रतितिष्ठति। न पुनरावर्तत इत्यर्थः। (भा.बो.)

वायुरेव ब्रह्मा भवतीति ज्ञापयितुं वायूत्पत्तिं पूर्वमुक्त्वा ब्रह्मणः सृष्टिविषयामश्वमेध-करणे साक्षादुपयुक्तां कथामाह– **सोऽकामयतेति** ॥ ब्रह्मणोऽश्वमेध-कर्तृत्वेन तदुत्पत्तिकथाया अश्वमेधकृतावादरजननाय उपयोगात् वायूत्पत्त्युक्तेरपि अश्वमेधादौ स एवोद्गानदक्षो नान्य इति 'अथ हैममासन्यम्' (३.३.७) इत्यादिनोपयोगो व्यक्त इति ज्ञेयम् । आत्मा विरिञ्चः मे द्वितीयो जायेतेति स मृत्युरकामयत। स मृत्युः मनसा स्वेच्छया । वाचं श्रीदेवीम् । मिथुनं यथा भवति तथा समभवत् । स इति तच्छब्दार्थं व्यनक्ति– **अशनायां मृत्युरिति** ॥ बिन्दुराधिक्यार्थे । सर्वाशननेतृत्वेन अशनायेति। तत् तत्र देव्यां यद्रेतः स्थापितमासीत् । स रेतः विधेयापेक्षया पुल्लिङ्गत्वम् । 'संवत्सरोऽभवत्' सम्यक् वत्सभूतान् देवान् रमयतीति व्युत्पत्त्या संवत्सरनामा ब्रह्मा अभवत्। रमतेर्ञमन्ताड्डः । कियत्कालं देवी गर्भं दधारेत्यतो वत्सरपर्यन्तमित्याह– **न ह पुरेति** ॥ ततः विरिञ्चोत्पत्तेः पुरा पूर्वं संवत्सरः नास ह नाभूत्किल। कोऽर्थ इत्यतो व्यनक्ति– **तमिति** ॥ तं विरिञ्चं यावान् द्वादशमासात्मा संवत्सरः एतावन्तं कालमबिभः उदरे धृतवती देवी। तमेतावतः कालस्य संवत्सरस्य परस्तात् पश्चात् असृजत असूत । वाणीसृष्टिं वक्तुमुपोद्धातमाह– **तमिति** ॥ जातं तं विरिञ्चमभि प्रति तदाभिमुख्येनेति यावत्। व्याददात् तमत्तुं मुखविवृतिमकरोदित्यर्थः। स तु भीत्या भाणमकरोत्। भाणिति शब्दमकरोत् । सैव भाणिति शब्दस्तदभिमानी । विधेयापेक्षया स्त्रीलिङ्गत्वम्। वाक् सरस्वती अभवत्। भारूपत्वाण्णशब्दितसुखरूपत्वाद्भाणिति भगवान् तद्व्यञ्जकत्वात्सरस्वती भाणभवदित्युच्यते ॥ ३-२-४ ॥

[हरिरेव सर्वसंहारकर्ता]

**स ऐक्षत यदि ह वाव इममभिमꣳस्ये कनीयोऽन्नं करिष्य इति स तया वाचा तेनात्मनेदꣳ सर्वमसृजत यदिदं किञ्चर्चो यजूꣳषि सामानि च्छन्दाꣳसि यज्ञान् प्रजाः पशून् स यद्**

**यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति तददितेर-दितित्वꣳ सर्वस्यैतस्यात्ता भवति सर्वमस्यान्नं भवति य एवमेतददितेरदितित्वं वेद ॥ ५ ॥**

ततः किं जातमित्यतोऽदनान्निवृतो भगवान् वाणीवाणीश्वराभ्यां जगत्सृष्ट्वा पश्चात्समहरदित्याह– **स इति** ॥ सः मृत्युनामा हरिः । इमं संवत्सराख्यं विरिञ्चम्। अभिमंस्ये लीनं करिष्ये संहरिष्यामि यदि तर्हीति शेषः । कनीयः अल्पमन्नं करिष्ये कृतवान् भवेयमित्यैक्षतालोचितवान् । एवमालोच्य स मृत्युः अदनान्निवृत्तस्सन् तया वाचा सरस्वत्या तेनात्मना विरिञ्चेन मिथुनीभूताभ्यां ताभ्यामिति यावत् । इदं सर्वमसृजतेत्युक्तं व्यनक्ति– **ऋच इति** ॥ ऋगाद्यभिमानिनः । गायत्र्यादिछन्दोऽभिमानिनः यज्ञाभिमानिनः । असृजते-त्यन्वयः । अजनयदित्यर्थः ।

सृष्टिमुक्त्वा संहृतिमाह– **स इति** ॥ स आत्मा विरिञ्चः यद्यदेवासृजत तत्तदत्तुमध्रियत मनोऽकुरुत मृत्युरित्यर्थः । आदच्चेत्यपि ध्येयम् । कुतः सर्वमाद-न्मृत्युरित्यतः स्वस्यादिति नामवत्त्वहेतोरित्याह– **सर्वमिति** ॥ मृत्युः सर्वमत्तीति यत् तत् सर्वादनं अदितेरदितिपदवाच्यस्य मृत्योरदितित्वं अदितिपदप्रवृत्तिनिमित्तम् । अन्यथा सर्वादनाभावे सर्वात्तृत्वनिमित्तकं यत् स्वस्यादिति नाम [१] 'अदितिर्देवतामयी' (कठ. ४.७) इत्यादि श्रुत्यन्तरेऽस्ति तन्न स्यादतः सर्वमाददिति । देवमातरि प्रसिद्धादितिनाम्नो निमित्तोक्तिपरमिति त्वयुक्तम् । तस्यास्सर्वादनस्य बाधात् । मृत्युपदोक्तब्रह्मप्रकरणविरोधाच्च । तथाच सूत्रं 'अत्ता चराचरग्रहणात्' (ब्र.सू. १-२-९) 'प्रकरणाच्च' इति(ब्र.सू. १-२-१०) तात्पर्यद्योतनायैतज्ज्ञानिनः फलमाह– **सर्वस्येति** ॥ योऽधिकारी अदितेरदितिपदवाच्यस्य मृत्युनाम्नो हरेरेतददितित्वं अदितिपदप्रवृत्तिनिमित्तमेवं वेद स इति शेषः । सर्वस्य

---

१. एवमत्र मन्त्रपाठः– या प्राणेन संविशत्यदितिर्देवतामयी। गुहां प्रविश्य तिष्ठन्तीं या भूतेभिर्व्यजायत ॥ इति ॥

स्वयोग्यस्यात्ता भक्षकः भवति । नेदं स्तुतिमात्रं किन्तु वास्तवमेवेति भावेनाह– **सर्वमस्यान्नं भवतीति** ।। ३-२-५ ।।

[विरिञ्चकर्तृकाश्वमेधयागः]

**सोऽकामयत भूयसा यज्ञेन यजेयेति सोऽश्राम्यत्स तपोऽतप्यत तस्य श्रान्तस्य तप्तस्य यशो वीर्यमुदक्रामत्प्राणा वै यशो वीर्यं तत्प्राणेषूत्क्रान्तेषु शरीरꣳश्वयितुमध्रियत तस्य शरीर एव मन आसीत् ।। ६ ।।**

अश्वमेधकर्तृजनिमुक्त्वा तत्साधनाश्वरूपपशूत्पत्तिं वक्तुं कथामाह– **स इति** ।। स चतुर्मुखः भूयसा यज्ञेन श्रेष्ठेनाश्वमेधक्रतुना भूयः परिपूर्णं ब्रह्म यजेय पूजयेयमित्यकामयत ।[१] एवं कामयमानः सः साधनास्मृतेरश्राम्यत् श्रान्तोऽभवत् । स तपोऽतप्यत अतपदित्यर्थः । तापवानभूदिति यावत् । तस्य श्रान्तस्य तप्तस्य देहत्यागेच्छायां सत्यां देहादुदक्रामत् । तस्मिन्नुत्क्रान्ते सति तेनैव सह यशो वीर्यमुदक्रामदिति काङ्क्षितपूर्त्या वाक्ययोजना ज्ञेया । यशोवीर्यशब्दार्थं व्यनक्ति– **प्राणा वै यशो वीर्यमिति** ।। यशोवीर्यहेतुत्वात्प्राणा इन्द्रियाभिमानिनः ।। **प्राणेषूत्क्रान्तेष्विति** ।। विरिञ्चेन सहेति योज्यम् । श्वयितुं स्थूलभावं प्राप्तुं अध्रियत अभूत् । स्थूलमभवदित्यर्थः । तस्य विरिञ्चस्य शरीरं एव स्थूलतां प्राप्ते शरीरे एव प्रवेष्टुं मन आसीत् ।। ३-२-६ ।।

[अश्वमेधनामनिमित्तकथनम्]

**सोऽकामयत मेध्यं म इदꣳ स्यादात्मन्व्यनेन स्यामिति ततोऽश्वः समभवद् यदश्वत्तन्मेध्यमभूर्दत तदेवाश्वमेधस्याश्वमेधत्वमेष ह वा श्वमेधं वेद य एनमेवं वेद ।। ७ ।।**

---

१. 'एवं कामयमानस्स' इति नास्ति - ख. ।

ततः किमासीदित्यत आह– **स इति** ॥ इदं शवरूपं स्थूलतां प्राप्तं शरीरं मेध्यं पवित्रं स्यात् । अनेन शरीरेण आत्मन्वी देहवान् स्यां भवेयमिति स चतुर्मुखोऽकामयत ऐच्छत् । प्रविवेश चेत्यपि ध्येयम् । ततः प्रवेशानन्तरं देहस्य श्वेतीभावानन्तरमिति वा स्थूलाद्देहादिति वा । अश्वमेधसाधनं दृष्ट्वा अश्वोऽभवत् । अश्वाकारं देहान्तरमेकेनांशेन धृतवानित्यर्थः । ततोऽश्वमेधमकरोदिति शेषः । प्राक्तनपुंदेहस्य अश्वदेहस्य यागस्य च त्रयाणामश्वमेधनामनिर्वचनेनाह– **यदिति** ॥ तच्छरीरमश्वत् स्थूलमभवत् । मेध्यं चाभूदिति यत् तदेव स्थूलताभवनं मेध्यताभवनमेव अश्वमेधस्य अश्वमेधनाम्नश्शरीरस्य तच्छरीरकस्य चतुर्मुखस्याश्वमेधत्वं अश्वमेधनामनिमित्तम् । श्वेतीभावं मेध्यतां पवित्रतां च गते शरीरे स्थितत्वात् ब्रह्मा अश्वमेधनामकोऽभवदित्यर्थः । तथा तत्पुंशरीरं अश्वत् अश्वरूपतया द्वितीयं रूपमभवत् । मेध्यं मेधो यागस्तदीयं मेध्यम् । यागसाधनं चाभूदिति यत् तदेवाश्वमेधनाम्नो यागीयाश्वस्याश्वमेधत्वम् । पुंदेहस्थो ब्रह्मा स्थूलभावं गतात्पुंदेहादश्वाकारं देहान्तरं सृष्ट्वांशेन तदधिष्ठाय फलविशेषसिद्ध्यर्थं यज्ञसाधनं चाभूदित्यश्वरूपोऽप्यश्वमेधीयत्वहेतुना अश्वमेधनामाऽभवदित्यर्थः । तथा यत् यदर्थं अश्वाख्यसाधनद्वारा यत्कर्मानुष्ठानार्थमिति यावत् । अश्वत् स्थूलमभवत् । मेध्यं शुद्धं च तदिच्छयाऽभवदिति यत् तदेव श्वेतीभूतमेध्यपुंदेहस्थब्रह्मणा अश्वमेधनामकाश्वरूपसाधनद्वारानुष्ठितत्वमेवाश्वमेधनाम्नो यागस्याश्वमेधत्वं अश्वमेधनामनिमित्तमिति त्रेधास्य वाक्यस्यार्थो ध्येयः । योऽधिकारी एवं उक्तप्रवृत्तिनिमित्तेनाश्वमेधशब्दवाच्यतया एनं पुंदेहिनं [१]अश्वदेहिनं विरिञ्चं यागं च वेद जानाति । एष पुमान् ह वै एष पुमानेवाश्वमेधमश्वमेधशब्दार्थं वेद नान्य इत्यर्थः ॥ ३-२-७ ॥

**तमनवरुध्यैवामन्यत तꣳ संवत्सरस्य परस्तादात्मन आलभत पशून् देवताभ्यः प्रत्यौहत्तस्मात्सर्वदैवत्यं प्रोक्षितं प्राजापत्य-**

---

१. 'अश्वदेहिन'मिति नास्ति - ग. ।

**मालभन्त । एष ह वा अश्वमेधो य एष तपति तस्य संवत्सर आत्माऽयमग्निरर्कस्तस्येमे लोका आत्मानस्तावेतावर्काश्वमेधौ । सा पुनरेकैव देवता भवति मृत्युरेवाप पुनर्मृत्युं जयति नैनं मृत्युराप्नोति मृत्युरस्यात्मा भवत्येतासां देवतानामेको भवति ॥ ७ ॥**

॥ इति **अश्वमेधब्राह्मणम्** ॥ ३-२ ॥

पूर्वं शेषोक्त्या अश्वमेधमकरोदित्युक्तम् । तं प्रकारं दर्शयति– **तमिति** ॥ स इत्यनुवर्तते । सः विरिञ्चः तं अश्वरूपमात्मानमनवरुध्यैव निरोधमकृत्वैवामन्यत । अवरोधहीनतया भूमण्डलं चारयिष्यामीत्यमन्यतेत्यर्थः । अश्वरूपः स्वयमेवेतीच्छया संचारसम्भवेऽपि लोक इव निरोध्यनिरोधकभेदमुपेत्येयमुक्तिरितीवशब्दः ।

संवत्सरं चारयित्वा संवत्सरस्य परस्तात् आत्मने स्वान्तर्यामिणे भगवते आलभत विशस्तवान् । विशस्य तस्य वपामङ्गानि च हरये दत्तवानित्यर्थः । अश्वमेधीयाश्वस्य प्रजापतिदेवताकत्वात्प्रजापतीतरकर्तृकयागे 'सदेहमानिहरये प्रणमेत्केवलाय वा' इत्युक्तन्यायेन प्रजापतिसहितहरये हविर्दानम् । प्रजापतिकर्तृके तु यज्ञे अधिष्ठानं विना [१]कृतकेवलहरये दानमिति कृत्वा केवलस्वान्तर्यामिणे हविर्दत्तवानिति ज्ञेयम् । पशून् अजादीन् देवताभ्यः अन्यदेवताभ्यः अन्यदेवतास्थ-परमात्मरूपेभ्यः उक्तन्यायात् प्रत्यौहत् दत्तवान् । कुतो ब्रह्मा स्वात्मस्थायाश्वं देवतास्थरूपेभ्योऽन्यपशूनालब्धवानित्यत आह– **तस्मादिति** ॥ तस्मात्स्वात्मस्थाय देवतास्थाय दत्तत्वकारणात् इन्द्रादयः पृथुप्रभृतिराजानश्च प्रोक्षितं पशुं जात्येकवचनम् । अजादिपशुजातं सर्वं सर्वदैवत्यं सर्वदेवतासम्बन्धि । अश्वं च प्रजापतिसम्बन्धिनं आलभन्ते ।

न केवलं ब्रह्मादिरश्वमेधाख्योऽपि त्वश्वमेधनामकब्रह्माधिष्ठानत्वात्सूर्योऽप्यश्वमेधनामेत्याह– **एष ह वा इति** ॥ एष इत्युक्तं व्यनक्ति–

१. 'कृत' इति नास्ति - ग. ।

**य एष तपतीति** ।। कुतः यतस्तस्य[१] तस्मिन् सूर्ये संवत्सरो ब्रह्माऽश्वमेधनामा सन्निति शेषः । आत्मा आततो व्याप्तोऽ[२]स्त्यत इति । तस्य महिमानमाह– **अयमिति** ।। अयं संवत्सराख्यो ब्रह्मा अर्कोऽर्कस्थोऽर्कनामा अग्नि-रग्निस्थतयाग्निनामा । तस्य ब्रह्मण इमे लोका आत्मानः तेन आतताः व्याप्ता इति कृत्वा तस्यात्मान इत्युच्यन्ते । एवं सूर्यादौ सर्वत्र व्याप्तश्चेत्तर्हि किं स एव सर्वोत्तमः नेत्याह– **ताविति** ।। उपलक्षणम् । अर्काग्निलोकाश्व-मेधास्तेषु स्थितो ब्रह्मेति यावत् । सो पुनरेकैव देवता भवतीत्यत्र सा उ इति पदविभागः । प्रसिद्धविष्ण्वाख्यैकदेवताधीन एव भवति उ[३] भवत्येवेति सेत्युक्तदेवता केत्यत आह– **मृत्युरेव** ।। नृसिंह एव । तं जानन्निति शेषः । तं मृत्युनामकं नृसिंहं जानन् ब्रह्मा पुनर्मृत्युर्मृतिः 'पुनर्मृत्युर्मृतिः स्मृता' इत्युक्तेः । अप पुनर्मृत्युं अकालमृतिं जयति । मृत्युः मृतिरूपो मृत्युरेनं ब्रह्माणं नाप्नोति । कुत मृत्युः नृसिंहः अस्य ब्रह्मण आत्मा स्वामी भवति । एतासां देवतानां रुद्रादीनां पूर्वप्रकृतार्कादीनां वा एको मुख्यो भवति स्वामी भवति ईशत्वेन वर्तत इत्यर्थः । यतोऽत इति योजना । यद्वा मृत्यु-रस्यात्मेत्येतत् नैनमित्युक्तार्थे एतासामित्युक्तार्थे च हेतुरिति ज्ञेयम् ।। ३-२-८ ।।

इति अश्वमेधब्राह्मणम् ।। ३-२ ।।

## अथ उद्गीथब्राह्मणम्

[देवनामप्यसुरावेशो भवति]

**द्वया ह प्राजापत्या देवाश्चासुराश्च ततः कानीयसा एव देवा ज्यायसा असुरास्त एषु लोकेष्वस्पर्धन्त ते ह देवा ऊचुर्हन्तासुरान् यज्ञ उद्गीथेनात्ययामेति ।। १ ।।**

---

१. 'तस्य' इति नास्ति - ग. । २. 'स्मृत' इति ख. । ३. 'उभयवृत्त्यैव' - ख.,ग. ।

अश्वमेधादिषु वायुरेवोद्गाता कार्यस्तस्यैव तत्र [१]प्राप्तविघ्नविघातक्षमत्वादिति 'अथ हेममासन्यं प्राणम्' इत्यादिना विवक्षुरुपोद्घातमाह– **द्वया इति** ॥ प्राजापत्याः ब्रह्मसुताः । देवाश्च असुराश्चेति द्वयाः द्विवर्गाः । ह प्रसिद्धम् । इतिशब्दोऽत्र योज्यः । ततः तत्र वर्गद्वयमध्ये । देवाः कनीयसाः कनीयांसः । संख्यया अल्पा एव । असुराः ज्यायसाः ज्यायांसो बहव इत्यर्थः । ते उभये । एषु लोकेषु त्रिलोकाधिपत्यविषये अस्पर्धन्त । स्पर्धया युद्धे जाते बहुत्वाच्छङ्करवरोत्सिक्तत्वाच्चासुरैर्जिताः ते देवाः परस्परमूचुर्ह । आलोचितवन्तः स्म । कथं हन्त हर्षे । यज्ञे उद्गीथेन उद्गानेन उद्गानप्रसन्नेन हरिणा असुरानत्ययाम अतिक्रामामेति ॥ ३-३-१ ॥

**ते ह वाचमूचुस्त्वं न उद्गायेति तथेति तेभ्यो वागुदगायद् यो वाचि भोगस्तं देवेभ्य आगायद् यत्कल्याणं वदति तदात्मने ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन् स यः स पाप्मा यदेवेदमप्रतिरूपं वदति स एव स पाप्मा ॥ २ ॥**

ते एवमालोचितवन्तो देवाः यज्ञमारभ्य वाचं वागभिमानिनं वह्निमूचुर्ह । त्वं नोऽस्मदर्थो उद्गाय ऋगारूढसामगानं कुर्विति । तैरुक्तो वाग्वह्निस्तथास्त्वित्युक्त्वा तेभ्यो देवेभ्यः देवानामर्थे उदगायत् । यो वाचि भोगः उद्गानजं फलं शत्रुजयादि तं देवेभ्य आगायत् । यत् कल्याणं उद्गानादन्यदृगादिना भगवत्स्तवनादिरूपं वदति तदात्मने स्वस्मै आगायदित्यनुषङ्गः । ते असुराः अनेनोद्गात्रा नोऽस्मान् अत्येष्यन्ति देवा इति विदुर्वै । एवं विदित्वा ते तं वह्निं अभिद्रुत्य आभिमुख्येन गत्वा पाप्मनाऽविध्यन् । सम्यगुद्गानं यथा न भवति तथाऽकुर्वन्निति । वेधमेव व्यनक्ति– **स य इति** ॥ योऽ सुरकृतः

१. 'प्रभूत' - ख. ।

पाप्मा स सः प्रसिद्धः । एकस्तच्छब्दः प्रसिद्धार्थकः । प्रसिद्धः पाप्मा क इत्यत आह– **यदेवेति** ।। अप्रतिरूपं व्यत्यस्तस्वरवर्णादिकम् । वदतीति यत् इदमेव प्रसिद्धं पापवेधनमिति । कथमिदं पापमित्यत आह– **स एव स पाप्मेति** ।। 'मन्त्रो हीनः स्वरतो वर्णतो वा' (व्या.भा. पस्पशा) इत्यादेरिति ज्ञेयम् ।। ३-३-२ ।।

**अथ ह घ्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्यः प्राण उदगायद्यो प्राणे भोगस्तं देवेभ्य आगायद्यत्कल्याणं जिघ्रति तदात्मने। ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन् स यः स पाप्मा यदेवेदमप्रतिरूपं जिघ्रति स एव स पाप्मा ।। ३ ।।**

अथ वह्नेः पापविद्धत्वकारणात् 'घ्राणं नासिक्यवायुम् । प्राग्वदेतदादिखण्ड-चतुष्टयस्यार्थो ध्येयः । घ्राणे भोगः । भगवन्निर्माल्याघ्राणजमदृष्टफलम् । तदन्य-शुभगन्धाघ्राणजं दृष्टं फलं कल्याणम् । अप्रतिरूपमशुभगन्धम् ।। ३-३-३ ।।

**अथ ह चक्षुरूचुस्त्वं न उद्गायेति तथेति तेभ्यश्चक्षु-रुदगायद्यश्चक्षुषि भोगस्तं देवेभ्य आगायद्यत्कल्याणं पश्यति तदात्मने ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन् स यः स पाप्मा यदेवेदमप्रतिरूपं पश्यति स एव स पाप्मा ।। ४ ।।**

अथेत्युक्तार्थम् । चक्षुश्चक्षुर्दैवतं सूर्यम् । चक्षुषि भोगः पुण्यतीर्थक्षेत्रादिदर्शनजमदृष्टं फलम् । तदन्यसुरूपादिकं कल्याणम् । अप्रतिरूपं दुर्दर्शम् ।। ३-३-४ ।।

**अथ ह श्रोत्रमूचुस्त्वं न उद्गायेति तथेति तेभ्यः श्रोत्रमुदगायद्यः श्रोत्रे भोगस्तं देवेभ्य आगायद्यत्कल्याणꣳ शृणोति तदात्मने**

**ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन् स यः स पाप्मा यदेवेदमप्रतिरूपꣳ शृणोति स एव स पाप्मा ॥ ५ ॥**

श्रोत्रं दिग्देवताः। श्रोत्रे भोगो हरिकथाश्रवणादिजमदृष्टफलम्। तदन्यसुखहेतुशब्दं कल्याणम्। अप्रतिरूपं दुःश्रावशब्दम् ॥ ३-३-५ ॥

**अथ ह मन ऊचुस्त्वं न उद्गायेति तथेति तेभ्यो मन उदगायद्यो मनसि भोगस्तं देवेभ्य आगायद्यत्कल्याणं सङ्कल्पयति तदात्मने ते विदुरनेन वैन उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन् स यः स पाप्मा यदेवेदमप्रतिरूपꣳ सङ्कल्पयति स एव स पाप्मैवमु खल्वेता देवताः पाप्मभिरुपासृजन्नेवमेनाः पाप्मनाऽविध्यन् ॥ ६ ॥**

मनः मनोदैवतमिन्द्रं रुद्रं [१]शेषं च। मनसि भोगो हरिध्यानादिजं श्रेयः। तदन्यसुखहेत्वर्थजातं कल्याणम्। अप्रतिरूपं स्वाननुकूलम्। उक्तमुपलक्षणम्। अन्ये च देवा उद्गाने प्रवृत्ताः पापविद्धाः अभूवन्निति वदन्नुपसंहरति– **एवमु खल्वेता देवता इति** ॥ एताः देवताः वह्न्यादीनन्यांश्च देवान् पाप्मभिरुपासृजन् संबद्धानकुर्वन्नसुरा एवमेनाः वह्न्यादिदेवता इत्यर्थः ॥ ३-३-६ ॥

[वायुरसुरावेशविकलः]

**अथ हेममासन्यं प्राणमूचुस्त्वन्न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन् स यथाश्मानमृत्वा लोष्टो विध्वꣳसेतैवꣳ हैव विध्वꣳसमाना विष्वञ्चो विनेशुस्ततो**

१. 'शेष'मिति नास्ति-ख.।

**देवा अभवन् पराऽसुरा भवत्यात्मना पराऽस्य [१]द्विषन् पाप्मा भ्रातव्यो भवति य एवं वेद ॥ ७ ॥**

'अथ' सर्वासां देवतानां पापविद्धत्वात् । इमं प्रसिद्धम् । आसन्यं आस्ये भवम् । आस्यशब्दाद्भवार्थे न्यप्रत्ययः यकाररूपव्यञ्जनलोपश्च । आस्ये अन्तरित्यग्रे निर्वचनात्। प्राणं मुख्यवायुम् । ऊचुर्देवाः 'त्वं न' इत्यादि प्राग्वत् । अविव्यत्सन् वेद्धुमैच्छन्। इच्छन्तः किमासन्नमित्यत आह– **विध्वंसमाना इति** ॥ प्राग्वत् सन्धीभूय वेधितुं प्राप्ता एते विशकलितास्सन्तः विष्वञ्चः वक्रगतयः भिन्नभिन्नमार्गगतिमन्तो विनेशुः अलक्षिता अभूवन् । तत्र दृष्टान्तः– **स यथेति** ॥ स विध्वंसनेन विष्वग्गतिप्रकारः यथा स्पष्टं तथोच्यत इत्यर्थः । 'अश्मानं' वज्रशिलाम् ऋत्वा प्राप्य लोष्टः पांसुपिण्डः विध्वंसेत यथा विशकलितावयवो भवेत् एवं ह वै एवमेवेति । ततोऽनन्तरं तेषां पलायितत्वाद्वा 'देवा अभवन्' लोकाधिपत्यादिभूतिमन्त आसन् । असुराः पराभवन् भूतिविहीना आसन् । योऽधिकारी एवं सर्वासुर-विध्वंसनहेतुततया प्राणं वेद । अस्य प्राणवेदिनः [१]द्विषन् भ्रातृव्यः शत्रुः पाप्मा । आत्मना परमात्मना । तत्प्रसादेनेति यावत् । पराभवति पराभूतो भवति ॥ ३-३-७ ॥

[मुख्यप्राण अयास्यादिनामधा]

**ते होचुः क नु सोऽभूद् यो न इत्थमसक्तेत्ययमास्येऽन्तरिति सोऽयास्य आङ्गिरसोऽङ्गानाꣳ हि रसः ॥ ८ ॥**

ततः किमासीदित्यत आह– **ते हेति** ॥ ते देवाः । यः इत्थं शत्रुविनाशद्वारा-ऽस्मद्भूतिहेतुत्वेन नोऽस्मान् असक्तः प्राप्नोत् सः क नु कुत्राभूत् । ह आश्चर्यम् इत्यूचुरन्योन्यमालोचितवन्तः । आलोच्यायमास्येऽन्तः मुखा-

---

१. 'विद्विषन्' इति ग. ।

न्तरेऽस्तीति निश्चक्रुरित्यर्थः। अत एव आस्येऽयत इत्ययास्यनाम वायोरित्याह– **सोऽयास्य इति** ॥ नामान्तरं चाह– **आङ्गिरस इति** ॥ तन्नाम निर्वक्ति। अङ्गानां प्राणिदेहानां रसो नियन्ता हि यतोऽत इति। अङ्गपदस्यैकारान्तादेशे अङ्गिरस इति सिद्धेः । स एवाङ्गिरसः। एतेनास्यास्यान्तरवस्थाने प्रयोजनमुक्तं भवति ॥ ३-३-८ ॥

**सा वा एषा देवता दूर्नाम दूरꣳ ह्यस्या मृत्युर्दूरꣳ ह वा अस्मान् मृत्युर्भवति य एवं वेद ॥ ९ ॥**

वायोर्महिमान्तरमाह– **सेति** ॥ सैषा वायुरूपा देवता । दूर्नाम वै । कुतः। अस्याः देवतायाः मृत्युर्दूरं हि यस्मात्तस्मादिति । दूरं करोतीत्यर्थे क्विप्यन्तलोपे दूरिति रूपसिद्धेः । दूरमित्यादि फलवाक्यं स्पष्टार्थम् ॥ ३-३-९ ॥

[प्राणस्य अनुग्रहेण देवानां जयः]

**सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्य यत्तासां दिशामन्तस्तद्गमयाञ्चकार तदासां पाप्मनो विन्यदधात्तस्मान्न जनमियान्नान्तमियान्न पाप्मानं मृत्युमन्ववायानीति ॥ १० ॥**

देवानामसुरकृतपापसत्त्वात्कथं ततो देवा अभवन्निति भूतिमत्त्वोक्तिरित्यत आह– **सा वा इति** ॥ सैषा वायुरूपा देवता । एतासां देवतानां पाप्मानं पापरूपं मृत्युमपहत्य वियोज्य । आसां दिशां प्राणिसञ्चारानुकूलदिशामन्तो यत्र समुद्रप्रान्त इति यावत्। तत् तत्र गमयाञ्चकार तत्र नीतवान् । आसां पाप्मनस्तत् तत्र । जनसङ्घेषु च विन्यदधात् प्राक्षिपत् । तस्मात् पाप्मनस्तत्र प्रक्षिप्तत्वादेव जनं जनसङ्घं अन्तं दिशामन्तं कुतो नेयादित्यत उक्तम्– **नेदिति** ॥ पाप्मानं मृत्युं नेत् नैवान्ववायानि प्राप्नवानीति भावेन नेयादित्यर्थः। तत्र गतौ पापान्वयः स्यादिति भावः ॥ ३-३-१० ॥

**सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्याथैनां मृत्युमत्यवहत् ॥ ११ ॥**

तासां पापं मृत्युमपहत्य किमकरोद्वायुरित्यत आह– **सा वा इति** ॥ **अथेति** ॥ तस्मादिति पापापहत्यनन्तरमिति वा । एनाः देवताः । मृत्युमति । अतिक्रम्य स्थितं ऊर्ध्वलोकमवहत् प्रापितवान् ॥ ३-३-११ ॥

**स वै वाचमेव प्रथमामत्यवहत्सा या यदा मृत्युमत्यमुच्यत सोऽग्निरभवत्सोऽयमग्निः परेण मृत्युमतिक्रान्तो दीप्यते ॥ १२ ॥**

एतदेव प्रत्येकं प्रत्येकं व्यनक्ति– **स वा इति** ॥ सः वायुः । प्रथमां पूर्वमुद्गातृतया विनियुक्तां वाचमेव वाङ्मानिनमग्निमेवात्यवहत् । मृत्युमिति शेषः । मृत्युमत्यमुच्यत । पापमृत्युमुक्ता सा वाक् यदा तदा सोऽग्निरभवत् अग्नि-लोकाधिपतिरभवत् । स्वपदे स्थितः स्वव्यापारं करोतीत्याह– **सोऽयमिति** ॥ परेण मुख्यवायुना ॥ ३-३-१२ ॥

**अथ घ्राणमत्यवहत्स यदा मृत्युमत्यमुच्यत स वायुरभवत्सोऽयं वायुः परेण मृत्युमतिक्रान्तः पवते ॥ १३ ॥ अथ चक्षुरवहत्तद् यदा मृत्युमत्यमुच्यत स आदित्योऽभवत्सोऽसावादित्यः परेण मृत्युमतिक्रान्तस्तपति ॥ १४ ॥**

एवमेवाग्रे तेन खण्डचतुष्टयेऽप्यर्थो ध्येयः ॥ घ्राणं नासिक्यवायुम् ॥ ३-३-१३,१४ ॥

**अथ श्रोत्रमत्यवहत् तद् यदा मृत्युमत्यमुच्यत ता दिशोऽभवꣳस्ता इमा दिशः परेण मृत्युमतिक्रान्ताः ॥ १५ ॥**

अतिक्रान्ता इत्यत्र स्वस्वव्यापारान् कुर्वन्तीति शेषः ॥ ३-३-१५ ॥

**अथ मनोऽत्यवहत् तद् यदा मृत्युमत्यमुच्यत स चन्द्रमा अभवत्सोऽसौ चन्द्रः परेण मृत्युमतिक्रान्तो भात्येवꣳ ह वा एनमेषा देवता मृत्युमतिवहति य एवं वेद ॥ १६ ॥**

एवं ह वा एनमिति फलवाक्यं व्यक्तार्थम् ॥ ३-३-१६ ॥

[मुख्यप्राण एव देवान्नदः]

**अथात्मनेऽन्नाद्यमागायद्यद्धि किञ्चान्नमद्यते अनेनैव तदद्यत इह प्रतितिष्ठति ॥ १७ ॥**

अथ देवतानामभीष्टप्रापणानन्तरं आत्मने स्वस्मै अन्नाद्यं अन्नाख्यमद्यमदनीय-मुद्दिश्य तत्प्राप्तये आगायत् । गानं सफलमासीदित्याह– **यद्धि किञ्चेति** ॥ यत्किञ्च प्राणिभिरन्नमद्यते अनेनैव प्राणेनैव तदन्नमद्यते कथं इह प्राणिषु प्रतितिष्ठति प्राणो यत इति योज्यम् ॥ ३-३-१७ ॥

**ते देवा अब्रुवन्नेतावद् वा इदꣳ सर्वं यदन्नं तदात्मन आगासीरनु नोऽस्मिन्नन्न आभजस्वेति ते वै माऽभिसंविशतेति तथेति तꣳ समन्तं परिण्यविशन्त तस्माद्यदनेनान्नमत्ति तेनैतास्तृप्यन्त्येवꣳ ह वा एनꣳ स्वा अभिसंविशन्ति भर्ता स्वानाꣳ श्रेष्ठः पुर एता भवत्यन्नादोऽधिपतिर्य एवं वेद य उ हैवं विदꣳ स्वेषु प्रति प्रति बुभूषति न हैवालं भार्येभ्यो भवत्यथ य एवैतमनुभवति यो वै तमनु भार्यान् बुभूषति स हैवालं भार्येभ्यो भवति ॥ १८ ॥**

ते देवाः वागादयः । भो प्राण यदन्नं प्राणिभिरद्यमानं इदमेतावद्वै एतावदेव नातोऽन्यदस्ति । तत्सर्वमात्मन आगासीः । अस्मिन्नन्ने अनु पश्चात् नोऽस्मान् आभजस्व भागिनः कुर्वित्यब्रुवन् इति तैरुक्तः प्राणोऽब्रवीत् । ते अन्नकाङ्क्षिणो

यूयं मा मां अभि अभितः संविशत प्राणिदेहेषु प्रविशतेति। तथेत्युक्त्वा समन्तं समन्ततः परिण्यविशन्त। तस्मादन्नभागितया प्राणिषु निविष्टत्वा-देवानेन प्राणेन प्रेरितः प्राणी यदन्नमत्ति तेनान्नेन एता वागादयो देवता-स्तृप्यन्ति । एतद्वेदितुः फलमाह– **एवमिति** ॥ योऽधिकारी एवमुक्त-गुणकं प्राणं वेद जानाति एनं प्राणज्ञानिनं स्वाः ज्ञातयः अभितः संविशन्ति उपजीवकत्वेन तं परिवार्य तिष्ठन्तीत्यर्थः। कथमेवं ह वै यथा प्राणं वागादयोऽ-भिविशन्त्येवमेवेति । स्वानां ज्ञातीनाम् । भर्ता रक्षक इति यावत्। श्रेष्ठः पुर एता अग्रेसरोऽन्नादोऽधिपतिश्च भवतीति । प्राणज्ञानिप्रतीपकारिणो अनिष्टमाह– **य इति**॥ य उ यः कश्चित् । एवंविदं प्राणज्ञानिनं प्रति स्वेषु धनविषये प्रतिबुभूषति प्रतिकूलो भवितुमिच्छति । स भार्येभ्यो भर्तव्य-जनपोषणायेति यावत् । नैवालं ह नैव समर्थो भवति । दरिद्रो भवती-त्यर्थः। प्राणज्ञानिन्यनुकूलस्येष्टमाह– **अथेति** ॥ अर्थान्तरेऽयमथशब्दः। य एनं प्राणविदमन्वेव भवति तस्यानुकूल एव भवति यस्तं वै तमेवानु अनुसृत्य। भार्यान् बुभूषति मत्पोष्या एते भवन्त्वितीच्छति। स एव भार्येभ्योऽलं समर्थो भवति । पोषणशक्तो भवति खल्विति ॥ ३-३-१८॥

[आयास्यादिनामानि प्राणे एव]

**सोऽयास्य आङ्गिरसोऽङ्गानाᳪं हि रसः प्राणो वा अङ्गानाᳪं रसः प्राणो हि वा अङ्गानाᳪं रसस्तस्माद् यस्मात् कस्माच्चाङ्गात्प्राण उत्क्रामति तदेव तच्छुष्यत्येष ह वा अङ्गानाᳪं हि रसः ॥ १९ ॥**

उद्गाने वायोरलाभे किं कार्यमित्यतोऽयास्यादिशब्दमुख्यार्थवाय्वधिष्ठान-भूतानयास्यादिऋषीनुद्गातृत्वेन कुर्यादिति भावेन महिमाधिक्याय च तान् शब्दान् वायौ निर्वक्ति– **स इति** ॥ सोऽयास्यः आङ्गिरसः कुतः । हि यतोऽङ्गानां प्राणि-देहानां रसो नियन्ता स इति । कः योऽङ्गानां रसत्वहेतुनाङ्गिरस

इत्युच्यत इत्यत आह– **प्राणो वा इति** ॥ प्रसिद्धमेतदित्याह– **प्राणो हि वा इति** ॥ तदुपपादयति– **तस्मादिति** ॥ अङ्गानां सारभूतत्वात् उत्क्रामति ऊर्ध्वं गच्छति । तदेव तदैव । तत् अङ्गम् । निगमयति– **एष हीति** ॥ ३-३-१९ ॥

**एष उ वा बृहस्पतिर्वाग्वै बृहती तस्या एष पतिस्तस्मादु बृहस्पतिः ॥ २० ॥**

एष वायुरेव बृहस्पतिः उ बृहस्पतिनामा खलु कुतः? वागेव बृहती वाग्देवता भारती सर्वस्त्रीगुणबृंहितत्वाद्बृहती । तस्याः एष वायुः पतिर्यस्मात्तस्मादु तस्मादेव बृहस्पतिः । 'तद् बृहतोः करपत्योश्चोरदेवतयोस्सुट् तलोपश्च' (सि.कौ. उ.ग.सू. १०७२) इति शाब्दिकोक्तेः ॥ ३-३-२० ॥

**एष उ एव ब्रह्मणस्पतिर्वाग्वै ब्रह्म तस्या एष पतिस्तस्मादु ब्रह्मणस्पतिः ॥ २१ ॥**

महिमाधिक्यार्थं शब्दान्तराण्यपि प्रतिज्ञापूर्वं वायौ निर्वक्ति– **एष उ एवेत्यादिना** ॥ अनन्तवेदमानित्वाद्वा ब्रह्मणा विष्णुना बृंहितत्वात्पूर्णत्वाद्वा वाग्वै ब्रह्मेत्युक्तिः । शिष्टं प्राग्वत् ॥ ३-३-२१ ॥

**[भारत्या सहार्धनारीपुमात्मना स्थितो वायुः साम उच्यते]**

**एष उ एव साम वाग्वै सा अम एषः सा चामश्चेति तत्साम्नः सामत्वं यद्वेव समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिलोकैः समोऽनेन सर्वेण तस्माद्वेव सामाश्नुते साम्नः सायुज्यꣳ सलोकतां जयति य एवमेतत्साम वेद ॥ २२ ॥**

भारत्यर्धनारीपुमात्मना कालविशेषे स्थितस्य वायोः सामोद्गीथपदवाच्यताप्यस्तीति भावेन तच्छब्दद्वयं प्रतिज्ञापूर्वकं निर्वक्ति– **एष उ एव सामेत्यादिना** ॥

स्त्रीषु सारत्वाद् वाग्वै सेत्युक्ता । एष वायुरप्रमेयत्वादम इत्युच्यत इत्यर्थः । सा चामश्चेति यदिति शेषः । भारत्या सह वायुः सामेति पदद्वयवाच्यार्धनारीपुमात्मकैकदेहतया वर्तत इति यदिति यावत् । तत् भारत्याऽर्धदेहात्मना वर्तनम् । साम्नः सामपदवाच्यस्य वायोः सामत्वं सामपदप्रवृत्तिनिमित्तमित्यर्थः । प्रकारान्तरेण सामनाम निर्वक्ति वायौ– **यद्वेति** ॥ यद्वेति पक्षान्तरवाचिपदं समः प्लुषिणेत्यादिवाक्यपञ्चकेनाप्यन्वेति। इवशब्दस्सम इवेत्यन्वेति । तन्मात्रपरिमाणत्वाभावादिवशब्दः । प्लुषिणा बिन्दुना । नागेन गजेन । किं बहुनोक्तेनेति भावेनाह– **समोऽनेन सर्वेणेति** ॥ यद्यद्वस्तु लोके यद्यत्परिमाणतया प्रमितं अनेन प्रमितेन सर्वेण समस्तस्मात्तत्तद्वस्तु समत्वादेव साम उ सामनामकः खल्विति ज्ञानिनः फलमाह– **अश्नुत इति** ॥ योऽधिकारी । एवं निरुक्तप्रकारेण । एतत् एतस्मादुक्तनिमित्तात्साम सामनामकं वायुम् । वेद स इति शेषः । साम्नो वायोस्सायुज्यमश्नुते प्राप्नोति । सलोकतां समानलोकतां जयति प्राप्नोति । अधिकारिभेदेन फलभेदः ॥ ३-३-२२ ॥

[प्राण उद्गीथशब्दवाच्यः]

**एष उ वा उद्गीथः प्राणो वा उत् प्राणेन हीदꣳसर्वमुत्तब्धं वागेव गीथोच्च गीथा चेति स उद्गीथः ॥ २३ ॥**

प्राण उदिति कस्मादुच्यत इत्यत आह– **प्राणेन हीति** ॥ उत्तब्धं धृतं वर्तत इत्यर्थः । देवादिभिर्गीयमानत्वाद्वागेव गीथेत्युच्यत इति ज्ञेयम् । शिष्टं प्राग्वत् ॥ ३-३-२३ ॥

[उद्गातृषु सामगायकः प्राण एव]

**तद्धापि ब्रह्मदत्तश्चैकितानेयो राजानं भक्षयन्नुवाचायं त्वस्य राजा मूर्धानं विपातयताद्यदीतोऽयास्य आङ्गिरसोऽन्येनोदगायदिति वाचा च ह्येव स प्राणेन चोदगायदिति ॥ २४ ॥**

अयास्यादिषु स्थित्वोद्गानकर्ता वायुरिति भावेन ते शब्दास्तत्र निरुक्ताः। तत्र स्थित्वा वायुरेवोद्गातेति कुत इत्यतः केनचिच्छपथेन तस्य समर्थनादित्याह– **तद्धापीति** ॥ तत् अयास्यादिषु स्थित्वोद्गाता वायुरित्येतत् । हापि प्रसिद्धमपि। शपथेन स्थापितवानित्याह वेदपुरुषः । कथं चैकितानेयः चिकितानापत्यं ब्रह्मदत्तनामा मुनिः राजानं सोमरसं भक्षयन्नुवाच । किमिति? विश्वसृजां यज्ञे इतः प्राणादन्येन प्रेरितोऽयास्याङ्गिरस उदगायदिति यदि तर्हि त्यस्य तस्य सोमरसं भक्षयतो म इति शेषः । अयं राजा सोमाभिमानी चन्द्रः । मूर्धानं विपातयतात् पातयेदित्युवाचेत्यर्थः। तर्हि केनाविष्ट उदगायदित्यत आह– **वाचा च ह्येवेति** ॥ ३-३-२४ ॥

**[सामस्वरः प्राणाभिमन्यमानः]**

**तस्य हैतस्य साम्नो यः स्वं वेद भवति हास्य स्वं तस्य वै स्वर एव स्वं तस्मादार्त्विज्यं कुर्यात्तस्माद्यज्ञे स्वरवन्तं दिदृक्षन्त एवाथो यस्य स्वं भवति भवति हास्य स्वं य एवमेतत्साम्नः स्वं वेद ॥ २५ ॥**

अयास्यादीनामभावे प्राणाभिमन्यमानस्वरवन्तमृत्विजं कुर्यादिति भावेन फलोक्तिपूर्वं स्वरस्य प्राणाभिमन्यमानत्वमाह– **तस्येति** ॥ एष उ एव सामेत्यादिनोक्तस्य सामनाम्नो वायोः स्वं वायुस्वामिकं गृहकोशादिवित्तं वेद अस्य तद्वेदिनः स्वं वित्तं भवति ह खलु किं तस्य स्वमित्यत आह– **तस्य वै स्वर एव स्वमिति** ॥ गृहकोशाद्यभिमानिरूपमुद्गातृस्वरे सन्निहितं भवतीत्यर्थः। तस्मात् स्वरस्य प्राणस्वत्वात्तदभिमानितया तदधिष्ठानत्वादिति यावत्। आर्त्विज्यं उद्गातृरूपऋत्विक्कर्म । करिष्यन् वाचि स्वरमिच्छेत इच्छेत् । ततः किमित्यत आह– **तया वाचेति** ॥ तस्मात् स्वरवत एव ऋत्विक्त्वात् स्वरवन्तमेव दिदृक्षन्ते याजका इति योजना । स्वरवत ऋत्विक्त्वेऽपि तद्दिदृक्षा कुत इत्यत उक्तम्– **अथो यस्येति** ॥ यस्य स्वरवत

ऋत्विजस्सकाशात् स्वं गृहकोशादिवित्तम् । अस्य यजमानस्य भवति अथो तस्मादिति । प्रागुक्तं फलं पुनर्वचनेन निर्धारयति– **भवति हास्य स्वमिति** ॥ ३-३-२५ ॥

**तस्य हैतस्य साम्नो यः सुवर्णं वेद भवति हास्य सुवर्णं तस्य वै स्वर एव सुवर्णं भवति हास्य सुवर्णं य एवमेतत्साम्नः सुवर्णं वेद ॥ २६ ॥**

वायोर्गृहकोशादिवित्तमानिरूपं स्वरे सन्निहितम् । भूषणस्वर्णमानि च तदित्याह– **तस्य हैतस्येति** ॥ सुवर्णं भूषणस्वर्णमानिरूपं वेदेत्यर्थः ॥ **स्वर एव सुवर्णमिति** ॥ सुवर्णमानी स्वरमानी चेत्यर्थः । पुनः फलोक्तिर्नियमार्था ॥ ३-३-२६ ॥

**तस्य हैतस्य साम्नो यः प्रतिष्ठां वेद प्रति ह तिष्ठति तस्य वै वागेव प्रतिष्ठा वाचि हि खल्वेष एतत्प्राणः प्रतिष्ठितो गीयतेऽन्न इत्युहैक आहुः ॥ २७ ॥**

गानकाले प्राणः क तिष्ठतीत्यतः फलोक्तिपूर्वकं स्थानमाह– **तस्येति** ॥ प्रतिष्ठां पीठम् ॥ **वागेवेति** ॥ वागिन्द्रियमेव प्रतिष्ठा गानकाले पीठमित्यर्थः । एतत्प्राणः एष प्राणः अन्यदा त्वन्ने प्रतिष्ठित इत्येक आहुः । उ हेति निपातः कालविशेषार्थः ॥ ३-३-२७ ॥

[तमसो मा ज्योतिर्गमय इति मन्त्रार्थः]

**अथातः पवमानानामेवाभ्यारोहः स वै खलु प्रस्तोता साम प्रस्तौति स यत्र प्रस्तूयात्तदेतानि जपेदसतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योऽर्माामृतं गमयेति स यदाहासतो मा सद्गमयेति मृत्युर्वा असत्सदमृतं मृत्योर्माऽमृतं गमयामृतं**

**[१]मा कुर्वित्येवैतदाह तमसो मा ज्योतिर्गमयेति मृत्युर्वै तमो ज्योतिरमृतं मृत्योर्माऽमृतं गमयामृतं मां कुर्वित्येवैतदाह ॥ २८ ॥**

अथेति महिमान्तरोक्तिप्रारम्भे । अतः उद्गानेन निर्विघ्नं यज्ञसमापकत्वात् । पवमानानामेव मुख्यवायुत्वयोग्यानामेव । अभ्यारोहः मुक्तौ सर्वाधिक्यारोहणम् । स्वसहमुक्तसर्वपूज्यत्वं भवतीति यावत् । 'सर्वेऽस्मै देवा बलिमावहन्ति' (तै.उ. १-५-३) इति श्रुतेः । वायुपदयोग्यस्य प्रस्तोतुर्जप्यानाह– **स वै खल्विति** ॥ स वायुपदयोग्यः खलु प्रस्तोता साम्न आद्यक्षरोच्चारणकर्ता साम प्रस्तौति उपक्रमते । स यत्र यदा प्रस्तूयात्तत्तदा एतानि यजूंषि जपेत् । तान्याह– **असत इति** ॥ प्रथमवाक्यगतपदयोरर्थमाह– **मृत्युर्वा इति** ॥ वाक्यार्थमाह– **मृत्योर्माऽमृतमिति** ॥ मृत्योर्दुःखात्मकात् अमृतमानन्दम् । मा मां गमय प्रापय । फलितमाह– **अमृतं मेति** ॥ मामित्यर्थः । इत्येवैतत् असतो मा सदिति वाक्यमाहेत्यर्थः । द्वितीयं यजुरपि प्रतीकत उपादाय पदार्थं वाक्यार्थं चाह– **तमस इति** ॥ ३-३-२८ ॥

**मृत्योर्माऽमृतं गमयेति नात्र तिरोहितमिवास्त्यथ यानीतराणि स्तोत्राणि तेष्वात्मनेऽन्नाद्यमागायेत्तस्मादु तेषु वरं वृणीत यं कामं कामयेत तꣳ स एष एवं विदुद्गाताऽऽत्मने वा [२]यजमानाय वा यं कामं कामयते तमागायति तद्धैतल्लोकजिदेव न हैवालोक्यताया आशास्ति य एवमेतत्साम वेद ॥ २९ ॥**

इति उद्गीथब्राह्मणम् ॥ ३-३ ॥

अज्ञानाख्यमृत्युस्तमः वै प्रसिद्धं ज्योतिर्ज्ञानं मृत्योरज्ञानात् मा मां अमृतं

---

१. **'मा'** इति नास्ति ग. । २. **'यजमानाय'** इति नास्ति - क. ।

ज्ञानं गमय अमृतं ज्ञानिनं मा मां कुरु । तृतीयवाक्ये मृत्युशब्दामृतशब्दयोः प्रसिद्धमरणतदभावार्थकतया मृत्योर्मरणादमृतं मृतिहीनं मुक्तं कुर्वित्यर्थस्य स्पष्टत्वादाह– **नात्र तिरोहितमिवास्तीति** ॥ तिरोहितमिव नास्ति । अतिरोहितमेवेत्यर्थः । अथेत्यर्थान्तरे । तदाह– **यानीति** ॥ स वै खलु प्रस्तोतेत्यनुषज्यते । प्रागुक्तयजुर्मन्त्रत्रयादितराणि । स्तोत्राणि प्रस्तावेतराणि वा । सामयुक्तऋक्शंसनरूपाणि । तेषु तैः । आत्मने यजमानाय । अन्नाद्यमुद्दिश्यागायेत् । यजमानो वायुत्वयोग्येनोद्गाने कृत आत्मनो अन्नाद्यमभीप्सेदित्यर्थः । तस्मादु वायुपदयोग्यस्य समर्थत्वादेव एवंवित् वायुपदयोग्यमाहात्म्यविद्यजमानः यं कामं काम्यं कामयेत इच्छति तं कामं प्रति तेषु वायुपदयोग्येषूद्गातृषु सत्सु वरं वृणीत वृङ् सम्भक्तौ सम्भजेत् । तेषु कामवरणममोघमेवेत्याह– **एष इति** ॥ [१]स एषः मुख्यवायुत्वयोग्यः । उद्गाता सन् आत्मने यजमानाय वा यं कामं कामयते तमागायति तं प्राप्नोत्येवेति । न केवलमैहिकं किन्तु तद्धैतल्लोकजिदेव तस्मादुद्गातुस्सकाशात्प्रसिद्धपरलोकप्राप्तिमानेव भवतीत्यर्थः । योऽधिकारी एवमुक्तदिशा एतत् अर्धनारीपुमात्मत्वादिमहिमायुक्तम् । साम सामनामकं वायुं वेद तस्यालोक्यतायाः लोकरहितायाः आशा नैवास्ति ह । तस्येष्टलोकराहित्यायाशा शत्रुणा न कार्येत्यर्थः ॥ ३-३-२९ ॥

इति उद्गीथब्राह्मणम् ॥ ३-३ ॥

## अथ प्राजापत्यब्राह्मणम्

[चतुर्मुखमहिमा]

**आत्मैवेदमग्र आसीत् पुरुषविधः सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत्सोऽहमस्मीत्यग्रे व्याहरत्ततोऽहं नामाभव-**

---

१. 'स एष' इति नास्ति - क. ।

**तस्मादप्येतर्ह्यामन्त्रितोऽहमयमित्येवाग्र उक्त्वाऽथान्यन्नाम प्रब्रूते यदस्य भवति स यत्पूर्वोऽस्मात्सर्वस्मात्सर्वान् पाप्मन औषत्तस्मात्पुरुष ओषति ह वै स तं योऽस्मात्पूर्वो बुभूषति य एवं वेद ॥ १ ॥**

सोऽकामयत भूयसा यज्ञेनेत्यत्र प्रकृतस्य ब्रह्मणो महिमानमाह– **आत्मेत्यादिना** ॥ इदमग्रे अस्य जगतोऽग्रे आत्मैव परमात्मैवासीत् । नैवेह किञ्चनेत्यत्रेवात्रैवकाराभिप्रायो ज्ञेयः । तत आत्मनः पुरुषविधः पुरुषो विष्णुस्तद्विधः तत्प्रकारो ब्रह्माऽऽसीदित्यनुषङ्गः । पुरुषविधत्वं तु श्रीब्रह्मादितो विष्णोराधिक्यमिव रुद्रादितोऽप्याधिक्यमस्तीति भावेनेति ज्ञेयम् । सः ब्रह्मा सर्वा दिशोऽनुवीक्ष्य दृष्ट्वा आत्मनः स्वस्मादन्यन्नापश्यत् । सः अन्यदपश्यन् ब्रह्मा अन्यस्य सर्वस्य हातुं शक्यत्वेऽपि न स्वरूपस्य तथात्वमिति स्वस्वरूपस्य स्वाहेयत्वं स्मरन्नहमस्मीत्यग्रे व्याहरत् । ततस्तथाव्याहरणाद्धेतोः अहंनामाभवत् स इत्यर्थः । तस्मात् ब्रह्मणाग्रेऽहमिति व्याहरणादेव । एतर्ह्यपि इदानीमपि आमन्त्रितः कस्त्वमरे इति सम्बोधितः 'अहं मम' इत्यादावुक्त्वा 'अथ' अनन्तरं यदस्य भवति तत् डित्थादिनाम प्रब्रूते । न केवलमहं नामाभूद्ब्रह्मा किन्तु पुरुषनामा चाभूदिति भावेन तन्नाम तस्मिन्निर्वक्ति– **स इति** ॥ स ब्रह्मा । अस्मात्सर्वस्मात् । सर्वजगतो यद्यस्मात्पूर्वस्सन् सर्वान् पाप्मन औषत् अदहत् । तस्मात्पुरुषनामाभवदित्यर्थः । उष दाहे । पुरूणि पापानि ओषति दहतीति पुरुषः । य एवं पुरुषविधं ब्रह्माणं वेद सः ज्ञानी अस्मात् ज्ञानिजनात् यः [१]'पूर्वस्सन् बुभूषति स्वाभिमतं पूर्वं प्राप्तुमिच्छति तं ओषति दहतीत्यर्थः ॥ ३-४-१ ॥

---

१. **'पूर्वस्सन्'** इति न. - ख. ।

[चतुर्मुखब्रह्मणः न भयमस्ति]

**सोऽबिभेत्तस्मादेकाकी बिभेति स हायमीक्षाञ्चक्रे यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति तत एवास्य भयं वीयाय कस्माध्यभैष्यद् द्वितीयाद् वै भयं भवति ॥ २ ॥**

सः ब्रह्मा। एकाकित्वादबिभेत् भीतिमानभवत्। तस्मादिदानींतनोऽप्येकाकी बिभेति। सोऽयं भीतो ब्रह्मा। ईक्षां विमर्शं चक्रे। ह किल। विमर्शप्रकारमेवाह– **यदिति** ॥ यत् यस्मात्। 'मदन्यत्' मम विरोधिभूतमन्यत् नास्ति हरेस्सत्त्वेऽपि तस्यातिप्रियत्वात्। रुद्रादिजगतः इतः परं मयैव सृज्यत्वात्। अतः कस्माद्धेतोर्नु इदानीं बिभेमीति। तत एव विमर्शादेव भंय वीयाय अपजगाम। वेदपरुषस्तत्र युक्तिमाह– **कस्मादिति** ॥ कुतः कारणा[१]दभेष्यत् अबिभेत्। द्वितीयात् विरोधिनोऽन्यस्माद्भयं भवति। वै खलु। नह्यस्य विरोध्यस्तीति ॥ २ ॥

[ब्रह्मवाणीभ्यां देवसृष्टिः]

**स वै नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छत्स हैतावानास यथा स्त्रीपुमाꣳसौ सम्परिष्वक्तौ स इममेवात्मानं द्वेधाऽपातयत्ततः पतिश्च पत्नी चाभवतां तस्मादिदमर्धबृगलमिव स्व इति ह स्माह याज्ञवल्क्यस्तस्मादयमाकाशः स्त्रिया पूर्यत एव ताꣳ समभवत्ततो मनुष्या अजायन्त ॥ ३ ॥**

वाण्युत्पत्तिमुपोद्घातपूर्वकमाह– **स इति** ॥ सः ब्रह्मा एकाकित्वान्नैव रेमे। तस्मात् एकाकिनो रमणाभावात् स ब्रह्मा द्वितीयं पत्न्याख्यं वस्तु स्त्रीपुमांसौ ब्रह्माणीब्रह्माणौ। संपरिष्वक्तौ आलिङ्गितौ। यथा यावत्परिमाणौ भवतः। एतावान् तादृशपरिमाणदेहवानास। ह किल। स ब्रह्मा इममेवात्मानं स्थूलतां प्राप्तमेव देहं द्वेधाऽपातयत् द्विधा कृत्वा पतितमकरोत्। ततः

---

१. 'अभेष्यत्' इति नास्ति - ख.।

पातनाद्धेतोः ब्रह्मब्रह्माण्यौ पतिश्च पत्नी चेति नामानावभवताम् । 'तस्मात्' अनयोरेकदेहविभक्तदेहवत्त्वात् [१]'इदं' देहद्वयजन्यं 'स्वः' सुखम् । अर्धबृगळ-मिव एकपात्रार्धद्वयस्थितघृतवत् इति याज्ञवल्क्य आह स्मेति कण्वो वक्तीति ज्ञेयम् । तस्मादित्युक्त्वा यस्मादिति ज्ञेयम् । यस्मादयमाकाशोऽवकाशः स्त्रिया पूर्यते । अनेकप्रजाजननेनेति भावः । तस्मात्तां प्रजोत्पत्तये समभवत् तया सम्भोगमकरोत् । ततः सम्भोगानन्तरं मनुष्याः मनु अवबोधने । तत उष्यप्रत्ययः । बोधप्रधाना देवाद्या अजायन्त ॥ ३-४-३ ॥

**सो हेयमीक्षाञ्चक्रे कथं नु माऽऽत्मन एव जनयित्वा सम्भवति हन्त तिरोऽसानीति सा गौरभवदृषभ इतरस्ताꣳ समेवाभवत्ततो गावो अजायन्त बडवेतराऽभवदश्ववृष इतरो गर्दभीतरा गर्दभ इतरस्ताꣳ समेवाभवत्तत एकशफमजा-यताऽजेतराऽभवद् बस्त इतरोऽविरितरामेष इतरस्ताꣳस-मेवाभवत्ततोऽजावयोऽजायन्तैवमेव यदिदं किञ्च मिथुन-मा पिपीलिकाभ्यस्तत्सर्वमसृजत ॥ ४ ॥**

आख्यायिकापूर्वं तिर्यगादिसृष्टिमाह– **सो हेति** ॥ सा उ ह इयमिति विभागः । सेयं ब्रह्मसृष्टा ब्रह्मानुभूता वाणी ईक्षाञ्चक्रे व्यचारयद्ध । कथं मा माम् । आत्मन एव जनयित्वा ब्रह्मा कथमिदानीं सम्भवति अनुभवति हन्त आश्चर्यम् । तिरोसानि तिरोभवानीतीक्षाञ्चक्र इत्यन्वयः । अत्र तात्पर्यं 'सर्व-ज्ञापि तु सा देवी' इत्यादिना 'स्त्रीस्वभावं दर्शयन्ती साऽधर्ममिव चैक्षत । नानासृष्टिप्रसिद्ध्यर्थं' इत्यन्तेन [२]भाष्येण व्यक्तम् । सा गौरभवदित्यादि तु

---

२. '**इदमित्यारभ्य यस्मादित्यन्तो**' भागः नास्ति - ख. । २. सर्वज्ञापि तु सा देवी विरिञ्चे भक्तिमत्यपि । तद्भार्यतामात्मनश्च नितरां धर्ममीक्षती । अनाद्यनन्तसम्बन्धमुभयोरपि जानती । स्त्रीस्वभावं दर्शयन्ती साऽधर्ममिव चैक्षत ॥

व्यक्तम् । इतरो ब्रह्मा । तां समेव तामेव । समभवदित्यर्थः। अश्ववृषोऽश्व-श्रेष्ठः तां समेवाभवदित्यनुषज्यते। एकशफत्वैकजात्याक्रान्तसृष्ट्युक्त्यै द्वयोस्त्य-नन्तरं तां [१]समेवाभवदित्युक्तिः । एवमजेत्यत्रापि ज्ञेयम् । आपिपीलिकाभ्यो मिथुनं मिथुनीभावयोग्यं । यदिदं किञ्च जगदस्ति । तत्सर्वं एवमुक्तप्रकारेण। तत्तन्मिथुनभावोपगमेनासृजत ॥ ३-४-४ ॥

**सोऽवेदहं वाव सृष्टिरस्म्यहꣳ हीदꣳ सर्वमसृक्षीति ततः सृष्टिरभवत्सृष्ट्याꣳहास्यैतस्यां भवति य एवं वेद ॥ ५ ॥**

सः ब्रह्मा । अवेत् व्यजानात् । कथम् अहं वाव अहं खलु । सृष्टिः सृष्टि-नामास्मि । हि यस्मात् । इदं सर्वमापिपीलिकान्तम् । अहं सर्वमसृक्षि सृष्ट-वानिति योजना । सृजतेः क्तिच् क्तौ च संज्ञायामिति कर्तरि क्तिच्प्रत्यये सृष्टि-रिति सिद्धेः । इति हेतोः सृष्टिरस्मीत्यवेत् । यत एवमवेत् ततस्सृष्टिनामा-भवदिति वेदपुरुषवचनम् । योऽधिकारी एवं सर्वसर्जनहेतुना सृष्टिनामानं ब्रह्माणं वेद जानाति स अस्य ब्रह्मण एतस्यां सृष्ट्यां रुद्रादिपिपीलिकान्तसृष्टौ भवति। साक्षाद्ब्रह्मसृष्टानां मध्ये स्वयोग्यतानुरोधेन तत्पुत्रो भवतीत्यर्थः ॥ ५ ॥

[पाचकाग्निसृष्टिः]

**अथेत्यभ्यमन्थत्स मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजत तस्मादेतदुभयमलोमकमन्तरतो लोमका हि योनिरन्तर-तस्तद्यदिदमाहुरमुं यजामुं यजेत्येकैकं देवमेतस्यैव सा विसृष्टिरेष उ ह्येव सर्वे देवा अथ यत्किञ्चेदमार्द्रं तद्रेतसोऽ-सृजत तदु सोम एतावद् वा इदमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नादः सैषा ब्रह्मणोऽतिसृष्टिर्यच्छ्रेयसो देवान-**

---

१. समेवेत्युक्तिः - क. ।

**सृजताथ यन्मर्त्यः सन्नमृतानसृजत तस्मादतिसृष्टिरति-सृष्ट्याꣳ हास्यैतस्यां भवति य एवं वेद ॥ ६ ॥**

**इति प्राजापत्यब्राह्मणम् ॥ ३-४ ॥**

भोक्तृसृष्टिमुक्त्वा पाचकाग्निसृष्टिमाह– **अथेति** ॥ भोक्तृसृष्ट्यनन्तरं इति अन्नादमन्नं च सृजामीत्यचिन्तयदितीति शब्दार्थः । ततः किमकरोदित्यत आह– **अभ्यमन्थदिति** ॥ ओष्ठद्वयं हस्तद्वयं च परस्परं मथितमकरोदिति योज्यम् । स ब्रह्मा मुखात् मुखरूपाद्योनेः कारणात् मथितहस्ताभ्यां चाग्निमसृजत। ततोऽग्निजन्मयोनित्वादेतदुभयं ओष्ठद्वयं हस्तद्वयं च अन्तरतोऽलोमकम् । तावताऽलोमकता कुतः? हि यतो योनिरन्तरतोऽलोमका लोके दृष्टा अत इति । ब्रह्मणो जगत्स्रष्टृत्वं न स्वसामर्थ्यात् किन्तु भगवत्प्रसादादित्याह– **तद्यदिदमिति** ॥ एकैकं देवमुद्दिश्यामुं रुद्रं यजामुमिन्द्रं यजेति यत् सा विसृष्टिः प्रेषोक्तिस्तस्यैव ब्रह्मण एव । कुतः । हि यस्मादेष ब्रह्मैव सर्वे देवाः सर्वदेवानां हेतुतया स्वामित्वेन च सर्वे देवाः इत्युक्त इति यदाहुर्वेदविदः, इदं तत् तस्मादीश्वरप्रसादादिति योजना । अन्नसृष्टिमाह– **अथेति**॥ अथ पाचकाग्निसृष्ट्यनन्तरं यत्किञ्चेदमार्द्रं द्रवात्मकमन्नम् । तद्रेतसोऽसृजत तदार्द्रम् । सोम उ सोमाभिमन्यमानमेव । पाच्यपाचकप्रजानां सृष्ट्युक्त्या सर्वं सृष्टमासीदित्याह– **एतावदिति** ॥ अन्नं चान्नादश्च प्रजाश्चेत्युपलक्ष्यत [१]इति यत् इदमेतावद्वै एतावदेव खलु सृज्यमित्यर्थः । अन्नमन्नादः क इत्यत आह– **सोम एवान्नमग्निरन्नाद इति** ॥ अन्नशब्दितार्द्रवस्तुनोऽनार्द्रतया पचनकर्तेत्यर्थः । जाठराग्न्यभिप्रायेण वेयमुक्तिः। ब्रह्मकर्तृका देवादिसृष्टिर्न केवलं सृष्टिमात्रं किन्त्वतिसृष्टिरपीत्याह– **सैषेति** ॥ ब्रह्मणो ब्रह्मसम्बन्धिनी सैषा सृष्टिरतिसृष्टिः । स्वस्वरूपातिक्रान्तसृष्टिः । कथम् । यद्यस्माच्छ्रेयसः स्वस्मादुत्तमान् देवानसृजत अत इति योज्यम् । देवानां विरिञ्चादुत्तमत्वं तस्यावमत्वं वा

१. **'इति इत्यारभ्य अग्निरन्नाद इत्यन्तो'** भागः नास्ति - ख. ।

कथमिति पृच्छति– **अथेति** ॥ उत्तरमाह– **यदिति** ॥ [१]यद्यस्मान्मर्त्यः सन् अल्पायुष्ट्वादिमर्त्यधर्मोपेतस्सन् । वयोमात्राधिकान् अमृतान् देवानसृजत । तस्मादतिसृष्टिरासीदित्यर्थः । पुरुषाकारतान्तरमल्पकालेनैव वृषभाद्याकारत्वमाप्तवानिति कृत्वा मर्त्यधर्मत्वमस्य ज्ञेयम् । योग्यतया देवापेक्षया श्रेयानिति भावः । ज्ञातुः फलमाह– **अतीति** ॥ योऽधिकारी एवमुक्तरीत्या अतिसृष्टिं वेद सोऽस्य एतस्यामतिसृष्ट्यां देवसम्बन्धिसृष्ट्यां भवति देवलोके जायत इत्यर्थः ॥ ३-४-६ ॥

इति प्राजापत्यब्राह्मणम् ॥ ३-४ ॥

## अथ अव्याकृतब्राह्मणम्

[गुणपूर्णत्वेन हरिरुपास्यः]

**तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियतासौ नामायमिदꣳ रूप इति तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियतेऽसौ नामायमिदꣳरूप इति स एष इह प्रविष्ट आनखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः स्याद्विश्वम्भरो वा विश्वम्भरकुलाये तं न पश्यन्त्यकृत्स्नो हि स प्राणन्नेव प्राणनामा भवति वदन् वाक् पश्यंश्चक्षुः शृण्वन् श्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येव स योऽत एकैकमुपास्ते न स वेदाकृत्स्नो ह्येषोऽत एकैकेन भवत्यात्मेत्येवोपासीतात्र ह्येते सर्व एकं भवन्ति तदेतत्पदनीयमस्य सर्वस्य यदयमात्माऽनेन ह्येतत्सर्वं वेद यथा ह वै पदेनानुविन्देदेवं कीर्तिꣳश्लोकं विन्दते य एवं वेद ॥ १ ॥**

---

१. 'मर्त्यः सन्' सरस्वत्या मिथुनीभावादिमर्त्यधर्मोपेतः सन् (भा.बो.) ।

आत्मैवेदमग्र आसीदित्यादिना प्रकृतस्यात्मन उपास्तिप्रकारमाह– **तद्धेदं तर्ही-त्यादिना** ।। तर्हि तदा प्रलयकाले । तदिदं प्रकृतं ब्रह्म । अव्याकृतं विकारशून्यमासीदित्येकोऽर्थः । अन्यस्तु तदिदं जगदव्याकृतं कारणात्मक-मासीत् । ह प्रसिद्धमिति। तद्ब्रह्म तदव्याकृतं जगत् नामरूपाभ्यामेव व्याक्रियत विकृतमकरोत् । [१]एवशब्देन नामरूपव्यतिरिक्ततृतीयप्रकारं वारयति । कार्या-त्मकमकरोत् । कथं असौनामा एतन्नामकः । इदंरूप एतदाकार इति पदद्वयमपि बहुव्रीहिः[२] । असौ नामेत्यलुक् । अयं महदादिपदार्थ इति विशेष्यं ध्येयम् । कथमेतज्ज्ञायत इत्यत आह[३]– **तदिति** ।। भगवताऽऽदिकाले नामरूपाभ्यामेव महदादिजगतस्तदभिमानिचेतनवर्गस्य च नामरूपाभ्यामेव व्याकृतत्वाद्धेतोः एतर्हि इदानीमपि इदं घटादि वस्तु पुत्रादिकं वा नामरूपाभ्यामेव व्याक्रियते । असौनामेत्यादि प्राग्वत् । एतेन हरेरुपास्यत्वे सर्वजग-द्धेतुत्वरूपहेतुरुक्तो ध्येयः ।।

आत्मत्वोपासनाप्रशंसार्थं प्राणनाद्युपासनानिन्दारूपमर्थवादमुपोद्धातपूर्वक-माह– **स इति** ।। स एष जगत्कर्ता हरिः । इह स्वसृष्टब्रह्मादिदेहेषु । आनखाग्रेभ्यः केशादारभ्य नखाग्रपर्यन्तं प्रविष्टः । तत्र दृष्टान्तः– **क्षुर इति** ।। यथा क्षुरधाने क्षुरकोशे । विश्वम्भरो वायुः । विश्वम्भरकुलाये वाय्वावासस्थानभूते देहादाववहितः प्रविष्टस्स्यात्तथेति योज्यम् । तं स्वदेहे प्रविष्टमपि न पश्यन्ति पामरा इति योज्यम् । स प्रविष्टो हरिः । अकृत्स्नः अल्पगुणः हि भवति खलु । कुतोऽस्य प्रविष्टस्याकृत्स्नत्वमित्यतो व्यनक्ति– **प्राणन्नेवेत्यादिना** ।। प्राणन्नेव श्वासव्यापारं कुर्वन्नेव । प्राणः प्राणनामा भवति । नाम प्रसिद्धम् । एवमग्रेऽपि वचनादिव्यापारं कुर्वन् वागादिनामको भवतीति ज्ञेयम् । एतानि

---

१. '**तृतीयप्रकारं**' इति नास्ति - ख. । २. अदो हिरण्यगर्भादिनामवाचकं यस्य स असौनामा इति । इदं चतुर्मुखत्वादि अहङ्काराद्यपेक्षया परिमाणविशेषोपेतत्वादिरूपं यस्य स इदंरूप इति पदद्वये बहुव्रीहिर्ज्ञेया (भा.बो.) । ३. '**तत्तस्मा**'दिति - ग. ।

प्राणादिनामानि । अस्य देहं प्रविष्टस्य हरेः कर्मनामानि एकैकक्रियानिमित्तकानि तन्मात्रप्रत्यायकानि । न त्वशेषगुणवाचीनीति यावत् । तावता कुतोऽकृत्स्नत्वमित्यतः स्वस्वाभिमतज्ञानानन्दादिकृत्स्नफल-दात्रुपास्तिविषयत्वादकृत्स्नविषयत्वमित्याह– **स योऽत इति** ॥ अत इति सप्तम्यर्थे तसिः । एतेषु प्राणनादिषु । स प्रसिद्धो योऽधिकारी । एकैकमुपास्ते स न वेद न जानाति । सर्वगुणपूर्णत्वाज्ञानादित्याह– **अकृत्स्नो हीति** ॥ एष उपासकः । अतः एषु प्राणनादिषु । एकैकेनोपासितेन । अकृत्स्नो भवति स्वाभिमतसच्चिदानन्दत्वादिरूपफलावाप्तिमान्न भवति । हि यस्मात् तस्मादिति योज्यम् । कथं तर्ह्युपास्यमित्यत आह– **आत्मेत्येवेति** ॥ तत्र हेतुः– **अत्र ह्येते सर्व एकं भवन्तीति** ॥ अत्र आत्मशब्दार्थे । एते बुद्धिस्थाः ज्ञानानन्दादयः प्रागुक्तप्राणनादयश्च 'एकं भवन्ति' अन्तर्भवन्ति हि यतोऽत इति । अत्रावधारणयुक्तात्मशब्दार्थोपासनाविधिः सर्वगुणगुणोपसंहारकारः आत्मेत्युपासीतैवेति आत्मत्वायोगव्यवच्छेदपरो ध्येयः । यथोक्तं सर्वोपसंहारनये 'अन्यथात्वं शब्दादिति चेद्' इति सूत्रभाष्ये 'आत्मेत्येवेत्यवधारण-मनात्मत्वनिवृत्त्यर्थम्' (ब्र.सू.भा. ३-३-७) इति । यद्वा यथाश्रुत एवैवकारोऽन्य-योगव्यवच्छेदपरस्सन्नात्मशब्दार्थे सर्वगुणान्तर्भावे युक्तिसूचकः । अन्ययोग-व्यवच्छेदावधारणयुक्तात्मशब्दार्थोपासनाविधिः सर्वगुणोपसंहर्तृब्रह्मादीन-प्यधिकरोतीति तैरप्यात्मपदोक्तमेवोपास्यम् । तथाच यद्यसौ न तान् प्रति सर्वगुणानभिधत्ते तर्हि ''गुणैस्सर्वैरुपास्योऽसौ ब्रह्मणा'' इत्यादि सर्वगुणो-पसंहारवचनविरोधस्स्यात्[१] । अतोऽसौ तेषां सर्वगुणाभिधायक इति । तदुक्तं सूत्रे 'अन्वयादिति चेत्स्यादवधारणात्' (ब्र.सू. ३-३-१८) इति । तथा सच्चिदानन्दादिचतुर्गुणोपासनाधिकारिणः प्रति तावत एव गुणान् वक्ति नेतरान् ।

---

१. 'गुणैस्सर्वैरुपास्योऽसौ ब्रह्मणा परमेश्वरः । अन्यैर्यथाक्रमं चैव मानुषैः कैश्चिदेव तु ॥' इति प्राप्त्यधिकरणे भविष्यत्पर्ववचनमिदमुदाहृतं भगवत्पादाचार्यैः ।

आत्मैवेदमग्र आसीदित्यादिना प्रकृतस्यात्मन उपास्तिप्रकारमाह– **तद्धेदं तर्हीत्यादिना** ।। तर्हि तदा प्रलयकाले । तदिदं प्रकृतं ब्रह्म । अव्याकृतं विकारशून्यमासीदित्येकोऽर्थः । अन्यस्तु तदिदं जगदव्याकृतं कारणात्मकमासीत् । ह प्रसिद्धमिति। तद्ब्रह्म तदव्याकृतं जगत् नामरूपाभ्यामेव व्याक्रियत विकृतमकरोत् । [१]एवशब्देन नामरूपव्यतिरिक्ततृतीयप्रकारं वारयति । कार्यात्मकमकरोत् । कथं असौनामा एतन्नामकः । इदंरूप एतदाकार इति पदद्वयमपि बहुव्रीहिः[२] । असौ नामेत्यलुक् । अयं महदादिपदार्थ इति विशेष्यं ध्येयम् । कथमेतज्ज्ञायत इत्यत आह[३]– **तदिति** ।। भगवताऽऽदिकाले नामरूपाभ्यामेव महदादिजगतस्तदभिमानिचेतनवर्गस्य च नामरूपाभ्यामेव व्याकृतत्वाद्धेतोः एतर्हि इदानीमपि इदं घटादि वस्तु पुत्रादिकं वा नामरूपाभ्यामेव व्याक्रियते । असौनामेत्यादि प्राग्वत् । एतेन हरेरुपास्यत्वे सर्वजग-द्धेतुत्वरूपहेतुरुक्तो ध्येयः ।।

आत्मत्वोपासनाप्रशंसार्थं प्राणनाद्युपासनानिन्दारूपमर्थवादमुपोद्धातपूर्वकमाह– **स इति** ।। स एष जगत्कर्ता हरिः । इह स्वसृष्टब्रह्मादिदेहेषु । आनखाग्रेभ्यः केशादारभ्य नखाग्रपर्यन्तं प्रविष्टः । तत्र दृष्टान्तः– **क्षुर इति** ।। यथा क्षुरधाने क्षुरकोशे। विश्वम्भरो वायुः। विश्वम्भरकुलाये वाय्वावासस्थानभूते देहादाववहितः प्रविष्टस्स्यात्तथेति योज्यम् । तं स्वदेहे प्रविष्टमपि न पश्यन्ति पामरा इति योज्यम् । स प्रविष्टो हरिः। अकृत्स्नः अल्पगुणः हि भवति खलु । कुतोऽस्य प्रविष्टस्याकृत्स्नत्वमित्यतो व्यनक्ति– **प्राणन्नेवेत्यादिना** ।। प्राणन्नेव श्वासव्यापारं कुर्वन्नेव । प्राणः प्राणनामा भवति । नाम प्रसिद्धम् । एवमग्रेऽपि वचनादिव्यापारं कुर्वन् वागादिनामको भवतीति ज्ञेयम् । एतानि

---

१. **'तृतीयप्रकारं'** इति नास्ति - ख. । २. अदो हिरण्यगर्भादिनामवाचकं यस्य स असौनामा इति । इदं चतुर्मुखत्वादि अहङ्काराद्यपेक्षया परिमाणविशेषोपेतत्वादिरूपं यस्य स इदंरूप इति पदद्वये बहुव्रीहिर्ज्ञेया (भा.बो.) । ३. **'तत्तस्मा'**दिति - ग. ।

प्राणादिनामानि। अस्य देहं प्रविष्टस्य हरेः कर्मनामानि एकैकक्रियानिमित्तकानि तन्मात्रप्रत्यायकानि। न त्वशेषगुणवाचीनीति यावत्। तावता कुतोऽकृत्स्नत्वमित्यतः स्वस्वाभिमतज्ञानानन्दादिकृत्स्नफल-दात्रुपास्तिविषयत्वादकृत्स्नविषयत्वमित्याह– **स योऽत इति** ॥ अत इति सप्तम्यर्थे तसिः। एतेषु प्राणनादिषु। स प्रसिद्धो योऽधिकारी। एकैकमुपास्ते स न वेद न जानाति। सर्वगुणपूर्णत्वाज्ज्ञानादित्याह– **अकृत्स्नो हीति** ॥ एष उपासकः। अतः एषु प्राणनादिषु। एकैकेनोपासितेन। अकृत्स्नो भवति स्वाभिमतसच्चिदानन्दत्वादिरूपफलावाप्तिमान्न भवति। हि यस्मात् तस्मादिति योज्यम्। कथं तर्ह्युपास्यमित्यत आह– **आत्मेत्येवेति** ॥ तत्र हेतुः– **अत्र ह्येते सर्व एकं भवन्तीति** ॥ अत्र आत्मशब्दार्थे। एते बुद्धिस्थाः ज्ञानानन्दादयः प्रागुक्तप्राणनादयश्च 'एकं भवन्ति' अन्तर्भवन्ति हि यतोऽत इति। अत्रावधारणयुक्तात्मशब्दार्थोपासनाविधिः सर्वगुणगुणोपसंहारकारः आत्मेत्युपासीतैवेति आत्मत्वायोगव्यवच्छेदपरो ध्येयः। यथोक्तं सर्वोपसंहारनये 'अन्यथात्वं शब्दादिति चेद्' इति सूत्रभाष्ये 'आत्मेत्येवेत्यवधारण-मनात्मत्वनिवृत्त्यर्थम्' (ब्र.सू.भा. ३-३-७) इति। यद्वा यथाश्रुत एवैवकारोऽन्य-योगव्यवच्छेदपरस्सन्नात्मशब्दार्थे सर्वगुणान्तर्भावे युक्तिसूचकः। अन्ययोग-व्यवच्छेदावधारणयुक्तात्मशब्दार्थोपासनाविधिः सर्वगुणोपसंहर्तृब्रह्मादीन-प्यधिकरोतीति तैरप्यात्मपदोक्तमेवोपास्यम्। तथाच यद्यसौ न तान् प्रति सर्वगुणानभिधत्ते तर्हि ''गुणैस्सर्वैरुपास्योऽसौ ब्रह्मणा'' इत्यादि सर्वगुणो-पसंहारवचनविरोधस्स्यात्[१]। अतोऽसौ तेषां सर्वगुणाभिधायक इति। तदुक्तं सूत्रे 'अन्वयादिति चेत्स्यादवधारणात्' (ब्र.सू. ३-३-१८) इति। तथा सच्चिदानन्दादिचतुर्गुणोपासनाधिकारिणः प्रति तावत एव गुणान् वक्ति नेतरान्।

---

१. 'गुणैस्सर्वैरुपास्योऽसौ ब्रह्मणा परमेश्वरः। अन्यैर्यथाक्रमं चैव मानुषैः कैश्चिदेव तु ॥' इति प्राप्त्यधिकरणे भविष्यत्पर्ववचनमिदमुदाहृतं भगवत्पादाचार्यैः।

तदाह 'आत्मगृहीतिरितरवदुत्तरात्' (ब्र.सू. ३-३-१७) इति सूत्रे। यस्त्वात्मत्वरूपैकगुणोपासनाधिकारी तं प्रति तावन्मात्रमेव ततः प्रतिभाति नान्यत् इत्यन्ययोगव्यवच्छेदार्थ एवैवकारः। तदप्याह– ''आत्मशब्दाच्च''(ब्र.सू. ३-३-१६) इति सूत्रे ॥

आत्मशब्दस्य सर्वगुणाभिधायित्वेऽप्यात्मनस्सर्वगुणाभावे कथं तथोपास्तिरित्यत आह– **तदेतदिति** ॥ यदयमात्मा योऽयमात्मोपास्यत्वेनोक्तस्तदेतदात्मनो रूपं अस्यात्मशब्दार्थस्य गुणजातस्य पदनीयम्। आश्रयः। सर्वगुणवत्त्वं तस्य कुतस्सिद्धमित्यत आह– **अनेनेति** ॥ हि यस्मादनेनोपासितेन हरिणा एतत्स्वयोग्यं सर्वं वेद आनन्दादिकं च प्राप्नोतीत्यपि ग्राह्यम्। 'तस्मात्सर्वगुणाश्रय' इति तदुपासनादेव सर्वज्ञत्वादयो गुणा भवन्ति किमु तस्येति भावः। ननूपासनाविधावात्मपदोक्तगुणजाते च तात्पर्ये गौरवं अन्यतरत्र तात्पर्येऽन्यतरासिद्धिरिति चेत्, 'उपासनायाः कार्यत्वे विष्णोरात्मत्व एव च। उभयत्रापि तात्पर्यमात्मोपासादिके विधौ' इति हरिवंशवाक्यसिद्धतया गौरवस्यादोषत्वात्। आत्मपदोक्तगुणजातविशिष्टात्मोपासनाविधानादवाक्यभेदाद्वेति। एतज्ज्ञानिनः फलमाह– **यथेति** ॥ पद्यते प्राप्यते फलमनेनेति पदं साधनम्। तेन यथा तत्तत्साधनेन तत्तत्फलमनुविन्देत् प्राप्नुयात्। एवं विद्याधिकारी एवं सर्वगुणयुक्तमात्मानं वेद उपास्ते। स कीर्तिं यशः। श्लोकं शं च लोकं च श्लोकम्। एकवद्भावः। सुखं ज्ञानं च। लुक् प्रकाश इति धातोः। विन्दते प्राप्नुयात् ॥ ३-५-१ ॥

[भगवानेवातिप्रेमास्पदः]

**तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात्प्रियꣳ रोत्स्यतीतीश्वरो ह तथैव स्यादात्मानमेव प्रियमुपासीत स**

**य आत्मानमेव प्रियमुपास्ते न हास्य प्रियं प्रमायुतं भवति ॥ २ ॥**

आत्मोपासनं प्रेमशब्दितभुक्तियुक्तं चेत्पुमर्थहेतुरिति वक्तुं तस्मिन् प्रेमोत्पत्तये तस्य दारापत्यादितोऽपि सुखसाधनत्वेनातिप्रेमास्पदतामाह– **तदेतदिति** ॥ यदयमात्मा योऽयमात्मा आप्तगुणः। अन्तरतरं सर्वान्तर्विद्यमानम्। तदेतदात्मनो रूपं पुत्रादितः सर्वस्मात्प्रेयः निरुपाधिकप्रेमास्पदमुत्तमानाम् । अन्येषां तु सुखसाधनत्वादिति भावः । आत्मनः प्रियतमत्वं समर्थयते– **स य इति** ॥ स यः यः कोऽपि विष्णुभक्तः । आत्मनो हरेरन्यं प्रियं ब्रुवाणं दुर्जनं प्रति तव प्रियं सुखं रोत्स्यति नाशयति भगवानिति ब्रूयात् । एवं ब्रुवन् ईश्वरो ह । तत्सुखरोधने समर्थो ह निश्चयस्तस्मात्तथैव स्यात् । निरुद्धसुखवानेव स भवतीत्यर्थः ।यदर्थं हरेः प्रियत्वमुक्तं तदाह– **आत्मानमेवेति** ॥ भगवन्तमेव प्रियं उत्तमानां निरुपाधीष्टम् । अन्येषामिष्टहेतुत्वेन प्रियं प्रीतिविषयोऽयमित्युपासीतेत्यर्थः। दारापत्यादेस्तत्सम्पर्कप्रयुक्त[१] प्रियत्वकत्वेन स एव मुख्यप्रिय इत्यात्मानमेव प्रियमित्येवकारः । स प्रसिद्धो योऽधिकारीत्यर्थः । प्रमायुक्तं विनाशयुक्तं न भवतीत्यर्थः ॥ ३-५-२ ॥

**[स्वात्मानमेव गुणपूर्णतया अहेयत्वेन नित्यास्तित्वेन च विज्ञानेन 'ब्रह्म' अहमस्मीत्युच्यते]**

**तदाहुर्यद् ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते किमु तद् ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति ॥ ३ ॥**

भगवज्ज्ञानादेव नित्यप्रियप्राप्तिर्भवतीत्युक्तम् । तदाक्षेपसमाधिभ्यां महद्भिः समर्थितमित्याह– **तदाहुरित्यादिना** ॥ ब्रह्मविद्यया सर्वमात्मयोग्यतापूर्ति भविष्यन्तः [२]भू प्राप्तौ प्राप्नुवन्तः महान्तः । ब्रह्मविद्ययैव स्वयोग्यं सर्वं प्राप्यत इति यदाहुः नित्यनिर्दुःखानन्दानुभवात्मकमुत्तमजीवस्वरूपमज्ञानतिरोहितं

---

१. '**प्रियकत्वेन**' - ख. । २. '**भू प्राप्तौ**' इति नास्ति - क.,ख. ।

ब्रह्मविद्ययाऽभिव्यज्यत एवेति । 'पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्' (ब्र.सू. २-३-३) 'विद्यैव तु निर्धारणात्'(ब्र.सू. ३-३-४८) इत्यादिना व्यासादयो महान्तो यदाहुरित्यर्थः। तत् तत्र तस्मिन्नर्थे । केचिन्मनुष्याः मन्यन्ते । कथम्? स्वरूपमपि ब्रह्म विद्ययाभिव्यज्यते चेत् तद्ब्रह्म यस्मात्सर्वं पूर्णमभवत्। तत् तस्माद्ब्रह्मापि स्वस्वरूपमवेत्किमु? इति मन्यन्त इत्यन्वयः ॥ ३-५-३ ॥

**ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणां तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवꣳ सूर्यश्चेति तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदꣳ सर्वं भवति तस्य ह न देवाश्च नाभूत्या ईशत आत्मा ह्येषाꣳसमभवत्यथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवꣳस देवानां यथा ह वै बहवः पशवो मनुष्यं भुञ्ज्युरेवमेकैकः पुरुषो देवान् भुनक्त्येकस्मिन्नेव पशावादीयमाने प्रियं भवति किमु बहुषु तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः ॥ ४ ॥**

त्वया पृष्टं सत्यं ब्रह्माप्यनादिनित्यापरोक्षज्ञानेन स्वस्वरूपं सदा जानात्येवेति हेतोस्सदा परिपूर्णमभवदिति भावेन परिहरति– **ब्रह्म वा इति** ॥ इदमग्रे अस्य जगतः पूर्वं ब्रह्मैवासीत् । तद्ब्रह्म अहेयं सर्वनियन्तृतया सर्वगतत्वेन च केनापि हातुमशक्यं ब्रह्म पूर्णं अस्मि अस्तीति मेयं ज्ञेयम् इत्यात्मानमेवावेत् व्यजानात् । स्वस्मादन्यस्य पूर्णस्य ब्रह्मणोऽभावेन स्वस्यैव पूर्णब्रह्मत्वादिति भावेन स्वात्मानमेवेत्येवशब्दः । तस्माद्ब्रह्मस्वरूपज्ञत्वादेव तद्ब्रह्म सर्वं पूर्णम-

भवत् । अत्रासीदवेदभवदित्यनद्यतनरूपकालविशेषवाचिलङ्प्रयोगेऽपि 'आत्मा वा इदमेक एवाग्र आसीत्'(ऐत. २-२) 'सदेव सोम्येदमग्र आसीत्' (छां. ६-२-१) इत्यादौ यथा सत्त्वमनाद्यनन्तकालीनमित्युपेयते त्रिकाल-वाचिनो लकारस्य कस्यचिदभावेन येन केनचिल्लकारेण निर्देशेऽपि न तत्र विवक्षेति । एवं स्वरूपवेदनपूर्णताभवनयोरप्यनाद्यनन्तकालीनत्वमेवेति भावः। अत एव तदात्मानमेवेत्यादिनैव परिहारप्राप्तावासीदित्यन्तोक्तिः ॥

यद्वा ब्रह्मा अग्रे अनादिकाल एव । आत्मानं स्वस्वरूपमवेदित्यपि योजनया अनादिकालतस्सत्वमिवात्मनः स्थितिमपि जानातीत्यर्थसूचनाय ब्रह्म वा इत्याद्यं-शोक्तिः । अन्येऽप्येवं ज्ञात्वा स्वयोग्यपूर्तिमन्तोऽभवन्नित्याह– **तद्य इति** ॥ देवानां मध्ये यो यो देवः । तत् अहेयत्वादिगुणं ब्रह्म । यथा प्रत्यबुध्यत । स एव तज्ज्ञानानुसारेण तत्सर्वं समग्रं स्वयोग्यानन्दादिपूर्णत्वम-भवत् । प्राप्नोत् । तथेति समुच्चये । ऋषीणां मध्ये तद्यो यः प्रत्यबुध्यत मनुष्याणां मध्ये च यो यस्तत्प्रत्यबुध्यत स एव तदभवदिति योजना । प्राग्वदस्यार्थः । उपनिषत् स्वोक्तार्थे प्रमाणमाह– **तद्धेति** ॥ तदेतद्ब्रह्म पश्यन् वामदेव ऋषिः मन्त्रदर्शी । 'अहं मनुरभवं सूर्यश्च'(ऋ.सं. ३-६-१५) इत्यादि मन्त्रं प्रतिपेदे । मनुसूर्यादिभिः ब्रह्मणोऽहेयत्वमहं मनु-रित्यादिमन्त्रतात्पर्यार्थतया व्यजानादित्यर्थः । मन्त्राक्षरार्थस्तु । वामदेवः स्वात्मनो ब्रह्मचित्संवलनेन चिद्द्वयं सम्पिडितं अहं पदं मुख्यामुख्यवृत्त्या वक्तीति मुख्यार्थमन्तर्यामिणमहंपदार्थमुद्दिश्य मन्वाद्यन्तर्यामित्वेन मन्वादिभिरहेयो मन्वादिशब्दवाच्यो योऽस्ति सोऽस्मीति मत्वा तदन्तर्यामिणः स्वान्त-र्यामिणश्चाभेदविवक्षया अहं मनुरभवमित्यादिरूपेणाहेति ध्येयः । तदाह सूत्रे'शास्त्रदृष्ट्या तूपदेशो वामदेववत्'(ब्र.सू. १-१-३०) इति ।

ब्रह्मविद्यया स्वयोग्यफलप्राप्तिरद्यतनानामप्यस्तीत्याह– **तदिदमिति** ॥ तदिदं ब्रह्म । एतर्ह्यपि इदानीमपि । योऽधिकारी अहं ब्रह्मास्मीत्येवमहेयत्वपूर्णत्वा-

स्तीति मेयत्वगुणकमित्येवं प्रकारेण वेद । तथा एवमित्यस्य तु अहं ब्रह्मास्मीति तदात्मानमवेदित्येवंप्रकारेण च यो वेदेत्यर्थः । सः ज्ञानी इदं स्वयोग्यं सर्वं समग्रं आनन्दादिपूर्णो भवतीति। तस्य ज्ञानिनो देवादिभिरपि श्रेयः-प्रतिबन्धो नेति महिमानमाह– **तस्य हेति** ॥ तस्य ज्ञानिनो देवाश्च न देवा अपि । अभूत्यै विद्याफलविघाताय । नेशते तद्विघातं न कुर्वन्तीत्यर्थः । अशक्त्या न कुर्वन्ति किमित्यतो नेत्याह– **आत्मेति** ॥ सः ज्ञानिप्रियो हरिः । एषां देवानामात्मा कार्येषु नियोक्तृत्वेन तेषु व्याप्ततया स्थितत्वेन स्वामी भवति यस्मात्तस्माद्भवत्प्रिये ज्ञानिनि विघातं श्रेयसो न कुर्वन्ति । तत्प्रियस्यात्मनोऽपि प्रियत्वादिति भावः । तदिदमिति निर्दिष्टस्यापि भगवतो विधेयात्मापेक्षया स इति पुल्लिङ्गनिर्देशः ।

**[अन्यथाज्ञानिनिन्दा]**

एवं सम्यक्ज्ञानिमाहात्म्यमुक्त्वाऽन्यथाज्ञानिनो निन्दामाह– **अथेति** ॥ अर्थान्तरे । यः अन्यां सर्वजीवविलक्षणां अहेयत्वादिगुणैर्भिन्नां वा विष्णुरूपदेवतां [१]जीवत्वेन उपास्ते अन्योऽसौ विष्णुः अहमस्मीत्यहेयत्वादिगुणविशिष्टोऽन्यो न विष्णुरित्युपास्ते। स न वेद न जानातीशस्वरूपं यथा मनुष्योपभोजकः पशुरिति। यद्वा अहमस्मीति पदद्वयोक्तगुणविशिष्टोऽन्यः अन्यश्चासौ विष्णुरिति मत्वा योऽन्यां विष्णुभिन्नां देवतामुपास्ते स न वेदेति । आत्मा ह्येषामित्युक्तं देवप्रियत्वं ज्ञानिनो व्यक्तमाह– **एवमिति** ॥ सः तदिदमप्येतर्हि य एवं वेदेति पूर्वत्र प्रकृतो ज्ञानी । एवं देवानां पशुः । देवोपभोजक-पशुरिव तेषां प्रिय इत्यर्थः । तदेव व्यनक्ति– **यथेति** ॥ यथा बहवो गोरूपाः पशवः क्षीरादिना मनुष्यं भुञ्ज्युः भोजयेयुः । ह वै प्रसिद्धम् । एवमेकैको ज्ञानिपुरुषः देवान् भुनक्ति भोजयति प्रीणयतीति यावत् । देवप्रीतिकरत्वं ज्ञानिनः कुत इत्यत आह– **एकस्मिन्निति** ॥ लोके एकस्मिन् भोजके

---

१. **'जीवत्वेन उपास्ते'** इति नास्ति क., ग. ।

पशावादीयमाने प्रियं भवति । किमु बहुषु। तस्माद्बहुगोपशुतुल्यतया भोजको ज्ञानी देवानां प्रीतिविषयो भवतीति किमु वाच्यमिति भावः । अथ योऽन्यामित्यादिनोक्तार्थज्ञानिनो निन्द्यत्वादेव तथा न [१]ज्ञेयं, किन्तु तथा ज्ञानस्य देवाप्रियत्वाच्चेत्याह– **तस्मादिति** ।। तत्त्वज्ञानस्यैव देवानां प्रियत्वात् । एषां देवानाम् । तन्न प्रियम् । मनुष्याः विष्णोरन्यां देवता-महेयत्वादिगुणविशिष्टां विद्युरिति यदेतत् तदिति योजना ।। ३-५-४ ।।

[वर्णसृष्टिः]

**ब्रह्म वा इदमग्र आसीदेकमेव तदेकꣳ सन्न व्यभवत्तच्छ्रेयो-रूपमत्यसृजत क्षत्रं यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति तस्मात्क्षत्रात्परं नास्ति तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये क्षत्र एव तद्यशो दधाति सैषा क्षत्रस्य योनिर्यद्ब्रह्म तस्माद्यद्यपि राजा परमतां गच्छति ब्रह्मैवान्तत उप निःश्रयति स्वां योनिं य उ एनꣳ हिनस्ति स्वाꣳ स योनिमृच्छति स पापीयान् भवति यथा श्रेयाꣳसꣳ हिꣳसित्वा ।। ५ ।।**

पूर्वं सा गौरभवत् वृषभ इतर इत्यादिना ब्रह्मा सर्वमसृजदित्युक्तम् । इदानीं वर्णसृष्टिमाह– **ब्रह्म वा इति** ।। इदमस्य जगतः अग्रे । ब्रह्म चतुर्मुख आसीत् । चतुर्मुखो ब्राह्मणजातिस्सन् विष्णोरुदपद्यत पूर्वमित्यर्थः । तत् चतुर्मुखाख्यं ब्रह्म । एकमसहायं सत् न व्यभवत् । परिवारविशिष्टं नाभवत् । तच्चतुर्मुखाख्यं ब्रह्म आत्मनः परिवारमिच्छत् श्रेयोरूपं सर्वजात्युत्तमरूपं क्षत्रं क्षत्रजातिम् । अत्यसृजत ससर्ज । तद् व्यनक्ति– **यानीति** ।। देवत्रा देवानां मध्ये । यान्येतानि क्षत्राणि । इन्द्रः इन्द्रशब्दितो गरुडः । सोमपदेन

---

१. 'ज्ञेयं न किन्तु' - क. ।

तत्समस्सूर्योऽपि ग्राह्यः । रुद्रः सदाशिवः । पर्जन्यशब्दितोऽत्र शक्रः । कामश्चाप्युपलक्ष्यते । मृत्युपदेन शेषो ग्राह्यः । ईशानो वायुः । इतिशब्दस्य इत्येतानि यानि तत्क्षत्रं श्रेयोरूपमसृजतेत्यन्वयः[१] । तस्मात् क्षत्रस्य श्रेयो-रूपत्वात् क्षत्रात् क्षत्रजातेः परमुत्तमं नास्ति । तस्मात्क्षत्रजातेरुत्तमत्वादेव । ब्राह्मणः अधस्तादधोदेशे स्थितस्सन् राजसूये क्षत्रियं सिंहासनस्थं राजानमुपास्ते । किमर्थमित्यत आह– **क्षत्र एवेति** ।। ब्राह्मण इत्यनुषज्यते । ब्राह्मणस्तत् तेनाधस्तादुपासनेन यशः क्षत्रिय एव दधाति स्थापयतीति । तस्मिन् यशो दातुं स्वयमुत्तमोऽपि संस्तथोपास्त इत्यर्थः । उत्तमस्सन्निति कुतः? नीचत्वादेव तथोपास्त इति किन्नेत्यत आह– **सैषेति** ।। यद्यपि राजा राजसूयकर्तृत्वनिमित्तेन परमतां गच्छति । तथापि यद्ब्रह्म यो ब्राह्मणः । सैषा स एष ब्रह्मणः क्षत्रियस्य योनिः तत्त्वोपदेशादिना कारणम् । गुरुरिति यावत् । तस्मात् ब्राह्मणस्य गुरुत्वादेव अन्ततो राजसूयान्ते राजा स्वां योनिं स्वगुरुभूतं ब्रह्मैव ब्राह्मणमेव उपनिःश्रयति वन्दयीत । हेत्वन्तरेणापि ब्राह्मणः क्षत्रियादुत्तम इत्याह– **य इति** ।। य उ य एव क्षत्रियः । एनं ब्राह्मणम् । हिनस्ति हन्ति । स स्वां योनिं स्वपितरं ऋच्छति विनाशयति । (ऋच्छ गतीन्द्रियप्रलयेषु इति धातुः) साक्षात्पितरि जीवति कथं पितृहन्तेत्यतस्तत्समदोषवान् भवतीति भावेनाह– **स पापीयान् भवतीति** ।। यथा श्रेयांसं गुणाधिकं स्वपितरं हिंसित्वा पापीयान् भवति तादृशपापवान् भवतीत्यर्थः ।। ३-५-५ ।।

**[विशां सृष्टिकथनम्]**

## स नैव व्यभवत्स विशमसृजत यान्येतानि देवजातानि

१. मूले रुद्रेशानमृत्युयमशब्दानां पर्यायता प्रतीयते । अतोऽत्र सर्वज्ञसूर्येणाचार्येण वामनपुराणवाक्यमुदाहृत्य संशयः परिहृतः–'विष्णौ ब्राह्मणजातिः सन् ब्रह्मा जज्ञे चतुर्मुखः । इतोऽग्रे जगतस्तस्मात् क्षत्रजातिरजायत । वायुः सदाशिवोऽनन्तो गरुडः शक्र एव च ।। कामश्च वरुणश्चैव सोमसूर्यौ यमस्तथा । एवमाद्या क्षत्रियास्तु देवानां ब्रह्मनिर्मिताः ।। इति । एतेनैव 'इन्द्रो देवानां राजा। रुद्रः पशूनाम् । मृत्यू रोगादीनाम् । ईशानो भासाम्' इत्यादिव्याख्यानं प्रमाणशून्यत्वात्परास्तम् ।

**गणश आख्यायन्ते वसवो रुद्रा आदित्याच विश्वेदेवा मरुत इति ॥ ६ ॥**

क्षत्रियदेवोत्पत्त्यनन्तरमुपोद्धातपूर्वं विशां सृष्टिमाह– **स इत्यादिना** ॥ स चतुर्मुखः । नैव व्यभवत् कांक्षितपरिवारविशिष्टो नाभवत् । सोऽनेकपरिवारेच्छावान् ब्रह्मा विशमसृजत । तदेव व्यक्तिनिर्देशेन दर्शयति– **यान्येतानीति** ॥ यान्येतानि देवजातानि गणशः सङ्घशः आख्यायन्ते । बह्वल्पार्थाच्छस्कारकादन्यतरस्यामिति शस् । तान् गणानाह– **वसव इत्यादिना** ॥ [१]वसवोऽग्निव्यतिरिक्तास्सप्त ज्ञेयाः । अग्नेर्ब्राह्मणत्वात् । सदाशिवस्य क्षत्रियत्वात्तदन्ये [२]दश रुद्रा रुद्रपदेनात्र ग्राह्याः । विवस्वदिन्द्रवरुणविष्णुभिन्ना [३]अष्टावादित्या अत्र ग्राह्याः । विवस्वदादित्रयस्य क्षत्रियत्वात् विष्णोस्त्ववर्णत्वात् । [४]विश्वेदेवा दश । मरुतो मुख्यवायुभिन्ना एकोनपञ्चाशत् । तस्य क्षत्रत्वात् । इति गणश आख्यायन्ते । तद्रूपविशमसृजतेति योजना ॥ ३-५-६ ॥

[शौद्रवर्णसृष्टिः]

**स नैव व्यभवत्स शौद्रं वर्णमसृजत पूषणमियं वै पूषेयꣳ हीदꣳ सर्वं पुष्यति यदिदं किञ्च ॥ ७ ॥**

उपोद्धातपूर्वं शूद्रसृष्टिमाह– **स इति** ॥ सः जातित्रयाक्रान्तदेवस्रष्टा चतुर्मुखः । न व्यभवत् विवक्षितपरिवारविशिष्टो नाभवत् । स एवम्भूतो ब्रह्मा शौद्रं शूद्रसम्बन्धि वर्णमसृजत । तत्किमित्यत उक्तम्– **पूषणमिति** ॥ तद् व्यनक्ति– **इयं वै पूषेति** ॥ पृथिवी पूषेत्यर्थः । केन हेतुनेत्यत आह– **इयं हीति** ॥

---

१. द्रोणः, प्राणः, ध्रुवः, अर्कः, दोषाः, द्युनामा वसुः, विभावसुश्चेति अन्ये अष्टौ वसवः । २. भीमः, भवः, रैवतः, ओजाः, वृषाकपिः, अजैकपात्, अहिर्बुध्नः, विरूपाक्षः, उग्रः, भवश्चेति अन्ये दश रुद्राः । ३. धाता, अर्यमा, मित्रः, त्वष्टा, सविता, भगः, पूषा, पर्जन्यश्चेति अन्ये अष्टावादित्या ज्ञेयाः । ४. विश्वेदेवास्तु–'इष्टिश्राद्धे क्रतुर्दक्षः सङ्कीर्त्यौ वैश्वदेविकौ । नान्दीमुखे सत्यवसू काम्ये च धूरिलोचनौ ॥ पुरूरवार्द्रवौ चैव पार्वणे समुदाहृतौ । नैमित्तिके कामकालावेवं सर्वत्र कीर्तयेत्' इत्युक्ताः ग्राह्याः ।

इयं पृथिवी । यदिदं किञ्च इदं सर्वं पुष्यति पोषयति। हि यतोऽत इति योजना । 'अश्विनौ पृथिवी चैव काला मृत्यव एव च । शूद्रदेवा' इति भाष्यदिशाऽन्येऽप्यत्र ग्राह्याः ॥' ३-५-७ ॥

[जगद्धारकत्वादिगुणविशिष्टस्य वायोः रूपान्तरेण सृष्टिः]

**स नैव व्यभवत्तच्छ्रेयोरूपमत्यसृजत धर्मं तदेतत्क्षत्रस्य क्षत्रं यद्धर्मस्तस्माद्धर्मात्परं नास्त्यथो अबलीयान् बलीयाꣳसमाशꣳसते धर्मेण यथा राज्ञैवं यो वै स धर्मः सत्यं वैतत्तस्मात्सत्यं वदन्तमाहुर्धर्मं वदतीति धर्मं वा वदन्तꣳ सत्यं वदतीत्येतद् ह्येवैतदुभयं भवति ॥ ८ ॥**

जगद्धारकमोचकाख्यवायुरूपान्तरसृष्टिमाह– **स इत्यादिना** ॥ स चतुर्वर्णस्रष्टा ब्रह्मा । न व्यभवत् विवक्षितजनविशिष्टो नाभवत् । स्वस्य स्रष्टृत्वात्सृष्टानां चतुर्वर्णदेवानां पालकत्वात् सृष्टजगतो धारणमोचनदक्षेण युक्तो नाभवत् । ततश्च तादृशेन भाव्यमित्यालोच्य तत् चतुर्मुखाख्यं ब्रह्म । श्रेयोरूपं सर्वश्रेष्ठम् । धर्मं जगद्धारकम् । श्रेयोरूपं मोक्षसाधनभूतम् । [१]धर्मं भक्त्यादिभगवद्धर्माभिमानिनमिति वा । वायो रूपान्तरम् । अत्यसृजत । शेषादावविद्यमानं धारकत्वादिकं वायोरेव कुत इत्यतो धारकत्वं तावदुपपादयति– **तदेददिति** ॥ वायो रूपं क्षत्रस्य शेषादेः क्षत्रं स्वामि। यद्यस्मात्तस्माद्वायोः परं विष्णुमृते नास्ति अतो युक्तं धारकत्वं तस्येति । इदानीं मोचकत्वं तस्योपपादयति– **अथो इति** ॥ अथो तस्मात् । अबलीयान् स्वयमेव विष्णुं प्रतिगन्तुमसमर्थो धर्मेण विष्णुभक्त्यादिधर्माभिमानिना वायुरूपेण बलीयांसं विष्णुं प्राप्तुमाशंसते इच्छति । तत्र दृष्टान्तः– **यथेति** ॥ यथैतद्व्यक्तं तथोच्यत इत्यर्थः । तदाह–

---

१. भक्तिर्ज्ञानं सवैराग्यं प्रज्ञा मेधा धृतिः स्थितिः । योगः प्राणो बलं चैव वृकोदर इति स्मृतः ॥ इति महाभारततात्पर्यनिर्णयानुरोधेन(२-१४४) ज्ञानादयो धर्माः विवक्षिताः ।

**राज्ञेति** ॥ लोके कश्चिदबलीयान् महाराजं गन्तुमसमर्थो राज्ञा युवराजेन बलीयांसं महाराजं गन्तुमाशंसते एवमिति । धर्ममानिनो वायो रूपान्तर-माह– **यो वै स धर्मस्सत्यं वै तदिति** ॥ एतद्रूपं सत्यं वै सत्याभिमानि वै । तस्मात् उभयाभिमानिनोरेकत्वात् । सत्यं वदन्तं धर्मं वदतीत्याहुर्लौकिका वैदिकाश्च । धर्मं वा वदन्तं सत्यं वदतीति । एतद्ध्येव वायो रूपं एतदुभयं धर्मसत्यरूपोभयमानि भवतीत्यर्थः ॥ ३-५-८ ॥

[विष्णवज्ञानिकृतं कर्म क्षयिष्णुफलकम्]

**तदेतद् ब्रह्म क्षत्रं विट् शूद्रस्तदग्निनैव देवेषु ब्रह्माभवद्ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यश्शूद्रेण शूद्रस्तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येष्वे-ताभ्याꣳ रूपाभ्यां ब्रह्माभवदथ यो ह वा अस्माल्लोकात्स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति यथा वेदो वाऽनूक्तोऽन्यद्वा कर्माकृतं यदि ह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवात्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते-ऽस्माध्द्येवात्मनो यद्यत्कामयते तत्तत्सृजते ॥ ९ ॥**

प्रागुक्तब्राह्मणादिवर्णेषु श्रेष्ठानां ब्रह्मादीनामग्न्यादिष्वाविष्टत्वरूपमहिमानं वक्तुं प्रागुक्तमनुवदति– **तदेतदिति** ॥ ब्रह्मक्षत्रविट्शूद्र इति यत्तदेतत्प्रागुक्तमित्यर्थः । तत्तत्र । ब्रह्म ब्राह्मणजात्यभिमानी ब्रह्मा । देवेषु योऽग्निस्तेन सहाभवत् । तदन्तर्गतमभवदिति यावत् । मनुष्येषु यो ब्राह्मणस्तेन सहास्ते । तदन्तर्गतो वर्तत इत्यर्थः । क्षत्रियः क्षत्रियजात्यभिमानी वायुः । देवेषु यः क्षत्रियः सुपर्णशेषादिः नृषु यः क्षत्रियो राजादिस्तेन च सहास्ते । तदन्तर्गत इत्यर्थः । वैश्यो वैश्यजात्यभिमानी नासिक्यो वायुः । देवेषु यो वैश्यो वस्वादिस्तेन नृषु

यो वैश्यस्तेन च सहास्ते । तत्स्थ इत्यर्थः । शूद्रः शूद्रमानी निर्ऋतिः । देवेषु यश्शूद्रोऽश्विप्रभृतिः तेन सहास्ते । तथा नृषु यश्शूद्रस्तेन च सहास्ते । तदन्तःस्थ इत्यर्थः । अग्नौ ब्राह्मणे च ब्रह्मा तिष्ठतीति कुत इत्यत आह– **तस्मादिति** ।। यस्मादेताभ्यां रूपाभ्यां ब्रह्माभवत् । तयोराविष्टोऽभूदिति यावत् । तस्माद्धेतोः देवेषु मध्येऽग्नावेव मनुष्येषु ब्राह्मण एव हुत्वा लोकमिच्छन्ते इच्छन्ति प्रार्थयन्ते । अग्निब्राह्मणयोः सन्तर्पणेनैव लोकावाप्तिर्भवेत्किमित्यतो नेति भावेनाह– **अथेति** ।। अन्यच्चेश्वरज्ञानरूपमपेक्षितमित्यथशब्दार्थः । तदेव व्यतिरेकमुखेनाह– **य इति** ।। यो ह वै अग्निविप्रार्चकोऽपि यः कश्चित् स्वकीयं लोकमाश्रयं स्वाश्रयमिति यावत् । हरिमदृष्ट्वा अविज्ञाय अस्माल्लोकात् देहात् प्रैति निर्गच्छति एनमग्निविप्रार्चकं स हरिरविदितोऽज्ञातो न भुनक्ति न पालयति । यथा अननूक्तोऽनधीतो वेदो वा अकृतं अन्यत् कर्म वा न भुनक्ति तथेति योज्यम् । तथाप्यश्वमेधादिमहाकर्मानुष्ठानात्स्यान्महाफलमित्यत आह– **यदि ह वा इति** ।। यद्यनेवंवित् परमात्माज्ञानी महदपि पुण्यं पुण्यसाधनं । ह वै प्रसिद्धम् । हयमेधादिकर्म करोति तत्कर्म अस्य हर्यज्ञानिनः अन्ततः क्षीयत एव क्षयिष्णुफलकमेव भवति हेति । तदाह सूत्रे 'भाक्तं वाऽनात्मवित्त्वात्' (ब्र.सू. ३-१-७) इत्यादि । एवं हर्यज्ञानिनो न फलावाप्तिः कर्मणेत्युक्तं तर्हि किं कार्यमित्यत आत्मज्ञानं सम्पाद्यमिति भावेन तज्ज्ञानसाधनमुपासनं विधत्ते– **आत्मानमेवेति** ।। आप्तकामतयाऽऽत्मपदवाच्यमेव लोकं सर्वाश्रयं सर्वाश्रयत्वेन हरिमुपासीत । अस्योपासकस्य ज्ञानानन्तरभावि कर्म न क्षीयते क्षयिष्णुफलकं न भवति । कर्मणोऽक्षयत्वं व्यनक्ति– **अस्मादिति** ।। स ज्ञानी यद्यत्कामयते तत्तत्काम्यं वस्तुजातमस्माद्ध्येव प्रसन्नादात्मनो हरेस्सकाशादेव सृजते । कर्मेत्यनुषज्यते । अत्रायं विवेकः परोक्षज्ञानिना कृतमकाम्यं कर्माक्षयफलकज्ञानाय । अपरोक्षज्ञानिना कृतं तु कर्माक्षयमोक्षैकदेशायेति । तथा चोपास्त इत्यस्य परोक्षापरोक्षसाधारण्येन

जानातीत्यर्थो ध्येयः । तथाच सूत्रं 'अग्निहोत्रादिति तु तत्कार्यायैव तद्दर्शनात्' (ब्र.सू. ४-१-६) इति ॥ ३-५-९ ॥

[हरिरेव सर्वाश्रयः]

**अथो अयं वा आत्मा सर्वेषां भूतानां लोकः स यज्जुहोति यद् यजते तेन देवानां लोकोऽथ यदनुब्रूते तेनर्षिणामथ यत्पितृभ्यो निमृणाति यत्प्रजामिच्छते तेन पितॄणामथ यन्मनुष्यान् वासयते यदेभ्योऽशनं ददाति तेन मनुष्याणामथ यत्पशुभ्यस्तृणोदकं विन्दति तेन पशूनां यदस्य गृहेषु श्वापदा वयाꣳस्यापिपीलिकाभ्य उपजीवन्ति तेन तेषां लोको यथा ह वै स्वाय लोकायारिष्टिमिच्छेदेवꣳ हैवंविदे सर्वाणि भूतान्यरिष्टिमिच्छन्ति तद्वा एतद् विदितं मीमाꣳसितम् ॥ १० ॥**

आत्मानमेव लोकमिति यद्धरेः सर्वाश्रयत्वमुक्तं तत्साधयितुं प्रतिजानीते– **अथो इति** ॥ प्रागुक्तोपपादनारम्भार्थोऽयमथो इति निपातः । अयं सर्वजीवेषु नियामकतया स्थितः आप्तकामतयाऽऽत्मेत्युक्तः । सर्वेषां भूतानां देवादि-पिपीलिकान्तप्राणिनां लोको वै आश्रयः प्रसिद्धः । कथमित्यतो विविच्य व्यनक्ति– **स इति** ॥ सः सर्वजीवेषु नियन्तृतया स्थितो हरिः । यज्जुहोति वैश्वदेवादिकं करोतीति यद्यद् यजते यज्ञादीन् करोतीति यत् । होमकर्त्रादिषु स्थित्वा वा रामकृष्णादिरूपेण वा द्वेधापि देवेषु दयया देवतोद्देशेन होमादिकं कुरुत इति यत् । तेन होमादिना । देवानां लोक आश्रयः । अथेत्यर्थान्तरे । एवमग्रेऽपि ज्ञेयम् । अनुब्रूते अध्येतृषु स्थितस्सन् पृथग्वाध्ययनं कुरुत इति यत् । तेन ऋषीणां लोक इत्यनुषङ्गः ।अध्ययनकाले तत्तद्द्रष्टृऋषिस्मृति-पूर्वमध्ययनकृतौ तेषां तृप्तिर्भवतीति तदाश्रया इति भावः । अथ पितृभ्यो

निमृणाति पिण्डं प्रयच्छतीति यत् । प्रजां पुत्रम् । इच्छते इच्छति । उत्पादयतीति यत् तेन पितृणां लोकः । अथ मनुष्यान् गृहभूम्यादिदानेन वासयते निवासयतीति यत् । एभ्योऽर्थिभ्यो । दानं देयमन्नम् । ददातीति च यत् तेन मनुष्याणां लोकः । अथ पशुभ्यः तृणोदकम् । द्वन्द्वैकवद्भावः । विन्दति ददातीति यत् तेन पशूनां लोकः । अस्य पूर्वोक्तद्विरूपस्य हरेः । गृहेषु श्वापदाः मार्जारादयः । वयांसि पक्षिणः । किं बहुना । आपिपीलिकाभ्यः पिपीलिकापर्यन्तं वर्तमानाः सर्वेऽपि प्राणिनः । बल्यादिकमुपजीवन्तीति यत् तेन तेषां लोकः । एवं सर्वान्तर्यामितया रामकृष्णादिरूपेण वा सर्वाश्रयतया स्थितस्य हरेरुक्तरीत्या सर्वाश्रयत्वं जानतः फलं सदृष्टान्तमाह– **यथा ह वा इति** ॥ यथा लोके स्वाय स्वकीयाय । लोकाय आश्रयाय । राजादेररिष्टिमविनाशमिच्छेदिच्छति । एवं ह एवं विदे द्विरूपस्य हरेस्सर्वाश्रयत्वविदे सर्वाणि भूतानि देवादीनि अरिष्टिमविनाशमिच्छन्ति प्रार्थयन्त इत्यर्थः । एवं हरेः सर्वाश्रयत्वमुपपाद्य तत्र प्रमाणमाहोपनिषत्– **तद्वा एतदिति** ॥ तदेतद् विष्णोः सर्वाधारत्वम् । सर्ववेदैर्विदितं प्रतिपादितम् । मीमांसाभिश्च निश्चितं ऋषिभिर्विचारितमिति वार्थः ॥ ३-५-१० ॥

[गृहस्थाश्रमधर्मश्रैष्ठ्यम्]

**आत्मैवेदमग्र आसीदेक एव सोऽकामयत जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेत्येतावान्वै कामो नेच्छꣳश्च नातो भूयो विन्देत्तस्मादप्येतर्ह्येकाकी कामयते जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेति स यावदप्येतेषामेकैकं न प्राप्नोत्यकृत्स्न एव तावन्मन्यते तस्योकृत्स्नता मन एवास्यात्मा वाग्जाया प्राणः प्रजा चक्षुर्मानुषं वित्तं चक्षुषा हि तद्विन्दते श्रोत्रं दैवं श्रोत्रेण**

**हि तच्छृणोत्यात्मैवास्य कर्मात्मना हि कर्म करोति स एष पाङ्क्तो यज्ञः पाङ्क्तः पशुः पाङ्क्तः पुरुषः पाङ्क्तमिदꣳ सर्वं यदिदं किञ्च तदिदꣳ सर्वमाप्नोति य एवं वेद ॥ ११ ॥**

इत्यव्याकृतब्राह्मणम् ॥ ३-५ ॥

गृहस्थे स्थित्वा यज्ञादिकरणेन सर्वाश्रय इत्युक्त्या भगवता रामादिरूपेण गार्हस्थस्यानुष्ठानाच्च गार्हस्थ्यं श्रेष्ठमिति भावेन हरेर्गार्हस्थ्यमाह– **आत्मैवेदमिति** ॥ इदमस्य जगतः । अग्रे प्रलये । आत्मा परिपूर्णो नारायण एवासीत् । एक एव स आत्मा । अकामयत ऐच्छत् । कथमित्यत आह– **जाया मे स्यादित्यादिना** ॥ **कुर्वीयेत्यन्तेन** ॥ विद्यमानामेव जायां भोगार्थमैच्छदित्यर्थोऽस्य ध्येयः । एक एवेत्युक्तिस्तु [१]'अवियुक्तस्तया यदा । एक इत्युच्यत' इति स्मृतेरवियुक्तत्वाभिप्राया। अथ तद्रमणानन्तरम्। प्रजायेय प्रजनयेय । पुत्रं जनयेयेत्यर्थः । अथ अनन्तरम् । वित्तं द्रविणम्। कर्म यज्ञादि । कुर्वीयेत्यकामयतेति प्रत्येकमन्वयः । न केवलमकामयत। ब्रह्मादिदेवरूपान् पुत्रान् पञ्चमहाभूतब्रह्माण्डतदन्तःस्थलोकरूपवित्तं स्वात्मोद्देशेन यज्ञादिकर्म च कृतवांश्चेत्यपि ध्येयम् । इच्छोक्त्यैव 'इच्छामात्रं प्रभोः सृष्टिः' (माण्डूक्य १.१४) इत्युक्तेः सृष्टेरपि लाभात्तदनुक्तिः । उक्तचतुष्टयातिरिक्तं कुतो न कामितवानित्यत आह– **एतावानिति** ॥ एतावान् खलु काम्यमानोऽर्थः । कुतः? अत उक्तचतुष्टयाद्भूयः अधिकमिच्छन्नपि न विन्देत् नाप्नुयात्। तस्मात् काम्यस्यैतावत्त्वाद्भगवता कामितत्वाद्वा । एतर्ह्यपीदानीमपि एकाकी लौकिको जनः । कुर्वीयेतीति पदस्य प्रत्येकमन्वयः। वित्तं दैवं मानुषं चेति द्विविधम्। दैवं सुखज्ञानादिकम् । मानुषमित्यत्र भार्यादिचतुष्टयादन्यत्काम्यं नेत्युक्त-

---

१. अयमत्र स्मृतिपाठः–एको नारायणः पूर्वमासीज्जायां स ऐच्छत । विद्यमानामपि सदा भोगार्थं पुरुषोत्तमः । नित्यत्वेऽप्युभयोर्देवोऽवियुक्तस्तु तया यदा । एक इत्युच्यते देव्या रममाणः सुतं विभुः । ऐच्छत् ब्रह्मा ततो जज्ञे ततो देवाश्च सर्वशः ॥' इत्यादि माहात्म्ये ।

चतुष्टयस्य काम्यत्वं व्यनक्ति– **स इति**॥ स एवं कामनावानपि। एतेषां चतुर्णां मध्ये। एकैकं यावद्यदा न प्राप्नोति तावत्तदा स्वात्मानं अकृत्स्नोऽपूर्णोऽहमिति मन्यते। जायाद्यप्राप्तिमतः कृत्स्नतावाप्तिप्रकारमाह– **तस्यो कृत्स्नतेति**॥ तस्य उ तस्यापि जायाद्यलाभिनोऽपि। कृत्स्नता उच्यते इति योज्यम्। कथमित्यतस्तदाह– **मन एवेत्यादिना**॥ मनः स्वरूपभूतं मनः। अस्यात्मा स्वात्मेति चिन्तयेत्। वाक् स्वरूपभूतवागिन्द्रियम्। जायेति चिन्तयेत्। प्राणः स्वरूपभूतं बलं पुत्र इति चिन्तयेत्। चक्षुर्मानुषं वित्तमिति चिन्तयेत्। कुतः? यस्माच्चक्षुषा हि तत् मानुषं वित्तं हिरण्यादिकम्। विन्दते प्राप्नोति। श्रोत्रं दैवं वित्तमिति चिन्तयेत्। कुतः? हि यस्मात्। श्रोत्रेण तद्विद्यारूपं शृणोति। अस्य एवं चिन्तयतः आत्मैव एवंभूतचिन्तनमेव कर्मेति चिन्तयेत्। कुतः? आत्मना चिन्तनेनैव कर्म करोति। कुतो मन आदीनामात्मत्वादिनाऽनुचिन्तनं कार्यमिति चेत् प्रसिद्धयज्ञस्याप्यात्मादिपञ्चकसाध्यत्वादिति भावेनाह– **स इति** ॥ स एष प्रसिद्धो यज्ञः। पाङ्क्तः आत्मप्रियापुत्रद्विविधवित्तरूपपञ्चकसाध्यः। न केवलं यज्ञ एव पाङ्क्तः किन्तु यज्ञाङ्गं पशुः ऋत्विगादिपुरुषश्चेति प्रसङ्गादाह– **पाङ्क्त इति**॥ पशुपुरुषयोः पाङ्क्तत्वं मातापितृभ्यामन्नेन तयोः कर्मणा स्वकर्मणा च साध्यत्वरूपं ध्येयम्। न केवलं यज्ञपशुपुरुषा एव पाङ्क्ताः किं तर्हि यदिदं किञ्च प्राणिजातं सर्वं पाङ्क्तं मात्रादिपञ्चकसाध्यं इति भावयेदिति सर्वत्र योज्यम्। पश्वादेः पाङ्क्तत्वज्ञानिनः फलमाह– **तदिदमिति**॥ योऽधिकारी ब्रह्मपदयोग्यः। एवं मन आदीनां स्वात्मत्वादिकम्। वेद चिन्तयति। स यदिदं जगत्तत्सर्वमाप्नोति। सर्वस्यास्य पतिर्भवतीत्यर्थः। ब्रह्मपदायोग्यश्चेद्देवपदमाप्नोति। तस्याप्ययोग्यास्स्वयोग्यफलमाप्नुयुरित्यर्थः॥ भाष्ये 'आत्मैवेदमग्र आसीत्' इत्यादि खण्डं 'एको नारायणः पूर्वमासीत्' इत्यादि प्रमाणानुसारेण परमेश्वरपरतया व्याख्याय 'आत्मा तु जगतां ब्रह्म तस्यात्मा भगवान् हरिः' इत्यादि प्रमाणानुरोधेन चतुर्मुखपरतयापि व्याचख्यौ। तथाहि। इदं अस्य

जगतः । आत्मा स्वामी चतुर्मुखः । अग्रे प्रथमम् एक एवासीत् वासुदेवाज्जातोऽभूत् । स एकाकी चतुर्मुखः अकामयतेत्यादेस्स यावदिति पर्यन्तस्य प्रागिवार्थो ध्येयः । स एवं कामयमानोऽपि ब्रह्मा एतेषां जायादीनां मध्ये एकैकं यावन्नाप्नोति यदा न प्राप तावत्तदा अकृत्स्न एव अपूर्ण एवेत्यात्मानं मन्यते अमन्यत । तस्य उ अकृत्स्नत्वमात्मनो मन्वानस्य कृत्स्नता उ पूर्णतैव यथा स्यात्तथोच्यत इत्यर्थः । मानसयज्ञेन भगवन्तमाराध्य जायादिकं लब्धवानिति भावेन मानसयज्ञप्रकारमाह– **मन एवेति** ॥ अस्यात्मा स्वरूपभूतं मन एवासीदित्यर्थः । उपलक्षणमेतत् । वागाद्यात्मान्तपञ्चकं मनश्चेति षट्कमेवासीत् । न बाह्यजायादिकमित्येवकारार्थः। वाक् वागिन्द्रियम् । जाया इत्यकल्पयदिति सर्वत्र योजना । प्राणो बलम् । प्रजा पुत्र इति । चक्षुर्मानुषं वित्तमिति । तत्र हेतुः चक्षुषा हीति । श्रोत्रं दैवं वित्तमिति । तत्र हेतुः श्रोत्रेणेति । आत्मैव देह एव । इत्थं चिन्तनं वा । कर्मेत्यकल्पयत् । तत्र हेतुः आत्मनेति । देहेन वा एवं रूपचिन्तनेन वेत्यर्थः । एवं मानसयज्ञेन भगवदाराधने कृते सति तत्प्रसादेनैव वागादिभ्यो जायादिकमासीदित्यर्थः । तया वाग्जायेत्यादि वाक्यमेव योज्यम् । वागित्यादि प्रथमा पञ्चम्यर्थे । 'सप्तसु प्रथमा' इति सूत्रात् । वाचो वागिन्द्रियाज्जाता सरस्वती । जातपदं सर्वत्र योज्यम् । प्राणात्प्रजापुत्रो वायुः चक्षुषो मानुषवित्तपदोक्तहिरण्मयलोकाः । श्रोत्रम् । तृतीयार्थेऽत्र प्रथमा । श्रोत्रेण दैववित्तशब्दिताशेषविद्याः भगवत्प्रोक्ताः जगृह इत्यर्थः । आत्मैव आत्मना देहेन चिन्तनेन वा कर्मजातमिति कृतवानशेषकर्माणीति यावत् । न केवलं वागादीनां विष्णुपूजोपकरणत्वेन चिन्तनामात्रादेव जायादिप्राप्तिरन्ते मुक्तिरिति तदिदमित्यादिना वक्ष्यमाणं फलम् । किन्तु यज्ञादेः पाङ्क्तत्वज्ञानादपीति भावेनाह– **स एष इति** ॥ स प्रसिद्ध एष यज्ञः पाङ्क्तः सवनत्रयतत्पूर्वोत्तरकर्मभेदेन पञ्चदेवताभिः नारायणाद्यनिरुद्धान्तैः पञ्चभिरुपेतः । यज्ञाङ्गं पशुः मध्यशिरः पार्श्वद्वयपुच्छरूपपञ्चकेन तद्देवताभूतनारायणादिरूपपञ्चकेनोपेतः । यज्ञाङ्गऋत्विगादिपुरुषः पाङ्क्तः दिक्चतुष्टय-

मध्यरूपपञ्चकेन तद्देवताभूतनारायणादिरूपपञ्चकेन चोपेतः । यदिदं किञ्च प्राणिजातं इदं सर्वं पाङ्क्तं दिक्चतुष्टयमध्यरूपपञ्चकेन तद्देवताभूतनारायणादि-पञ्चकेन चोपेतम् इत्यचिन्तयद्ब्रह्मेति योज्यम् । तत्तस्माद्यापि यः कश्चिदेवमुक्तप्रकारेण वागादेर्विष्णुपूजोपकरणत्वं यज्ञादेरुक्तरूपपाङ्क्तत्वं च । वेद उपास्ते । स इदं सर्वं जायादिपञ्चकमाप्नोति । अन्ततो मुक्तिं चेत्यर्थः ॥ ३-५-११ ॥

इत्यव्याकृतब्राह्मणम् ॥ ३-५ ॥

## अथ सप्तान्नब्राह्मणम्

[हरेस्सप्तान्नसृष्टिमहिमा]

**यत् सप्तान्नानि मेधया तपसाऽजनयत्पितैकमस्य साधारणं द्वे देवानभाजयत् त्रीण्यात्मनेऽकुरुत पशुभ्य एकं प्रायच्छत् तस्मिन् त्सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदा यो वैतामक्षितिं वेद सोऽन्नमत्ति प्रतीकेन स देवानपि गच्छति स ऊर्जमुपजीवतीति श्लोकाः ॥ १ ॥**

विष्णुब्रह्माणावपि गृहिणावतिष्ठतामतो गृही उत्तम इत्युक्तमात्मैवेत्यादिना । तस्य गृहिणो भगवत्सृष्टं यत्साधारणमन्नं तन्न स्वकीयमेवेति मन्तव्यमिति भावेन प्रकृतहरेस्सप्तान्नस्रष्टृत्वमहिमानमाह– **यत्सप्तान्नानीति** ।। पिता सर्वजगज्जनको विष्णुः । सप्तान्नानि सप्तविधान्यन्नानि । तृप्तिहेतुतया अन्ननामानि । प्राणिभिरद्यमानमेकम् । वैश्वदेवबलिहरणरूपे द्वे । प्राणिनां मनोवाक्पञ्चवायु-रूपाणि त्रीणि पयश्चैकं इत्येवं सप्तान्नानि । मेधया स्वेच्छया । तपसा प्राणिसम्बन्धिकर्मजातेन । अजनयत् असृजत । सप्तानां मध्ये एकमन्नमस्य जगतः साधारणम् । द्वे वैश्वदेवबलिहरणे । 'देवानभाजयत्' सप्तान्नमध्ये अन्नद्वयभागिनो देवानकरोदित्यर्थः । त्रीणि मनोवाक्प्राणरूपाणि । आत्मने स्वस्मै । पशुभ्यः पश्वादिभ्यः । एकं पयोरूपम् । तस्मिन् पयसि । सर्वं जगत् ।

प्रतिष्ठितं तदुपजीव्य वर्तत इत्यर्थः । सर्वमित्युक्तं व्यनक्ति– **यच्चेति** ॥ जङ्गमस्थावररूपमित्यर्थः । सृष्टान्नानां क्षये कथं तदुपजीविनां जीवनमित्यत आह– **कस्मादिति** ॥ सुखरूपाद्धरेस्तानि सर्वदाद्यमानान्यपि न क्षीयन्ते । यो वै अधिकारी । अक्षितिं सृष्टान्नाक्षयहेतुं हरिम् । वेद स वेदी । अन्नं उपलक्षणम् । स्वयोग्यसर्वभोगान् । प्रतीकेन स्वमुखेन । अप्रयत्नेनेति यावत् । अत्ति अनुभवति । स ज्ञानी । देवान् देवत्वं गच्छति । स ऊर्जं देवभोज्यमन्नं उपजीवति इति श्लोकाः व्याख्येयार्थकवाक्यानीत्यर्थः ॥ ३-६-१ ॥

**यत्सप्तान्नानि मेधया तपसा अजनयत्पितेति मेधया हि तपसाऽजनयत्पितैकमस्य साधारणमितीदमेवास्य तत्साधारणमन्नं यदिदमद्यते स य एतदुपास्ते न स पाप्मनो व्यावर्तते मिश्रꣳ ह्येतत् ॥ २ ॥**

तानि वाक्यानि प्रतीकेनोपादाय व्याचष्टे उपनिषत्– **यत्सप्तान्नानीत्यादिना** ॥ मेधयाहीति हिशब्दस्तस्य हरेः पितुः सप्तान्नस्रष्टृत्वप्रसिद्धिद्योतकः । द्वितीयवाक्यमुपादाय व्याचष्टे– **एकमस्येति** ॥ **इदमेवास्येति** ॥ मनुष्यवर्गस्येत्यर्थः । सर्वसाधारणमन्नमात्मीयत्वेन मन्वानस्य दोषमाह– **स इति** ॥ उपास्त इत्युपशब्दस्यावृत्तिः । य एतदन्नमुप स्वसमीप एव वर्तमानम् । स्वात्मीयमेवेति यावत् । उपास्ते मन्यते । स पाप्मनो न व्यावर्तते अक्षयपापवान् स्यादित्यर्थः । कुतः । हि यस्मादेतदद्यमानमन्नमिश्रं देवब्राह्मणसाधारणमत इत्यर्थः ॥ २ ॥

**द्वे देवानभाजयदिति हुतं च प्रहुतं च तस्माद्देवेभ्यो जुह्वति प्र च जुह्वत्यथो आहुर्दर्शपूर्णमासाविति तस्मान्नेष्टियाजुकः स्यात् ॥ ३ ॥**

तृतीयं वाक्यमुपादाय व्याचष्टे– **द्वे देवानभाजयदितीति** ॥ हुतं वैश्वदेवं । प्रहुतं बलिहरणम् । हुतप्रहुते कुतो देवानामन्ने इत्यत आह– **तस्मादिति** ॥

हुतप्रहुतयोर्देवान्नत्वहेतोरद्यतना अपि देवेभ्यो जुह्वति प्रजुह्वति च । न केवलं हुतप्रहुते एव देवानामन्ने किं तर्हीत्यतोऽन्यदपीत्याह– **अथो इति** ॥ पक्षान्तरे अयमथो शब्दः । दर्शपूर्णमासावपि देवानामन्ने इत्याहुरार्या इत्यर्थः । तस्माद्धुत-प्रहुतयोर्देवान्नत्वाद्यज्ञमनुतिष्ठन् पुमान् नेष्टियाजुकस्स्यात् फलेच्छया यज्ञकारी न भवेत् । परस्वेनात्मफलार्थं विनियोगे परस्वापहारदोषापत्तेरिति भावः ॥ ३ ॥

**पशुभ्य एकं प्रायच्छदिति तत्पयः पयो ह्येवाग्रे मनुष्याश्च पशवश्चोपजीवन्ति तस्मात्कुमारं जातं घृतं वै वाग्रे प्रतिलेहयन्ति स्तनं वानुधापयन्त्यथ वत्सं जातमाहुरतृणाद इति ॥ ४ ॥**

त्रीण्यात्मने कुरुत इति वाक्यव्याख्यानस्य बहुत्वात्तदग्रे व्याकरिष्यन्ती श्रुतिः चतुर्थवाक्यं तावदुपादाय व्यनक्ति– **पशुभ्य इति** ॥ [1]तत्पय इति पशुभ्यो दत्तमन्नं पयः पीयमानं क्षीरप्रभृतिद्रवद्द्रव्यमित्यर्थः । तत्कथमित्यत उपपादयति– **पयो हीति** ॥ अग्रे आदौ । शैशव इति यावत् । मनुष्याश्चेत्युक्त्या श्लोके पशुपदं पशुप्रभृतिपरमिति सूचितम् । मनुष्या उपजीवन्तीत्येतावत् व्यनक्ति– **तस्मादिति** ॥ तस्मात्पयश्शब्दितस्याग्रे मनुष्याद्युपजीव्यत्वादिदानीमपि जातं कुमारं घृतं वै पयःकार्यं घृतम् । वाशब्दान्नवनीतं वा । अग्रे प्रथमं [2]उपजीवित्वात् । प्रतिलेहयन्ति । आस्वादयन्ति । लिह आस्वादने । स्तनं वानुधापयन्ति । पाययन्ति । धेट् पाने । वै प्रसिद्धमेतदिति । पशव उपजीवन्तीत्येतद् व्यनक्ति– **अथेति** ॥ पशूनामग्रे पय उपजीवित्वहेतोर्जातं वत्सम् । अतृणादः तृणभक्षको नेत्याहुः ॥ ३-६-४ ॥

**तस्मिन् सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च नेति पयसि हीदꣳसर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न तद्यदिदमाहुः**

---

१. **'तत्पय इति'** इति नास्ति-क., ख. । २. **'उपजीवित्वादि'**ति नास्ति -ग. ।

**संवत्सरं पयसा जुह्वदपपुनर्मृत्युं जयतीति न तथा विद्याद् यदहरेव जुहोति तदहः पुनर्मृत्युमपजयत्येवं विद्वान् सर्वꣳहि देवेभ्योऽन्नाद्यं प्रयच्छति ॥ ५ ॥**

पञ्चमं वाक्यमुपादाय तच्छब्दार्थं व्यनक्ति– **तस्मिन्निति** ॥ **पयसीति** ॥ पीयमानतया पयश्शब्दिते क्षीरप्रभृतिद्रवद्रव्य इत्यर्थः । न केवलं जीवनहेतुत्वात्पयसि प्राणिजातं प्रतिष्ठितं किन्तु पयसः पारलौकिकफलहेतुत्वादपीत्याह– **तद्यदिदमित्यादिना** ॥ संवत्सरं पयसा जुह्वत् । होमं कुर्वन् पुमान् ज्ञानी चेदपुनर्मृत्युं संसारं जयति मुक्तो भवति । अज्ञश्चेदपुनर्मृत्युं भगवदज्ञानं जयति निहन्ति । ज्ञानी भवतीति ज्ञानिनो यदिदमाहुस्तत्तथा न विद्यात् न जानीयात् । कुतः । एवं विद्वान् सप्तान्नसृष्टितत्त्वज्ञानी । यदहः यस्मिन्नहनि पयसा जुहोति । तदहरेवापपुनर्मृत्युं जयति मुक्तो भवति । एकाह-होमेनैव मुक्तो भवतीति यावत् । यतोऽत इति योज्यम् । कुत एवं तस्य महिमेत्यत आह– **सर्वं हीति** ॥ यस्मात्सप्तान्नस्रष्टृत्वज्ञानी पयोहोमेनैव देवेभ्यः सर्वमन्नाद्यं प्रयच्छति । गोपयसः प्रशस्ततया सर्वान्नस्थानीयत्वादिति भावः ॥ ३-६-५ ॥

**कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदेति पुरुषो वा अक्षितिः स हीदमन्नं धिया पुनःपुनर्जनयते ॥ ६ ॥**

षष्ठं वाक्यमुपादाय व्याचष्टे– **कस्मादित्यादिना** ॥ पुरुषो वै विष्णुर्वै । अक्षितिः अन्नाक्षयहेतुः । ततः किमित्यत आह– **स हीति** ॥ इदं सप्तविधमन्नम् । एतेन कस्मादित्येतस्य सुखरूपात्पुरुषादित्यर्थ उक्तो भवति ॥ ३-६-६ ॥

**यो वै तामक्षितिं वेदेति । पुरुषो वा अक्षितिः स हीदमन्नं धिया धिया जनयते । कर्मभिर्यद्धैतन्न कुर्यात् क्षीयेत ह ॥ ७ ॥**

सप्तमं वाक्यमुपादाय व्यनक्ति– **यौ वैतामिति** ॥ अक्षितिः अन्नाक्षयहेतुः । तद् व्यनक्ति– **स हीति** ॥ धिया स्वेच्छया प्राणिकर्मभिश्चेति । पुनः पुनः सृष्टौ हेतुविशेषोक्त्यात्र स हीदमित्यादि पूर्ववाक्येन न पुनरुक्तिः । धिया कर्मभिरि-त्युक्त्या श्लोकादिवाक्यस्थमेधातपश्शब्दौ विवृतौ ध्येयौ । यत् यदि । एतद्ध पुनःपुनर्जननमन्नं न कुर्यात् । तत् तर्हि क्षीयेत ह निश्चितमेतदिति ॥ ७ ॥

**सोऽन्नमत्ति प्रतीकेनेति मुखं प्रतीकं मुखेनात्त्येतत्स देवानपि गच्छति स ऊर्जमुपजीवतीति प्रशꣳसा ॥ ८ ॥**

अष्टमं वाक्यमुपादाय व्यनक्ति– **सोऽन्नमत्तीति** ॥ **अत्त्येतदिति** ॥ एतदन्न-मत्तीत्यर्थः। स देवानपीति वाक्यद्वयं फलार्पकमित्याह– **स देवा-निति** ॥ प्रशंसा प्रशस्तफलबोधकमित्यर्थः । अर्थवाद इति वार्थः ॥ ३-६-८ ॥

**त्रीण्यात्मनेऽकुरुतेति मनो वाचं प्राणं तान्यात्मनेऽकुरुता-न्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषमिति मनसा ह्येव पश्यति मनसा शृणोति कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव तस्मादपि पृष्ठत उपस्पृष्टो मनसा विजानाति यः कश्च शब्दो वागेव सैषा ह्यन्तमायत्तैषा हि नः प्राणोऽपानो व्यान उदानः समानोऽन इत्येतत्सर्वं प्राण एवैतन्मयो वाऽयमात्मा वाङ्मयो मनोमयः प्राणमयः ॥ ९ ॥**

त्रीण्यात्मने इत्यादिवाक्यमुपादाय व्याचष्टे– **त्रीणीत्यादिना** ॥ आत्मने स्वतुष्ट्यर्थम् । चक्षुरादिज्ञानकरणेषु सत्सु कुतो मन एवात्मतुष्ट्यर्थमकरोदित्यतो मनसः प्राधान्यं व्यतिरेकेणाह– **अन्यत्रेति** ॥ अन्यत्रमना इति बहुव्रीहिः । तत्किं वस्तु दृष्टवानिति केनचित्पृष्टे अन्यो वदति । अन्यविषयकमनस्कोऽहमासं

नादर्शं नापश्यं[1] तथेदं वचः श्रुतवान् किमिति पृष्टस्तथैवाह– **अन्यत्रेत्यादि** ॥ एवमन्येन्द्रियेष्वपि मनोव्यासङ्गेन तत्तदिन्द्रियज्ञानानुदयो ध्येयः । मनसि व्याकुले चक्षुरादिभिर्ज्ञानं नोत्पद्यत इत्येतदुपपादयति– **मनसा हीति** ॥ नापश्य-मिति नादर्शं हि यस्मात् मनस्यव्याकुल एव चक्षुषा पश्यति श्रोत्रेण शृणोतीत्यर्थः । न केवलं मनोमात्रमेव स्वतुष्टिहेतुत्वेन स्वस्यान्नं किन्तु स्ववृत्तिकं चेत्याह– **काम इति** ॥ एकविषयकेच्छा कामः । अनेकगोचरेच्छा विचिकित्सा । इत्येतत्सर्वं मन एव तदुपादानकमेवेत्यर्थः । कामादीनामीशतुष्टिकरत्वेन तदन्नत्व-प्रकारश्च कामस्य तद्भक्तिकामत्वेन सङ्कल्पस्य तत्पूजाकृतिविषयत्वेन विचि-कित्सायास्तद्वेदनविषयत्वेन । श्रद्धाया[2]स्सद्गुणोन्नतिविषयत्वेन अश्रद्धाया अन्य-साम्यादिविषयत्वेन । धृतेरीशादन्यस्योत्कर्षनिन्दनादौ । अधृतेरीशनिन्दनादौ । ह्रियास्तत्वमत विसर्जनादिविषयत्वेन । यद्वा भगवन्मतपरित्यागविषयत्वेन । अधृतेर्हरिभक्तित्यागविषयत्वेन । ह्रियाः धियस्तद्विवेकविषयकत्वेन । भियस्तद-ज्ञानप्राप्तिविषयत्वेनेत्येवं प्रकारेण ध्येयः । मनसश्चक्षुरादिभ्यः प्राधान्ये व्यतिरेकः प्रागुक्तः । अधुनान्वयं चाह– **तस्मादिति** ॥ मनसः प्रधानत्वादेव पृष्ठत उपस्पृष्टोऽपि मनसा विजानाति । वाचो भगवदन्नत्वं व्यनक्ति– **यः कश्चि-दिति** ॥ यः कश्चिच्छब्दो ध्वनिवर्णात्मको वागेव वागिन्द्रियमेव । तेनोच्चार्य-माणत्वहेतुना यः कश्चिच्छब्दो वागेवेत्यभेदोक्तिः सर्वशब्दोच्चारणहेतोर्वागिन्द्रियस्य कथं विष्ण्वन्नत्वमित्यत आह– **सैषा हीति** ॥ हि यस्मात्सैषा सर्वशब्दोच्चारणहेतु-भूता वाक् । अन्तं सर्वान्तःस्थं विष्णुमायत्ता तद्विषयिणी । कुतः ? सर्वेषां शब्दानां विष्णुनामत्वादतो विष्ण्वन्नत्वमिति भावः । केषां वाक् विष्णुमायत्ते-त्यतो वेदद्रष्टॄणामित्याह– **एष हि न इति** ॥ नोऽस्माकं वेदद्रष्टॄणामेषा हि वाक् । विष्णुमायत्तेति प्रसिद्धमित्यर्थः । अवान्तरभेदभिन्नस्यापि प्राणस्य भगवदन्नत्वमिति भावेनाह– **प्राण इति** ॥ नोऽस्मांक वेदद्रष्टृऋषीणाम् ।

---

१. 'नादर्शं नापश्य'मिति नास्ति - क.ख. । २. 'स्तद्गुणोन्नति'- ख. ।

इत्येतत्सर्वं प्राण एव। प्राणप्रभेद एवेत्यर्थः। प्राणादेर्भगवत्तुष्टिहेतुत्वेन तदन्नत्व-प्रकारश्च–

'..........प्राणं तत्कर्मणि स्फुटम् ।
तदन्यकर्मसन्त्यागे चापानं व्यानमस्य च ॥
विरोधिनां निरासे त्वथोदानं योगधारणे ॥
मनोवागादीन्द्रियाणां समानं नियमेऽत्र तु' । इत्युक्तदिशा ध्येयः ।

कुतः प्राणमन्नमकुरुत हरिरित्यतो जीवस्य स्वतुष्टिद्वारा श्रेयोहेतुत्वेन प्राधान्यादिति भावेन प्रसङ्गाद्वाङ्मनसोः प्राणस्य च प्राधान्यमाह– **एतन्मयो वाऽयमात्मेति** ॥ अयमात्मा स जीवः। एतन्मयः एतत्प्रधानः। एतच्छब्दं व्यनक्ति– **वाङ्मय इत्यादिना**॥ प्राधान्ये मयट् वाक्प्रधानः मनःप्रधानः प्राणप्रधान इत्यर्थः । वाङ्मनःप्राणाभिमानिनामुत्तमदेवानां सान्निध्यनिमित्तकोत्कर्षवानित्यर्थः। उत्तमदेवमानिकत्वं वागादेः कुत इत्यतोऽपि अयमात्मा सरस्वतीब्रह्म-वायुरूप एतन्मयः तद्विवरणं वाङ्मय इत्यादि। क्रमाद्वाङ्मनः प्राणानामभि-मानिनस्त्रय इत्यर्थः । एतेनोत्तमदेवैरभिमन्यमानत्वाच्च वागादिकमुत्तममित्युक्तं भवति । सरस्वत्यादयो वागाद्यभिमानिनः कुतोऽभवन्नित्यतोऽपि एतदिति। अयमात्मा सरस्वत्यादिरूपः। एतन्मयः प्रकृतपरमात्ममयः। तदीयवागादिजन्य इत्यर्थः । भगवतो वागादिरस्ति चेत्तज्जन्यत्वं सरस्वत्यादेः स्यात् स एव कुत इत्यतोऽप्ययमात्मा हरिः एतन्मयः । तद्विवरणं वाङ्मय इत्यादि । वागादीन्द्रियात्मेत्यर्थः ॥ ३-६-९ ॥

**त्रयो लोका एत एव वागेवायं लोको मनोऽन्तरिक्षलोकः प्राणोऽसौ लोकः ॥ १० ॥**

उत्तमदेवताभिमन्यमानकत्वान्मनआदिर्हरेरन्नमित्युक्तम्। तदुत्तमत्वाय तदभिमानिनां महिमानमाह– **त्रय इत्यादिना** ॥ सर्व एव समा इत्यन्तेन । एत एव प्रकृता एव वाङ्मनः प्राणाभिमानिन एव । त्रयो लोकाः त्रिलोकाभिमानिनः ।

तदेव व्यनक्ति– **वागेवेति** ॥ वाक् वाङ्मानिनी सरस्वती अयं लोकः भूलोकमानिनी । मनो मनोमानी ब्रह्मा अन्तरिक्षलोकाभिमानी । प्राणः प्राणमानी वायुः । असौ लोकः स्वर्गलोकाभिमानीत्यर्थः ॥ ३-६-१० ॥

**त्रयो वेदा एत एव वागेवर्ग्वेदो मनो यजुर्वेदः प्राणः सामवेदः ॥ ११ ॥ देवाः पितरो मनुष्या एत एव वागेव देवाः मनः पितरः प्राणो मनुष्याः ॥ १२ ॥ पिता माता प्रजैत एव मन एव पिता वाङ्माता प्राणः प्रजा ॥ १३ ॥ विज्ञातं विजिज्ञास्यमविज्ञातमेत एव यत्किञ्च विज्ञातं वाचस्तद्रूपं वाग्घि विज्ञाता वागेनं तद्भूत्वाऽवति ॥ १४ ॥ यत्किञ्च विजिज्ञास्यं मनसस्तद्रूपं मनो हि विजिज्ञास्यं मन एनं तद्भूत्वाऽवति ॥ १५ ॥ यत्किञ्चाविज्ञातं प्राणस्य तद्रूपं प्राणो ह्यविज्ञातः प्राणं एनं तद्भूत्वाक्षति ॥ १६ ॥**

एवं त्रयो वेदा एत एवेत्यारभ्य प्राण एवं भूत्वाऽवतीत्यन्तग्रन्थस्यार्थो ध्येयः ॥ यत्किञ्चिद्विज्ञातं विज्ञानविषयः तत् वाचो वाङ्मानिन्या वाण्याः रूपं प्रतिमा हि । यस्माद्वाग्विज्ञाता विज्ञातमानिनी । वाङ्महिमज्ञानिनः फलमाह– **वागिति** ॥ वाक् सरस्वती एनं स्वमहिमज्ञं तद्भूत्वा विज्ञातमानिनी भूत्वा अवति रक्षतीत्येवमग्रेऽपि ज्ञेयम् ॥ विजिज्ञास्यं जिज्ञासाविषयः ॥ अविज्ञातं विज्ञाताविषयः ॥ ३-६-११–१६ ॥

[ब्रह्माणीब्रह्मवायूनां भूम्यादिमानित्वम्]

**तस्यै वाचः पृथिवी शरीरं ज्योतीरूपमयमग्निस्तद् यावत्येव वाक् तावती पृथिवी तावानयमग्निः ॥ १७ ॥**

ब्रह्माणीब्रह्मवायूनां भूम्यादिमानित्वरूपमहिमान्तरमाह– **तस्यै इति** ॥ तस्यै तस्याः । वाचो वाण्याः । पृथ्वी शरीरम् । ज्योतीरूपं प्रतिमा । किं

ज्योतिरित्यत आह– **अयमग्निरिति** ।। पृथिव्यग्नी द्वौ वाण्यभिमन्यमानावित्यर्थः। पृथिवीज्योतिषोः वाक्समपरिमाणाभावे कथं तच्छरीरत्वादिकमित्यत आह– **तद्यावतीति** ।। तत्तस्मात्पृथिव्यग्न्योः वागभिमानिकत्वाद्यावत्येव वाक् यावद् व्याप्ता वाणी तावती पृथिवी तावानयमग्निः ।। ३-६-१७ ।।

**अथैतस्य मनसो द्यौः शरीरं ज्योतीरूपमसावादित्यस्तद्यावदेव मनस्तावती द्यौस्तावानसावादित्यस्तौ मिथुनꣳ समैतां ततः प्राणोऽजायत स इन्द्रः स एषोऽसपत्नो द्वितीयो वै सपत्नो नास्य सपत्नो भवति य एवं वेद ।। १८ ।।**

अथ वाचोऽभिमन्यमानोक्त्यनन्तरं मनोऽभिमानिनो ब्रह्मणोऽभिमन्यमानमुच्यत इत्यथशब्दार्थः । एतस्य मनसो मनोऽभिमानिनो ब्रह्मणः द्यौः शरीरम् । ज्योतीरूपं प्रतिमा । किं ज्योतिरित्यत उक्तम्– **असावादित्य इति** ।। आदित्यो द्यौश्च द्वौ मनोऽभिमानिब्रह्माभिमानिकावित्यर्थः । तद्यावदित्यादेः । प्राग्वद् व्याख्या । तौ वाङ्मनसमानिनौ ब्रह्माणीब्रह्माणौ मिथुनौ समेतां प्राप्तवन्तौ । ततो मिथुनीभावात्प्राणो वायुः रूपान्तरेणाजायत । तस्य प्राणस्य महिमानमाह– **स इन्द्र इत्यादिना** ।। स प्राणः इन्द्रः परमैश्वर्यवान् । स एष प्राणोऽसपत्नः शत्रुहीनः । कल्यादिशत्रुसत्वात्कथमसपत्न इत्यत आह– **द्वितीय इति** । द्वितीयशब्दितः समबलो हि सपत्नो भवति । कल्यादयस्त्वसमबला इति भावः । एतद्वेदिनः फलमाह– **नास्येति** ।। योऽधिकारी एवं प्राणासपत्न इति वेद अस्य सपत्नः शत्रुर्न भवतीत्यर्थः ।। ३-६-१८ ।।

[प्राणोपासकस्य विष्णुलोकजयो ध्रुवः]

**अथैतस्य प्राणस्यापः शरीरं ज्योतीरूपमसौ चन्द्रस्तद्यावानेव प्राणस्तावत्य आपस्तावानसौ चन्द्रस्त एते सर्व एव समास्सर्वेऽनन्तास्स यो हैतानन्तवत उपास्तेऽन्तवन्तꣳ स लोकं**

**जयत्यथ यो हैतानन्तानुपास्ते अनन्तꣳ स लोकं जयति ॥ १९ ॥**

अथैतस्य प्राणस्येत्यादेः प्रागिवार्थः । त एते मनोवाक्प्राणमानिनः प्रागुक्ता ब्रह्मादयस्सर्व एव गुणतस्तरतमभावा अपि व्याप्त्या समाः । सर्वे रुद्राद्यपेक्षया अनन्ताः । बहुगुणाश्रयाः । स यः कश्चिदेतानन्तवतः जीववदल्पगुणानुपास्ते सोऽन्तवन्तं नाशवन्तं लोकं जयति प्राप्नोति । अथेत्यर्थान्तरे । योऽधिकारी एताननन्तानन्यजीवेभ्यो बहुगुणानुपास्ते सोऽनन्तं नाशहीनं विष्णुलोकं जयति प्राप्नोतीत्यर्थः ॥ ३-६-१९ ॥

[चन्द्रस्थवायोरुपासनापद्धतिः]

**स एष संवत्सरः प्रजापतिः षोडशकलस्तस्य रात्रय एव पञ्चदश-कला ध्रुवैवास्य षोडशी कला ॥ २० ॥**

चन्द्रभिमानितया चन्द्रे स्थितस्य वायोर्महिमानमाह– **स एष इति** ॥ स एषः प्रजापतिर्वायुः । सम्यक् हरेः वत्सस्सन् रमत इति व्युत्पत्त्या संवत्सरनामा । षोडशकलः षोडशकलोपेतचन्द्रे विशेषेण सन्निहितस्तस्य चन्द्रस्थवायोः । पञ्चदशकलाः रात्रय एव रात्रिनामका एव । अस्य चन्द्रस्थस्य वायोः । षोडशी कला ध्रुवैव ॥ २० ॥

**स रात्रिभिरेवा च पूर्यते अप च क्षीयते सोऽमावास्याꣳ रात्रिमेतया षोडश्या कलया सर्वमिदं प्राणभृदनुप्रविश्य ततः प्रातर्जायते तस्मादेताꣳ रात्रिं प्राणभृतः प्राणं न विच्छिन्द्या-दपि कृकलासस्यैतस्या एव देवताया अपचित्यै ॥ २१ ॥**

पञ्चदशकलानां कथं रात्रिनामतेत्यत आह– **स इति** ॥ स चन्द्रस्थो वायुः । रात्रिभिः शुक्लपक्षपञ्चदशरात्रिभिरेव पञ्चदशकलाभिरापूर्यते च । कृष्णपक्ष-रात्रिभिः पञ्चदशाभिरपक्षीयते च । शुक्लकृष्णपक्षयोरेकैकस्यां रात्रौ क्रमेण

कलानां पूरणादपक्षयाच्च रात्रिनामिकाः कला इत्यर्थः । स्वयमकलोऽपि वायुः स्वाधिष्ठानचन्द्रकलाभिरित्थमभिधीयते । स पञ्चदशकलारहितः अमावास्यां रात्रिं अमावास्यायां रात्रौ । एतया ध्रुवया षोडश्या कलया सर्वमिदं प्राणभृत् प्राणिजातम् । अनुप्रविश्य ततः प्रातः प्रतिपदि जायते द्वितीयकलायुक्तो भवतीत्यर्थः । तस्मादमावास्यायां रात्रौ चन्द्रस्थवायोः प्राणभृत्सु संस्थित-त्वादेतां रात्रिं एतस्यां रात्रौ । प्राणभृतो जीवतः । प्राणं जीवनं । न विच्छिन्द्यात् । महापापहेतुः प्राणिवधो न कार्यः । कैमुत्येन एतमेवार्थमाह– **अपीति** ।। अल्पदोषहेतुवधस्यापि कृकलासस्य प्राणं न विच्छिन्द्यात् । किमर्थमित्यत आह– **एतस्या इति** ।। एतस्यास्सर्वसन्निहिताया वायुदेवताया अपचित्यै पूजार्थमेवेत्यर्थः ।। ३-६-२१ ।।

**यो वै स संवत्सरः प्रजापतिः षोडशकलोऽयमेव स योऽयमेवं-वित्पुरुषस्तस्य वित्तमेव पञ्चदशकला आत्मैवास्य षोडशी कला स वित्तेनैवा च पूर्यतेऽप च क्षीयते तदेतन्नाभ्यं यदयमात्मा प्रधिर्वित्तं तस्माद्यद्यपि सर्वज्यानिं जीयत आत्मना चेज्जीवति प्रधिनाऽगादित्येवाहुः ।। २२ ।।**

सोमस्थितस्य प्राणस्य सप्तान्नज्ञानिन्यपि स्थितिमाह– **यो वा इति** ।। षोडशकलः षोडशकलचन्द्रान्तःस्थः । अयमेव सः । सः कः । य एवं वित् सप्तान्नसृष्टिज्ञानी पुरुषः अयमिति तत्रस्थ इत्यर्थः । ज्ञानिस्थस्यापि वायोः षोडशकलात्वमाह– **तस्येति** ।। ज्ञानिस्थितस्य वायोः । वित्तं हिरण्यादिकमेव । पञ्चदशकलाः । अस्य सप्तान्नज्ञानिस्थस्य वायोरात्मा देहः । स्वाधिष्ठितज्ञानि-देहः । षोडशी कला । वित्तस्य पञ्चदशकलात्वं व्यनक्ति– **स इति** ।। सः ज्ञानिस्थो वायुः वित्तेनैवागतेनापूर्यते च । अपगतेन क्षीयते । वित्तस्यागमापायित्वा-त्पञ्चदशकलात्वं देहस्य ध्रुवकलात्वं चोपपादयति– **तदेतदिति** ।। यदयमात्मा योऽयमात्मा । तदेतन्नाभ्यं रथचक्रस्थानीयम् । वित्तं प्रधिः अरस्थानीयम् ।

एवं सति फलितमाह– **तस्मादिति** ॥ तस्मादात्मवित्तयोर्नाभिप्रधिस्थानत्वात् यद्यपि सर्वज्यानिं सर्वस्वं क्षीयते परैरपह्रियते तथाप्यात्मना नाभिस्थानीयेन देहेन । चेद्यदि जीवति । तदा तर्ह्ययं प्रधिना अरस्थानीयेन वित्तेन अगात् । वित्तहीनो जायत इति यावत्। इत्येवाहुः ॥ ३-६-२२ ॥

[सप्तान्नोपासकस्य देवलोकप्राप्तिः]

**अथ त्रयो वाव लोका मनुष्यलोकः पितृलोको देवलोक इति सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा कर्मणा पितृलोको विद्यया देवलोको देवलोको वै लोकानाꣳ श्रेष्ठ-स्तस्माद्विद्यां प्रशꣳसन्ति ॥ २३ ॥**

सप्तान्नवेदिनः फलं वक्तुं तदुपयुक्तमाह– **अथेत्यादिना** ॥ पुत्रेणैव औरस-पुत्रेणैव शिष्येणैव वा । पुनःपुनः कर्मकरणलक्षणो मनुष्यलोकः । जय्यो जेतव्यः प्राप्तव्यः। नान्येन कर्मणेति। यद्यपि पुनःपुनः कर्मकरणरूपो मनुष्यलोकः जय्यः स्वात्मीयकर्मणा जन्मान्तरं प्राप्य सम्पादयितुं शक्यः। तथापि विनैव जन्मान्तरमुक्तरूपमनुष्यलोकजयः पुत्रेणैव। पुत्रादिकृतकर्म-फलभोक्ता पितेति भावः । पितृलोकः स्वर्गादिः । ज्योतिष्टोमादिकर्मणा प्राप्यः । [१]देवलोको विद्यया तत्त्वज्ञानेन । 'ज्ञानेनैव परं पदम्'(ब्र.सू. अणु. ३-१) उत्युक्तेः । को विशेषो देवलोकस्य येन विद्यासाध्यत्वं तस्येत्यत आह– **देवलोक इति** ॥ तस्माच्छ्रेष्ठलोकसाधनत्वात् । प्राज्ञा इति शेषः ॥ ३-६-२३ ॥

[सुशिक्षितेन पुत्रेण मनुष्यलोकजयः]

**अथातः सम्प्रत्तिर्यदा प्रैष्यन् मन्यतेऽथ पुत्रमाह त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति स पुत्रः प्रत्याहाहं ब्रह्माऽहं यज्ञोऽहं**

---

१. विद्यया देवलोकः जनोलोकः मोक्षश्च जेय इति सम्बन्धः । यथोक्तम्–'ईयुस्त्रीन् कर्मणा लोकान् ज्ञानेनैव तदुत्तरान् ।' इति ।

**लोक इति यद्वै किं चानूक्तं तस्य सर्वस्य ब्रह्मेत्येकता ये वै के च यज्ञास्तेषाꣳ सर्वेषां यज्ञ इत्येकता ये वै के च लोकास्तेषाꣳ सर्वेषां लोक इत्येकता एतावद्वा इदꣳ सर्वमेतस्मात्सर्वꣳ सन्नयमितोऽभुनजदिति तस्मात्पुत्रमनुशिष्टं लोक्यमाहुस्तस्मादेनमनुशासति स यदैवंविदस्माल्लोकात् प्रैत्यथैभिरेव प्राणैः सह पुत्रमाविशति स यद्यनेन किञ्चिदक्ष्णया कृतं भवति तस्मादेनꣳ सर्वस्मात्पुत्रो मुञ्चति तस्मात्पुत्रो नाम स पुत्रेणैवास्मिंल्लोके प्रतितिष्ठत्यथैनमेते देवाः प्राणाः अमृता आविशन्ति ॥ २४ ॥**

पुत्रेणोक्तो मनुष्यलोकजयो न साधारणेन । किन्तु सुशिक्षितेनेत्याह– **अथात इति** ॥ पुत्रादिसाधनानां साध्यविशेषोक्त्यनन्तरम् । अतः फलवत्त्वात्सम्प्रत्तिः सम्प्रदानमुपदेशः । पित्रा पुत्रं प्रति क्रियमाणोपदेशप्रकार उच्यत इत्यर्थः । यदा पिता निमित्तैर्मरिष्यन्तमात्मानं मन्यते । अथ तदा त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति पुत्रमाह । स एवमुक्तः पुत्रः अहं ब्रह्मा अहं यज्ञोऽहं लोक इति प्रत्युत्तरमाहेत्यर्थः । अत्र ब्रह्मादिपदानां तिरोहितार्थत्वात्तद्व्याचष्टे श्रुतिः– **यद्वा इति** ॥ यत्किञ्च वै प्रसिद्धं अनूक्तं अनुवचनं तस्य [१]सर्वस्य शब्दस्य ब्रह्मेत्येकता ब्रह्मशब्देन ग्रहणमित्यर्थः । ये के च वै प्रसिद्धा द्रव्ययज्ञास्तेषां यज्ञ इत्येकता यज्ञशब्देन ग्रहणमित्यर्थः । ये के च वै प्रसिद्धा लोकाः स्वर्गाद्यास्तेषां लोक इत्येकता लोकशब्देन ग्रहणम् । तथाच त्वं ब्रह्मेत्यादेर्वेदाध्ययनकर्ता भव । तदनन्तरं वेदोक्तरीत्या यज्ञकर्ता सँल्लोको लोकसम्पादको भवेति पित्रोक्तः पुत्रस्तथाध्ययनादिकर्ता भवानीत्युत्तरमुक्तवानिति । उक्तादन्यदपि कस्मात्पित्रा नोपदिष्टमित्यतस्त्रयातिरिक्तस्याभावा-

---

१. **'सर्वस्य'** इति नास्ति - क. ।

दित्याह – **एतावदिति** ।। इदं सर्वं कर्तव्यतयोपदेष्टव्यं एतावदेव । वेदानधीत्य तदुक्तरीत्या यज्ञादिकर्म कृत्वा मोक्षादिलोकमापादयेत्येतावदेवेत्यर्थः । पिता पुत्रं कुत एवानुशास्तीत्याशङ्कां सप्तान्नविद्याज्ञानिनो देवस्य फलोक्त्या निराह– **एतस्मादिति** ।। सन्नयं समीचीनन्यायवन्तम् । सन्मार्गिणमिति यावत् । पुत्रमिति शेषः । इतः प्राप्तः । पुत्रेऽंशेन स्थित्वेति यावत् । एतस्मादनुशिष्टात्पुत्रात् । सर्वं तत्कृतवेदाध्ययनादिफलम् । अभुनजत् 'आमुक्तेः भुङ्क्ते पिता'इति यत्तस्मादनुशिष्टं पुत्रं लोक्यं लोकसाधनं आहुर्ज्ञानिनः । तस्माल्लोक्यत्वादेवैनं पुत्रं अनुशासति अनुशास्ति पितेत्यर्थः । एतस्मात्सर्वमित्यत्र मृतः पुत्रे स्थित्वा भुङ्क्ते इत्युक्तमयुक्तम् । मृतस्य तदयोगात् इत्यत आह– **स इति** ।। अनेन पित्रा । सप्तान्नविदा यदि कदाचित् अक्ष्णया छिद्रेण पापेन । किञ्चित् कर्म कृतं भवति । तदा स पुत्रस्तस्माच्छिद्रकर्मणा एनं स्वपितरम् । मुञ्चति मोचयति पापकर्मफलानुभवं परिहरतीत्यर्थः । तस्माच्छिद्रकर्मणस्त्राणान्निमित्तात्पुत्रो नाम । पुदिति छिद्रपापं ततस्त्रायत इति पुत्र इति । एवं येन पुत्रतः फलमाप्तं तेनैव मनुष्यलोको जित इत्याह – **स इति** ।। पुत्रेणैव पुत्रे स्थित्वैवास्मिन् भूलोके प्रतितिष्ठति न साक्षात् । न केवलं पुत्रे स्थितिरूपः मनुष्यलोकजयादिस्सप्तान्नविद्योपासकस्य फलं अपि तर्हि मोक्षश्चेत्याह– **अथैनमिति** ।। अथ मुक्त्यनन्तरम् । एनं सप्तान्नविदं मुक्त म् । एते प्राणाः वाङ्मनःप्राणाभिमानिनः सरस्वत्यादयो देवाः । अमृताः मुक्तास्सन्तः स्वरूपभूतवागादिनियामकत्वेन आविशन्ति । अत्र मुक्ते जीवे प्राणप्रवेशोक्तिः वायोरुच्यमाना विरिञ्चस्यैव रूपान्तरेण इति ध्येयम् ॥ ३-६-२४ ॥

[ब्रह्माणीब्रह्मणोर्मुक्तनियामकत्वम्]

**पृथिव्यै चैनमग्नेश्च दैवी वागाविशति सा वै दैवी वाग्यया यद्यदेव वदति तत्तद्भवति ॥ २५ ॥**

पृथिव्याद्यभिमानसत्त्वात्कथं मुक्तमाविशेयुरित्यतस्तदानीं तत्त्यागात्प्रवेशो युक्त इति भावेन वागादेः प्रवेशस्य स्थानफले अप्याह– **पृथिव्यै चैनमित्यादिना पर्वत्रयेण**॥ चतुर्थी पञ्चम्यर्थे । सा च ल्यब्लोपे पृथिवीमग्निं च परित्यज्येत्यर्थः । तदभिमानं हित्वेति यावत् । दैवी सप्तान्नविन्मुक्ते विशेषावेशाद्दैवीत्युक्ता वाक् सरस्वती एनं मुक्तं आविशति मुक्तस्वरूपवाच-मिति योज्यम् । का दैवी वागित्यत आह– **सेति** ॥ यया आविष्टया सरस्वत्या प्रेरितो मुक्तो यद्यद्वदति तत्तद्भवत्येव न मोघम् । सा दैवी वागित्यर्थः ॥ ३-६-२५ ॥

**दिवश्चैनमादित्याच्च दैवं मन आविशति तद्वै दैवं मनो येनानन्द्येव भवत्यथो न शोचति ॥ २६ ॥**

दिवश्चैनमिति अद्भ्यश्चैनमिति च पर्वद्वयमेवमेव योज्यम् । आनन्द्येवेत्येवकारव्यावर्त्योक्तिः । अथो न शोचतीति न दुःखी भवतीत्यर्थः ॥ ३-६-२६ ॥

**अद्भ्यश्चैनं चन्द्रमसश्च दैवः प्राण आविशति स वै दैवः प्राणो यः सञ्चरꣳश्चासञ्चरꣳश्च न व्यथतेऽथो न रिष्यति स य एवंवित्सर्वेषां भूतानामात्मा भवति यथैषां देवतैवꣳ स यथैताꣳ देवताꣳसर्वाणि भूतान्यवन्त्येवꣳ हैवंविदं सर्वाणि भूतान्यवन्ति यदु किञ्चेमाः प्रजाः शोचन्त्यमैवासां तद्भवति पुण्यमेवामुं गच्छति न ह वै देवान् पापं गच्छति ॥ २७ ॥**

यो यत्प्रेरितो मुक्तः सञ्चरंश्चासञ्चरंश्च न व्यथते सर्वसामर्थ्ययुक्तत्वात् अथो तस्मादेव न रिष्यति न म्रियते इति [१]मनुष्याणां सञ्चारे व्यथादि असञ्चारे

१. 'अध्वा जरा मनुष्याणां अनध्वा वाजिनां जरा' इत्यभियुक्तोक्तेः ।

चाश्वानामतः सञ्चरन्नसञ्चरंश्चेत्युक्तम् । न केवलं सप्तान्नविद्याभिस्स्वपुत्रे तिष्ठति किन्तु सर्वभूतेषु चेत्याह– **स य इति** ।। एवंवित् एवं सप्तान्नविद्याभिज्ञो देवः । सर्वेषां भूतानामात्मा व्यापको भवति । तत्र दृष्टान्तो– **यथेति** ।। यथैषा प्राणरूपा देवता सर्वेषां भूतानामात्मा एवमित्यर्थः । सप्तान्नविदो मुक्तस्य फलान्तरमाह– **स इति** ।। स वक्ष्यमाणो दृष्टान्तो यथा एतां देवतां प्राणाख्यां सर्वाणि भूतानि अवन्ति । तज्ज्ञानस्य गोप्यत्वेन अयोग्येषु नोपदिशन्ति । एवं ह एवमेव । एवं विदं सप्तान्नविद्याविदं मुक्त म् । सर्वाणि भूतानि अवन्ति गोपायन्ति । सप्तान्नविद्याभिज्ञस्य सर्वभूतस्थितौ भूतशोकेनास्यापि शोकस्स्यादित्यत आह– **यदिति** ।। इमाः प्रजाः । यदु किञ्च यत्किञ्चित् शोचन्ति । तत् शोकशब्दितं दुःखम् । आसां देवतानां नैव भवति । किन्तु अमा देहनियामकदैत्यैस्सहाऽऽसां प्रजानामेव भवति । नतु तत्रस्थसप्तान्नोपासकानां देवानाम् । कुत एतत्प्रजाकृतं पुण्यमेवामुं सर्वप्रजास्थितं सप्तान्नविदं प्रति गच्छति न पापम् । येन तद्धेतुकश्शोकस्स्यादिति भावः । एतदपि कुत इत्यत आह– **न ह वा इति** ।। यतो नियामकतया प्राणिदेहस्थान् देवान् पापं न गच्छति । ह वै प्रसिद्धमेतत् । सप्तान्नविदश्च देवा एवेति भावः । तदाह सूत्रे 'स्वामिनः फलश्रुतेरित्यात्रेयः'(ब्र.सू. ३-४-४४) इति । तत्र प्रजाकृतपुण्यभात्त्वपापालेपयोर्देवानामुक्तेः ।। ३-६-२७ ।।

[इन्द्रियमानिदेवेषु प्राणस्य जयः]

**अथातो व्रतमीमाꣳसा प्रजापतिर्ह कर्माणि ससृजे तानि सृष्टान्यन्योऽन्येनास्पर्धन्त वदिष्याम्येवाहमिति वाग् दध्रे द्रक्ष्याम्यहमिति चक्षुः श्रोष्याम्यहमिति श्रोत्रमेवमन्यानि कर्माणि यथाकर्म तानि मृत्युः श्रमो भूत्वोपयेमे तान्याप्नो-त्तान्याप्त्वा मृत्युरवारुन्धत्तस्माच्छ्राम्यत्येव वाक् श्राम्यति**

**चक्षुः श्राम्यति श्रोत्रमथेममेव नाप्नोद्योऽयं मध्यमः प्राणस्तानि ज्ञातुं दध्रिरेऽयं वै नः श्रेष्ठो यः सञ्चरꣴश्चासञ्चरꣴश्च न व्यथतेऽथो न रिष्यति 'हन्तास्यैव सर्वे रूपमसामेति त एतस्यैव सर्वे रूपमभवꣴस्तस्मादेत एतेना-ख्यायन्ते प्राणा इति तेन ह वाव तत्कुलमाचक्षते यस्मिन् कुले भवति य एवं वेद य उ हैवंविदा स्पर्धतेऽनुशुष्यत्यनुशुष्य हैवान्ततो म्रियत इत्यध्यात्मम् ॥ २८ ॥**

सप्तान्नविद्याविदो वाङ्मनःप्राणान् हरिविषयान् कुर्यात् । साधारणमन्नं च विष्ण्वर्पणबुद्ध्या भूतेभ्यो दद्यादिति व्रतमुक्तम् । तस्यैव हरिप्राण-विषयोच्छ्वासनिःश्वासरूपं व्रतान्तरं प्राण्याच्चैवापान्याच्चेति वक्तुं हरिप्राणविषयं तत्कस्मात्कार्यमित्यतस्तयोर्महिमानमाह– **अथेति** ॥ देवरूपाधिकार्युत्त्यनन्तरं अतः वक्ष्यमाणव्रतस्य फलवत्त्वात्। प्राण्याच्चेत्यादिना वक्ष्यमाणव्रतस्य हरिप्राणविषयतया कार्यत्वमीमांसा क्रियत इत्यर्थः । प्रजापतिर्वासुदेवः । कर्माणि कर्मसाधनानि । अध्यात्मं वचनादिक्रियासाधनवागादीन्द्रियाभिमानिनोऽधिदैवं ज्वलनादिक्रियाकर्त्रग्न्यादिदेवान् ससृजे । ससर्ज । तानि सृष्टान्यग्न्यादीनि अन्योन्येन अन्योन्यमस्पर्धन्त । अहमेव श्रेयानहमेव श्रेयानिति पस्पृधुः । प्राणस्योत्तमतां जानन्तोऽपि इन्द्रादिदेवाः प्राणोत्तमत्वनिर्णयायैव अध्यात्म-मधिदैवं च विवादं कृतवन्त इत्यर्थः । एवं विवादिनो देवान् प्रति यो देवः स्वव्यापरमश्रान्त एव सन् जीवेष्वजस्रं करोति । स एव भवतां मध्ये श्रेष्ठ इति हरिरुवाच । ततस्ते स्वस्वव्यापारं कुर्वतः श्रान्ता बभूवुरिति वक्तुं तत्र तावदध्यात्मं तत्प्रकारमाह– **वदिष्याम्येवेति** ॥ अहं जीवेन वचनक्रियां अश्रान्त एव कारयिष्याम्येवेति वाङ्नामा अग्निः दध्रे मनो दधार । मेन इति यावत् ॥ **इति चक्षुरिति** ॥ चक्षुर्मान्यादित्यो दध्रे। श्रोत्रमानी चन्द्र

इति दध्रे इति प्राग्वत् ज्ञेयम् । एवमन्यानि कर्माणि क्रियासाधनानि मनःप्रभृतीनि । यथाकर्म स्वस्वव्यापारमनुसृत्य दध्र इत्यर्थः । तत्र स्थूलमनोऽभिमानी शक्रः यज्ञादिकर्म अहं करिष्याम्येवेति दध्रे [१]सूक्ष्ममनोऽभिमानी [२]शेषः व्याख्यानं करिष्याम्येवेति दध्रे । तादृङ्मनोभिमानी रुद्रो मननमहमभ्रान्तः करिष्याम्येवेति दध्रे । गरुडः ध्यानं करिष्याम्येवेति दध्र इति ज्ञेयमित्यर्थः । अश्रान्तास्सन्त एव स्वस्वव्यापारान् करिष्याम एव वयमिति मन्वाना वागादीन्द्रियदेवा अग्न्यादयो वचनादिक्रियामनारतं चक्रुरिति सर्वस्य तात्पर्यार्थः । ततः किं जातमित्यत आह– **तानीति** ।। प्रजापतिरित्यनुषज्यते । प्रजापतिर्ब्रह्मा । तानि वागादिदैवतानि । श्रमः श्रमकरो भूत्वा । उपयेमे प्राप्तः । ततश्च श्रमेण भगवत्कर्माकरणहेतुना मृत्युः पापमानी । तानि आप्नोत् व्याप्नोत् । अवारुन्धत् भगवदाराधनादिक्रियाभ्रंशादिरूपावरोधमकरोत् । तस्मान्मृत्युना-वरुद्धत्वादेवाद्यापि वाक् श्राम्यत्येव । चक्षुः श्राम्यति । श्रोत्रं श्राम्यति मनः श्राम्यतीत्यपि ज्ञेयम् । स्वस्वकर्मकृतावशक्ता अभूवन् वागादयो देवा इत्यर्थः । अथेतरदेवानां श्रान्त्यनन्तरं योऽयं मध्यमः प्राणो मुख्यवायुरिममेव प्रजापति-र्ब्रह्मा श्रमकरो भूत्वा नाप्नोत् । समशक्तिमत्त्वात् । ततश्च श्रान्त्यभावेन सदा सर्वभगवत्कर्मकरणाद्धेतोर्मृत्युरपीमं मुख्यवायुं नाप्नोदित्यर्थः । तानि पापात्मासुरावरुद्धानि अग्न्यादिदैवतानि । तदनवरुद्धं मुख्यवायुं ज्ञातुं दध्रिरे मनश्चक्रुः । अयं वै वायुरेव नोऽस्माकं मध्ये श्रेष्ठ इति निश्चिक्युः । श्रैष्ठ्यनिश्चयहेतुमाह– **य इति** ।। ततः किं चक्रुरित्यत उक्तम्– **हन्तेति** ।। हन्तेति हर्षे । सर्वे देवा अस्यैव वायोरेव रूपं प्रतिमा तद्भृत्याश्च असाम भवामेत्युक्त्वेति शेषः । तदाविष्टास्सन्तस्तद्भृत्या अभवन्नित्यर्थः। तस्माद्देवानां प्राणप्रतिमात्वादेते देवा एतेन प्राणनाम्ना आख्यायन्ते– **प्राणा इति** ।।

---

१. 'ज्ञानहेतु'रिति नास्ति - क. । २. '**शेषः व्याख्यानं करिष्याम्येवेति दध्रे । तादृङ्मनोऽभि-मानी रुद्रो मननमहमभ्रान्तः करिष्याम्येवेति दध्रे**' इति नास्ति - क. ।

प्राणाधीनत्वमात्रेण तन्नामवत्त्वेन भाव्यमिति कुत इत्यतस्तत्र दृष्टान्तेन तदुपपादयति– **तेनेति** ।। यस्मिन् कुले यः श्रेष्ठस्तस्य तेन नाम्ना तत्कुलमाचक्षत इति योजना । [१]उक्तप्राणश्रेष्ठत्ववेदिनः फलमाह– **य एवमिति** ।। य एवं प्राण-माहात्म्यं वेद तेन एवंविदा । यः स्पर्धते सोऽनुशुष्याऽन्ततो म्रियत इत्यध्यात्मम् । देहनियामकदेवनिर्णीतवायुश्रैष्ठ्यनिरूपणं कृतमित्यर्थः ।। ३-६-२८ ।।

[अधिदैवं च देवाः प्राणाधीनाः]

**अथाधिदैवतं ज्वलिष्याम्येवाहमित्यग्निर्दध्रे तपस्याम्यहमित्या-दित्यो भास्याम्यहमिति चन्द्रमा एवमन्या देवता यथादैवतꣳ स यथैषां प्राणानां मध्यमः प्राण एवमेतासां देवतानां वायुर्म्लोचन्ति ह्यन्या देवता न वायुस्सैषा नास्तमिता देवता यद् वायुः ।। २९ ।।**

अथ अध्यात्मं प्राणश्रैष्ठ्यनिर्णयप्रकारोक्त्यनन्तरम् । अधिदैवतं प्राणस्य श्रैष्ठ्यनिर्णयप्रकारः उच्यत इत्यर्थः । ज्वलिष्याम्येवेत्यादेस्सङ्गतिरर्थश्च वदि-ष्याम्येवेत्यादेरिव ध्येयः । अन्या देवताश्शक्रशेषरुद्रविपाः । यथा दैवतं तत्त-द्देवतासम्बन्धिकर्मानुसृत्य । दध्रिर इति ज्ञेयमित्यर्थः । तत्प्रकारस्तु वृष्टि-प्रवर्तकोऽहमेवेति शक्रो मनो दध्रे पञ्चरात्रप्रवर्तकोऽहमेवेति शेषः । पञ्चरात्रो-क्तक्रिया तात्पर्यवानहमेवेति रुद्रः । वेदप्रवृत्तिकृदहमेवेति विप इत्येवं ध्येयम् । वागाद्यभिमानिनो देवाः श्रमरूपेण ब्रह्मणा प्राप्ता मृत्युना चावरुद्धाः न तथा प्राण इत्युक्तमत्राप्यतिदिशति– **स यथेति** ।। वक्ष्यमाणनिदर्शनं यथेत्यर्थः । वागादीनां देवानां मध्ये मध्यमः प्राणः यथा श्रमरूपेण प्रजापतिना न प्राप्तोऽदेवं मृत्युनाऽनवरुद्धोऽत एव श्रेष्ठश्च । तथैतासां देवतानामग्न्यादीनां मध्ये वायुरित्यर्थः । अन्या देवताः मृत्युनावरुद्धत्वादेव म्लोचन्ति म्लाना भवन्ति ।

१. 'उक्तश्रेष्ठत्ववादिनः' - क. ।

न वायुः म्लोचति । कुतः यद्वायुः यो वायुस्सैषा देवता । नास्तमिता तस्मादिति योज्यम् । अत्र वायोरनस्तमितत्वं ज्ञाननित्यत्वेन ज्ञेयम् । 'एवं प्रलयकालेऽपि प्रतिभातपरावर' (ब्र.सू.अनु. २-३-८) इत्यादेः[१] ॥३-६-२९ ॥

**अथैष श्लोको भवति। यतश्चोदेति सूर्योऽस्तं यत्र च गच्छतीति प्राणाद्वा एष उदेति प्राणेऽस्तमेति तं देवाश्चक्रिये धर्मँ स एवाद्य स उ श्व इति यद्वा एतेऽमुं ह्यध्रियन्त तदेवाप्यद्य कुर्वन्ति तस्मादेकमेव व्रतं चरेत्प्राण्याच्चैवापान्याच्च नेन्मा पाप्मा मृत्युराप्नुवदिति यद्युच्चरेत्समापिपैषेत्तेनो एतस्यै देवतायै सायुज्यँ सलोकतां जयति ॥ ३० ॥**

**इति सप्तान्नब्राह्मणम् ॥ ३-६ ॥**

अध्यात्ममधिदैवं च वागादिदेवताः प्राणाधीना इत्युक्तार्थे मन्त्रमाह– **अथैष श्लोक इति** ॥ श्लोकमर्धश उदाहृत्य व्याचष्टे– **यत इत्यादिना** ॥ सूर्य इत्युपलक्षणम् सूर्यादयो देवा इत्यर्थः । यत इत्यादि यच्छब्दद्वयस्य तमित्युत्तरार्धगतेन तच्छब्देनान्वयः । यच्छब्दद्वयार्थः प्राणादिति प्राण इति च । यतः [२]प्राणाद्वा एष एते सूर्यादयः उदेतिउद्यन्ति । जायन्त इति यावत् । यत्र प्राणे अस्तमेति अदर्शनं यान्तीत्यर्थः । उत्तरार्धमाह– **तमिति** ॥ देवाः तं प्राणमुद्दिश्य धर्मं हंसोपास्तिलक्षणम् । चक्रिर इति । स एव धर्मोऽद्यापि वर्तते स एव [३]श्वोऽपि वर्तिष्यत इत्यर्थः । तमित्यर्धं व्याचष्टे– **यद्वा इति** ॥ एते देवाः । यत् धर्मसाधनव्रतम् । अमुं हि अमुष्मिन् प्राणश्रैष्ठ्यनिर्णयकाले । अध्रियन्त धृतवन्तः । तदेव व्रतमद्य कुर्वन्ति वै प्रसिद्धम् । अपिपदेन

---

१. प्रलयेऽपि वृत्तिज्ञानतिरोधानाभावादनस्तमितत्वं वायोर्व्याख्यातम् । वर्णकान्तरं च भावबोधे अभिहितम् । 'यद्वा शरीराभिमानाभावेन तदुत्पत्तिनाशाभ्यां नास्योदयास्तमयाविति भावेनैतदुक्तम् । यथोक्तम्–'ब्रह्मा तु निरभीमानाच्छरीर्यप्यशरीरवान्' इति । २. **'प्राणात्'** - ग. । ३. 'इतोऽपि' - ख. ।

प्राणाधीनत्वमात्रेण तन्नामवत्त्वेन भाव्यमिति कुत इत्यतस्तत्र दृष्टान्तेन तदुपपादयति– **तेनेति** ॥ यस्मिन् कुले यः श्रेष्ठस्तस्य तेन नाम्ना तत्कुलमाचक्षत इति योजना । [१]उक्तप्राणश्रेष्ठत्ववेदिनः फलमाह– **य एवमिति** ॥ य एवं प्राणमाहात्म्यं वेद तेन एवंविदा । यः स्पर्धते सोऽनुशुष्याऽन्ततो म्रियत इत्यध्यात्मम् । देहनियामकदेवनिर्णीतवायुश्रैष्ठ्यनिरूपणं कृतमित्यर्थः ॥ ३-६-२८ ॥

[अधिदैवं च देवाः प्राणाधीनाः]

**अथाधिदैवतं ज्वलिष्याम्येवाहमित्यग्निर्दध्रे तपस्याम्यहमित्यादित्यो भास्याम्यहमिति चन्द्रमा एवमन्या देवता यथादैवतꣳ स यथैषां प्राणानां मध्यमः प्राण एवमेतासां देवतानां वायुर्म्लोचन्ति ह्यन्या देवता न वायुस्सैषा नास्तमिता देवता यद् वायुः ॥ २९ ॥**

अथ अध्यात्मं प्राणश्रैष्ठ्यनिर्णयप्रकारोक्त्यनन्तरम् । अधिदैवतं प्राणस्य श्रैष्ठ्यनिर्णयप्रकारः उच्यत इत्यर्थः । ज्वलिष्याम्येवेत्यादेस्सङ्गतिरर्थश्च वदिष्याम्येवेत्यादेरिव ध्येयः । अन्या देवताश्शक्रशेषरुद्रविपाः । यथा दैवतं तत्तद्देवतासम्बन्धिकर्मानुसृत्य । दध्रिर इति ज्ञेयमित्यर्थः । तत्प्रकारस्तु वृष्टिप्रवर्तकोऽहमेवेति शक्रो मनो दध्रे पञ्चरात्रप्रवर्तकोऽहमेवेति शेषः । पञ्चरात्रोक्तक्रिया तात्पर्यवानहमेवेति रुद्रः । वेदप्रवृत्तिकृदहमेवेति विप इत्येवं ध्येयम् । वागाद्यभिमानिनो देवाः श्रमरूपेण ब्रह्मणा प्राप्ता मृत्युना चावरुद्धाः न तथा प्राण इत्युक्तमत्राप्यतिदिशति– **स यथेति** ॥ वक्ष्यमाणनिदर्शनं यथेत्यर्थः । वागादीनां देवानां मध्ये मध्यमः प्राणः यथा श्रमरूपेण प्रजापतिना न प्राप्तोदेवं मृत्युनाऽनवरुद्धोऽत एव श्रेष्ठश्च । तथैतासां देवतानामग्न्यादीनां मध्ये वायुरित्यर्थः । अन्या देवताः मृत्युनावरुद्धत्वादेव म्लोचन्ति म्लाना भवन्ति ।

---

१. 'उक्तश्रेष्ठत्ववादिनः' - क. ।

न वायुः म्लोचति । कुतः यद्वायुः यो वायुस्सैषा देवता । नास्तमिता तस्मादिति योज्यम् । अत्र वायोरनस्तमितत्वं ज्ञाननित्यत्वेन ज्ञेयम् । 'एवं प्रलयकालेऽपि प्रतिभातपरावर' (ब्र.सू.अनु. २-३-८) इत्यादेः[१] ॥ ३-६-२९ ॥

**अथैष श्लोको भवति। यतश्चोदेति सूर्योऽस्तं यत्र च गच्छतीति प्राणाद्वा एष उदेति प्राणेऽस्तमेति तं देवाश्चक्रिरे धर्मꣳ स एवाद्य स उ श्व इति यद्वा एतेऽमुं ह्यध्रियन्त तदेवाप्यद्य कुर्वन्ति तस्मादेकमेव व्रतं चरेत्प्राण्याच्चैवापान्याच्च नेन्मा पाप्मा मृत्युराप्नुवदिति यद्युच्चरेत्समापिपैषेत्तेनो एतस्यै देवतायै सायुज्यꣳ सलोकतां जयति ॥ ३० ॥**

**इति सप्तान्नब्राह्मणम् ॥ ३-६ ॥**

अध्यात्ममधिदैवं च वागादिदेवताः प्राणाधीना इत्युक्तार्थे मन्त्रमाह– **अथैष श्लोक इति** ॥ श्लोकमर्धश उदाहृत्य व्याचष्टे– **यत इत्यादिना** ॥ सूर्य इत्युपलक्षणम् सूर्यादयो देवा इत्यर्थः । यत इत्यादि यच्छब्दद्वयस्य तमित्युत्तरार्धगतेन तच्छब्देनान्वयः । यच्छब्दद्वयार्थः प्राणादिति प्राण इति च । यतः [२]प्राणाद्वा एष एते सूर्यादयः उदेतिउद्यन्ति । जायन्त इति यावत् । यत्र प्राणे अस्तमेति अदर्शनं यान्तीत्यर्थः । उत्तरार्धमाह– **तमिति** ॥ देवाः तं प्राणमुद्दिश्य धर्मं हंसोपास्तिलक्षणम् । चक्रिर इति । स एव धर्मोऽद्यापि वर्तते स एव [३]श्वोऽपि वर्तिष्यत इत्यर्थः । तमित्यर्धं व्याचष्टे– **यद्वा इति** ॥ एते देवाः । यत् धर्मसाधनव्रतम् । अमुं हि अमुष्मिन् प्राणश्रैष्ठ्यनिर्णयकाले । अध्रियन्त धृतवन्तः । तदेव व्रतमद्य कुर्वन्ति वै प्रसिद्धम् । अपिपदेन

---

१. प्रलयेऽपि वृत्तिज्ञानतिरोधानाभावादनस्तमितत्वं वायोर्व्याख्यातम् । वर्णकान्तरं च भावबोधे अभिहितम् । 'यद्वा शरीराभिमानाभावेन तदुत्पत्तिनाशाभ्यां नास्योदयास्तमयाविति भावेनैतदुक्तम् । यथोक्तम्–'ब्रह्मा तु निरभीमानाच्छरीर्यप्यशरीरवान्' इति । २. '**प्राणात्**' - ग. । ३. 'इतोऽपि' - ख. ।

श्वोऽपि कर्तार इति समुच्चीयते । यदर्थं प्राणस्योत्तमत्वं साधितं तदाह– **तस्मादिति** ॥ प्राणस्य सर्वजीवोत्तमत्वात् । मा माम् । पाप्मा मृत्युर्नेत् नैवाप्नुवदिति मन्वानोऽधिकारी एकमेव प्राणमात्रविषयकमेव । प्राण्याच्चापान्याच्च श्वासोच्छ्वासरूपं हंसोपास्तिलक्षणं व्रतम् चरेत् कुर्यात् । उपक्रान्तं प्राणव्रतं मध्ये न विसर्जयेदित्याह– **यद्युच्चरेत्** ॥ यदि प्राणव्रतं चरेत् प्रारभेत । तर्हीति शेषः । समापिपयिषेत् समापयितुमिच्छेत् समापयेदेवेत्यर्थः । यद्वा यद्युच्चरेत् देवतान्तरव्रतमारभेत चेत् समापिपयिषेत् समापयितुमिच्छेदित्यर्थः। उक्तव्रतमनुतिष्ठतः फलम्– **तेनेति** ॥ तेन उ तेनैव एतद्व्रतानुष्ठानेनैव। एतस्यै देवतायै एतस्या विष्ण्वाख्यदेवतायास्सायुज्यम्[१] । सलोकतां समान-लोकताम् । तेन वायुना । जयति प्राप्नोति । अधिकारिभेदेन सायुज्यादि[२]प्राप्य-द्वयोक्तिः ॥ ३-६-३० ॥

इति सप्तान्नब्राह्मणम् ॥ ३-६ ॥

## अथ त्रयब्राह्मणम्

**[नामरूपकर्मात्मकस्य विश्वस्य शिववाणीवाणीशाः स्रष्टारः]**

**त्रयं वा इदं नाम रूपं कर्म तेषां नाम्नां वागित्येतदेषामुक्थमतो हि सर्वाणि नामान्युत्तिष्ठन्त्येतदेषाꣳ सामैतद्धि सर्वैर्नामभिः सममेतदेषां ब्रह्मैतद्धि सर्वाणि नामानि बिभर्ति ॥ १ ॥**

सर्वस्रष्टृत्वाद्वायुरुत्तम इत्युक्तम् । तदेवोत्तमत्वं प्रकारान्तरेणाह– **त्रयमित्यादि ब्राह्मणेन** ॥ इदं जगत् । नामरूपं कर्मेति त्रयं वै त्रिविधं वै । कर्मेत्यनन्तरमिति शब्दो योज्यः । तेषां नामरूपकर्मणां मध्ये नाम्नां वाग्भारतीत्येतद्दैवतम् । तन्महिमानमाह– **एतदिति** ॥ एषां नाम्नां वागित्येतदुक्थं उत्थापकम् । कथम्– **अतो हीति** ॥ हि यस्मादतो वाग्देव्याः भारत्याः सर्वाणि नामान्युत्तिष्ठन्ति

---

१. '**विष्ण्वाख्यदेवतायाः**' इति नास्ति - क. । २. '**सायुज्यादि**' इति नास्ति - क. ।

उत्पद्यन्ते । वाचो महिमान्तरमाह– **एतदिति** ।। वागित्येतत् वाग्दैवतं [1]एषां नाम्नां साम । कुतः हि यस्मादेतत् वाग्दैवतम् । सर्वैर्नामभिः शब्दैः सहैव रूपाणि कर्माणि च माति जानातीति च समम् । वाचो गुणान्तरमाह– **एतदिति** ।। वागित्येतत् । वाग्दैवतं एषां नाम्नां ब्रह्म कुतः? हि यस्मात् वागित्येतत् सर्वाणि नामानि बिभर्ति तस्माद्ब्रह्मेत्यर्थः ।। ३-७-१ ।।

**अथ रूपाणां चक्षुरित्येतदेषामुक्थमतो हि सर्वाणि रूपाण्युत्तिष्ठन्त्येतदेषां सामैतद्धि सर्वै रूपैः सममेतदेषां ब्रह्मैतद्धि सर्वाणि रूपाणि बिभर्ति ।। २ ।।**

नामाभिमानिदैवतमुक्त्वा रूपाभिमानिदैवतमाह– **अथेति** ।। नामाभिमान्युक्त्यनन्तरं रूपमान्युच्यत इति योज्यम् । रूपाणां चक्षुश्चक्षुर्नामा रुद्र इत्येतद्दैवतम् । शिष्टं प्राग्वत् । सर्वै रूपैस्सह [2]नामानि कर्माणि च माति जानातीति सममित्यर्थः ।। ३-७-२ ।।

**अथ कर्मणामात्मेत्येतदेषामुक्थमतो हि सर्वाणि कर्माण्युत्तिष्ठन्त्येतदेषाꣳ सामैतद्धि सर्वैः कर्मभिः सममेतदेषां ब्रह्मैतद्धि सर्वाणि कर्माणि बिभर्ति तदेतत्त्रयꣳ सदेकमयमात्माऽऽत्मैकः सन्नेतत्त्रयं तदेतदमृतꣳ सत्येन च्छन्नं प्राणो वा अम्मृतं नामरूपे सत्यं ताभ्यामयं प्राणश्छन्नः ।। ३ ।।**

इति त्रयब्राह्मणम् ।। ३-७ ।।

इति बृहदारण्यके तृतीयोऽध्यायः

कर्ममानिनमाह– **अथ कर्मणामिति** ।। आत्मा प्राण इत्येतद्दैवतमित्यर्थः । शिष्टं प्राग्वत् । सर्वैः कर्मभिस्सहैव नामानि रूपाणि च माति जानातीति

---

१. 'एषा'मिति नास्ति-ख. । २. 'नामानी'ति नास्ति-ख. ।

सममित्यर्थः। भारतीरुद्रवायूनां नामादित्रितयाभिज्ञत्वोक्त्या प्राप्तसाम्यशङ्कां वारयति– **तदेतदिति** ।। तदेतद्वागादित्रयं सदेकं द्वयोरेकाधीनत्वादेकमित्युच्यत इत्यर्थः । स एकः कः यदधीनं द्वयमित्यत आह– **अयमात्मेति** ।। प्राण इत्यर्थः । एक इत्युक्त्या प्राप्ताभेदभ्रान्तिं निराह उ एकः । उपरितनः श्रेष्ठः सन्नेतत्त्रयमिति । कुतः प्राणस्य श्रेष्ठतेत्यत आह– **तदेतदमृतमिति** ।। तद् व्यनक्ति– **प्राणो वा अमृतमिति** ।। नित्यज्ञान इत्यर्थः[१] । सत्येन छन्नमित्येतद्व्यनक्ति– **नामरूपे सत्यमिति** ।। वाक्चक्षुःशब्दिते नामरूपदैवते सत्यमित्यर्थः । ताभ्यां नामरूपदैवताभ्यां भारतीरुद्राभ्यां अयममृतं प्राणश्छन्नः तयोर्नियामकत्वेन तावनुप्रविष्ट इत्यर्थः ।। ३-७-३ ।।

**इति त्रयब्राह्मणम् ।। ३-७ ।।**

**इति काण्वोपनिषदर्थसङ्ग्रहे श्रीराघवेन्द्रतीर्थकृते तृतीयोऽध्यायः**

---

१.नित्यज्ञानत्वाद्वायुरमृतशब्दवाच्य इति काण्वयाज्ञीयभाष्ययोरपि स्फुटम्–'अमृतो वायुरुद्दिष्टः नित्यज्ञानात्मकत्वतः ।' इति ।। 'अतिरोहितविज्ञानाद्वायुरप्यमृतः स्मृतः ।' इति च ।।

# अथ चतुर्थोऽध्यायः

## अथ अजातशत्रुब्राह्मणम्

[स्वहृदिस्थब्रह्मविद्या मुक्तिसाधिका]

**दृप्तबालाकिर्हानूचानो गार्ग्य आस स होवाचाजातशत्रुं काश्यं ब्रह्म ते ब्रवाणीति स होवाचाजातशत्रुः सहस्रमेतस्यां वाचि दद्मो जनको जनक इति वै जना धावन्तीति ॥ १ ॥**

पूर्वाध्याये अश्वमेधब्राह्मणादिभिः प्रायेण बाह्या ब्रह्मविद्या उक्ताः । अत्र त्वध्याये प्रायेणान्तरा ब्रह्मविद्या उच्यन्ते । तत्राद्यब्राह्मणे बाह्या ब्रह्मविद्या न साक्षान्मोक्षसाधिका किन्तु स्वहृदिस्थब्रह्मविद्येत्याह– **दृप्त इत्यादिना** ॥ बलाकस्यापत्यं बालाकिः । गर्गस्य गोत्रापत्यं गार्ग्यः । अनूचानो वेदाध्ययनसम्पन्नः । अत एव दृप्तः दर्पवान् अहङ्कारीति यावत् । आस बभूव । हेत्याश्चर्ये । स ह प्रसिद्धो गार्ग्यः । काश्यं काश्यां भवम् । अजातशत्रुनामानं राजानमभिगम्य । ते तुभ्यम् । ब्रह्म ब्रवाणि वदानीत्युवाच । [१]ब्रूञो लोडुत्तमपुरुषैकवचनं ब्रवाणीति । स एवमुक्तोऽजातशत्रुरुवाच ह किल । किमिति । एतस्यां वाचि ब्रह्म ते ब्रवाणीत्यस्यां वाचि एतद्वचनविषये सहस्रं गवामिति वा निष्काणामिति वा योज्यम् । दद्म इत्यपहासवचनमुवाचेत्यर्थः । कस्मादेवं मामपहससीत्यतो यदि त्वं ब्रह्म जानीथास्तर्हि समीपस्थं ब्राह्मणं त्वां विहाय जनकराजानं प्रति धावनं ब्रह्मजिज्ञासवः कुतः कुर्युरिति भावेनाह– **जनको जनक इति** ॥ तद्धावनमयुक्तं स्यादित्यर्थः । त्वं तु केवलं दर्पेणैव मामात्थ न वस्तुतः ब्रह्म जानासीति भावः । इतिशब्दो हेतौ । इति कृत्वा परिहास इति ॥ ४-१-१ ॥

---

१. 'ब्रूञो' इति नास्ति - क. ।

[गार्ग्याजातशत्रुसवादः]

**स होवाच गार्ग्यो य एवासावादित्ये पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मामैतस्मिन् संवदिष्ठा अतिष्ठाः सर्वेषां भूतानां मूर्धा राजेति वा अहमेतमुपास इति स य एतमेवमुपास्ते अतिष्ठाः सर्वेषां भूतानां मूर्धा राजा भवति ॥ २ ॥**

एवमपहासलज्जितो गार्ग्यः स्वाभ्यस्तविद्यामाह– **स इत्यादिना खण्डद्वादशकेन** ॥ किमुवाचेत्यतो– **य एवेत्यादि** ॥ पुरुषो विष्णुरस्तीति शेषः । एवमग्रेऽपि ज्ञेयम् । राजा त्वया ज्ञातादधिकमप्यहं जानामीत्याह– **स होवाचेति** ॥ एतस्मिन् विष्णोरादित्यस्थत्वोपासनाविषये । मा मां मा संवदिष्ठाः संवादं माकार्षीः । अधिकगुणत्वेन ज्ञातुः पुरतोऽल्पज्ञानेन संवादो न कार्यः । न ह्यादित्यस्थो विष्णुर्ब्रह्मेत्येव मया ज्ञातं येन मामत्र संवदेः किं त्वित्यत आह– **अतिष्ठा इति** ॥ जगद्धर्मवर्जितत्वेन सर्वमतीत्य स्थितत्वादतिष्ठाः सर्वेषां भूतानां मूर्धा उत्तमः । राजा दीप्यमानः । राजृ दीप्ताविति धातोः । इति वै इत्येवाहमेतमादित्यस्थपुरुषमुपास इत्युवाचेति वा इति कृत्वा मा संवदिष्ठा इति वा इतिपदस्य पूर्वेणान्वयः । अतिष्ठत्वादिगुणवैशिष्ट्ये तात्पर्यद्योतनाय तज्ज्ञानिनः फलमाह– **स य इति** ॥ योऽधिकारी । एतमादित्यस्थं पुरुषमेवम् उक्तगुणविशिष्टम् उपास्ते सोऽतिष्ठत्वादिगुणयुक्तो भवतीत्यर्थः । ते च गुणाः यथायोग्यं ध्येयाः ॥ ४-१-२ ॥

**स होवाच गार्ग्यो य एवासौ चन्द्रे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा [१]बृहन् पाण्डुरवासाः सोमो राजेति वा अहमेतमुपास इति स**

१. बृहत् पाण्डरवासा इत्यपि क्वचिदुपनिषत्पाठः ।

**य एतमेवमुपास्तेऽहरहः सुतः प्रसूतो भवति नास्यान्नं क्षीयते ॥ ३ ॥**

स होवाच गार्ग्यो य एवासौ चन्द्र इत्यादिषु द्वादशखण्डेषु एवमेव योजना ध्येया। तत्रादित्यचन्द्रविद्युदाकाशवाय्वग्न्यबादर्शगच्छत्पाश्चात्यशब्ददिक्-छायात्मरूपेषु द्वादशाधिकरणेषु आदित्यादीनि देवतारूपाणि ध्येयानि। [१]'देवतासु भगवन्तमुपास्य' इत्यादि भाष्योक्तेः। बृहन् पाण्डुरं शुक्लं वासो यस्यासौ तथोक्तः। अस्यैवमुपासकस्य गृह इति शेषः। अहरहः प्रति-दिनम्। सुतः प्रसुतस्सोमयागो भवति। अन्नं भोग्यं च न क्षीयते ॥ ४-१-३ ॥

**स होवाच गार्ग्यो य एवासौ विद्युति पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा-स्तेजस्वीति वा अहमेतमुपास इति स य एतमेवमुपास्ते तेजस्वी ह भवति तेजस्विनी हास्य प्रजा भवति ॥ ४ ॥**

तेजस्वी ह भवति इह लोके ॥ ४-१-४ ॥

**स होवाच गार्ग्यो य एवायमाकाशे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मामैतस्मिन् संवदिष्ठाः पूर्णमप्रवर्तीति वा अहमेतमुपास इति स य एतमेवमुपास्ते पूर्यते प्रजया पशुभिर्नास्यास्माल्लोकात्प्रजोद्वर्तते ॥ ५ ॥**

न प्रवर्त्यते केनचिदप्रवर्ति। अस्य प्रजासन्ततिर्नोद्वर्तते न विच्छिद्यते ॥ ४-१-५ ॥

---

१. ''देवतासु भगवन्तमुपास्य तत्र देवतासमीपं प्राप्य पुनः स्वहृदिस्थमुपास्यैव मोक्षो भवतीत्यतो 'नैतावता विदितं भवति' इत्युक्तम्'' इति भाष्यवचनम्।

**स होवाच गार्ग्यो य एवायं वायौ पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा इन्द्रो वैकुण्ठोऽपराजिता सेनेति वा अहमेतमुपास इति स य एतमेवमुपास्ते जिष्णुर्हापराजिष्णुर्भवत्यन्यतस्त्यजायी ॥ ६ ॥**

इन्द्रः परमैश्वर्ययुक्तः । विगतं कुण्ठनं पराभवो यस्यासौ विकुण्ठः स एव वैकुण्ठः । स्वयमेवापराजितबहुरूपत्वादपराजिता सेना । जिष्णुरुत्तमः । अपराजिष्णुरन्यतः पराजयहीनस्वभावः । अन्यतस्त्यजायी अन्येषां जेतेत्यर्थः ॥ ६ ॥

**स होवाच गार्ग्यो य एवायमग्नौ पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा विषासहिरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते विषासहिर्ह भवति विषा-सहिर्हास्य प्रजा भवति ॥ ७ ॥**

शत्रूणामसह्यत्वाद्विषासहिः ॥ ४-१-७ ॥

**स होवाच गार्ग्यो य एवायमप्सु पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठाः प्रतिरूप इति वा अहमेतमुपास इति स य एतमेवमुपास्ते प्रतिरूपꣳ हैवैनमुप-गच्छति नाप्रतिरूपमथो प्रतिरूपोऽस्माज्जायते ॥ ८ ॥**

प्रतिरूपोऽनुकूलः । प्रतिरूपमनुकूलम् । अथो अन्यच्च प्रतिरूपोऽनुकूलः पुत्रोऽस्मादुपासकाज्जायते ॥ ४-१-८ ॥

**स होवाच गार्ग्यो य एवायमादर्शे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा रोचिष्णुरिति**

**वा अहमेतमुपास इति स य एतमुपास्ते रोचिष्णुर्ह भवति रोचिष्णुर्हास्य प्रजा भवत्यथो यैः सन्निगच्छति सर्वाँस्तानति- रोचते ॥ ९ ॥**

रोचिष्णुः प्रकाशनशीलः । उ एव । अथो अन्यच्च । फलं यैर्विद्वद्भिस्सन्निगच्छति सङ्गतो भवति । तान् सर्वान् अतिरोचते अतिक्रम्य प्रकाशते ॥ ४-१-९ ॥

**स होवाच गार्ग्यो य एवायं यन्तं पश्चाच्छब्दोऽनूदेत्येतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा असुरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते सर्वँहैवा-स्मिन् लोक आयुरेति नैनं पुरा कालात् प्राणो जहाति ॥ १० ॥**

यन्तं गच्छन्तम् । अनु पश्चात्पृष्ठतः । शब्द उदेति उत्पद्यते । एतं गच्छत्पाश्चात्य-शब्दस्थं पुरुषमित्यर्थः । असुः आयुष्यप्रदः । सर्वमायुरेतीत्यस्य तात्पर्यमाह– **नैनमिति** ॥ ४-१-१० ॥

**स होवाच गार्ग्यो य एवायं दिक्षु पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा द्वितीयोऽनपग इति वा अहमेतमुपास इति स य एतमेवमुपास्ते द्वितीयवान् ह भवति नास्माद् गणश्छिद्यते ॥ ११ ॥**

द्वितीयः द्वितीयवान् । अनपगः नापगच्छतीत्यनपगः । अनपगो द्वितीय इत्यस्य अनपगतपरिवारवानित्यर्थः । अस्मादुपासकात् । गणः परिवारः ॥ ११ ॥

**स होवाच गार्ग्यो य एवायं छायामयः पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा**

**मृत्युरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते सर्वꣳहैवास्मिन् लोक आयुरेति नैनं पुरा कालान्मृत्युरागच्छति ॥ १२ ॥**

छायामयः छायागतः । मृत्युर्मारकः ॥ ४-१-१२ ॥

**स होवाच गार्ग्यो य एवायमात्मनि पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा आत्मन्वीति वा अहमेतमुपास इति स य एतमेवमुपास्ते आत्मन्वी ह भवत्यात्मन्विनी हास्य प्रजा भवति स ह तूष्णीमास गार्ग्यः ॥ १३ ॥**

आत्मनि हिरण्यगर्भे । आत्मन्वी चित्ताभिमानिविरिञ्चवान् । तत्सेव्य इति यावत् । आत्मन्वी भवति चित्तवान् भवति ॥ ४-१-१३ ॥

**स होवाचाजातशत्रुरेतावन्नू३ इत्येतावद्धीति नैतावता विदितं भवतीति स होवाच गार्ग्य उप त्वा यानीति ॥ १४ ॥**

गार्ग्यस्य तूष्णींभावानन्तरं किं जातमित्यत आह– **स हेति** ॥ स अजातशत्रुः । तूष्णीमासीनं गार्ग्यम् । एतावन्नू एतावदेव । काकुरयम् । त्वया विदितमेतावदेव किमित्युवाच । स एवमुक्तो गार्ग्यः प्रत्याह– **एतावद्धीति** ॥ एतावदेव मया विदितं हीति निश्चयमाह । एवं गार्ग्येण प्रत्युक्तो राजा प्रत्याह– **नैतावता विदितं भवतीति** ॥ आदित्यादिदेवतासु भगवदुपासने तत्तद्देवतासामीप्यं भवति न मोक्षप्राप्तिः । अतो मोक्षाय स्वहृदि हरेरुपास्त्या भाव्यमिति भावेन नैतावता विदितमित्युक्तम् । 'उपासात्रैविध्यात्' (ब्र.सू.१-१-३१) इति सूत्रे 'केषाञ्चित्सर्वगत्वेन केषाञ्चिद्धृदये हरिः । केषाञ्चिद्बहिरेवासावुपास्य'

इति भाष्योक्तेर्बहिरुपासकानामपि किञ्चिद् हृद्गतोपास्त्यैव मोक्ष इति भावः। एवमुक्तः स गार्ग्यः । त्वा त्वां उपयानि। स्वहृदिस्थोपासनाप्रकारं वेदितुं शिष्यत्वेनोपगच्छामि त्वामित्यजातशत्रुं प्रति उवाचेत्यर्थः ॥ १४ ॥

**स होवाचाजातशत्रुः प्रतिलोमं वै तद् यद् ब्राह्मणः क्षत्रियमुपेयाद् ब्रह्म मे वक्ष्यतीति व्येव त्वा ज्ञापयिष्यामीति तं पाणावादायोत्तस्थौ तौ ह पुरुषꣳ सुप्तमाजग्मतुस्तमेतैर्नामभिरामन्त्रयश्चक्रे बृहन् पाण्डरवासः सोम राजन्निति स नोत्तस्थौ तं पाणिना पेषं बोधयाश्चकार स होत्तस्थौ ॥ १५ ॥**

एवमुक्तः सोऽजातशत्रुरुवाच । क्षत्रियो मह्यं ब्रह्म वक्ष्यतीति ब्राह्मणः क्षत्रियं शिष्यत्वेनोपेयादिति यत् एतत् प्रतिलोमं वै विपरीतं वै । तस्मात् त्वा त्वां प्रति ब्रह्म विज्ञापयिष्याम्येव। विज्ञापनमेव करिष्यामि नत्वाचार्य इवोपदेशं करोमीत्यर्थः । 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि'(ब्र.सू.३-२-११) इत्युक्तदिशा सर्वत्र हरेरविशेषेण सत्वात्कथं हृद्गतस्योपास्तिरेव मुक्तिहेतुर्न देवतान्तरगतस्येत्यतः हृद्गतस्य हरेर्देवतान्तःस्थरूपापेक्षया स्वस्मिन् विशेषसम्बन्धं ज्ञापयितुकामस्तं गार्ग्यं पाणावादाय हस्ते गृहीत्वा उत्तस्थौ। तौ गार्ग्याजातशत्रू। कचिद्देशे सुप्तं कश्चित्पुरुषं समाजग्मतुः सङ्गतौ भवतः। हृदिस्थरूपस्य देहे उपकार्यत्वोपकारित्वरूपविशेषसम्बन्धज्ञापनार्थम् । तं सुप्तपुरुषान्तर्गतं हरिम्। बृहन् पाण्डुरवासः सोम राजन्नित्येतैर्नामभिरामन्त्रयाश्चक्रे। सम्बोधयामास। स एवमामन्त्रितस्सुप्तस्थो हरिः नोत्तस्थौ। जीवं नोत्थापयामास । तं सुप्तं पाणिना पेषं कृत्वेति शेषः । बोधयाश्चकार। स सुप्तस्थो हरिरुत्तस्थौ । जीवमुत्थापयामासेत्यर्थः । हेत्याश्चर्ये । 'अतः प्रबोधोऽस्मात्' (ब्र.सू.३-१-८) इति सूत्रात्। नामभिराह्वाने कृतेऽपि नामभिराह्वानमवज्ञाय

पाणिपेषणेनोत्थानं शरीरे हरेर्विशेषसम्बन्धोऽस्तीति ज्ञापनार्थमिति भावः ॥ ४-१-१५ ॥

**स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषः क्वैष तदाऽभूत्कुत एतदागादिति तदु ह न मेने गार्ग्यः ॥ १६ ॥**

कुतः स्वहृदिस्थस्योपकारित्वरूपविशेषसम्बन्धः । येन तदुपास्तिरावश्यकीत्यतः सुप्त्याद्यवस्थाप्रवर्तकत्वादिति विवक्षुस्तथाविधं त्वं जानासि किमिति पृच्छत्यजातशत्रुर्गार्ग्यम्– **स होवाचेत्यादिना** ॥ एष जीवः एतत् एतस्मिन् शरीरे यत्र यस्मिन् हरौ । सुप्तः य एष सुप्ताधारः पुरुषो विज्ञानमयः सम्यक् ज्ञानस्वरूपः। एष विज्ञानमयो हरिः तदा सुप्तिकाले । क्वाभूत् कुत्र स्थितः । एतत् एतस्मिन् प्रबोधकाले । कुत आगादित्युवाचेतीति शब्दान्वयः । तदु ह न मेने तत् सुप्तिकालीनं हरेरावासस्थानं तदागमनविधिं च गार्ग्यो न उ मेने नैव व्यजानात् ॥ ४-१-१६ ॥

[सर्वेन्द्रियोपरमलक्षणा सुप्तिः हरिणैव]

**स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते तानि यदा गृह्णात्यथ हैतत्पुरुषः स्वपिति नाम तद् गृहीत एव प्राणो भवति गृहीता वाग्गृहीतं चक्षुर्गृहीतं श्रोत्रं गृहीतं मनः ॥ १७ ॥**

क्वैतदभूदित्यहं न जाने । त्वं ब्रूहीति पृष्टोऽजातशत्रुस्तदुक्तवानित्याह– **स होवाचेति** ॥ यत्रैष इत्यादिपुरुषान्तोऽग्रे सुप्तिस्वरूपोक्त्यर्थोऽनुवादः । तदा सुप्तिकाले । एषां प्राणानां इन्द्रियाणाम् । विज्ञानं विज्ञानशक्तिम् । विज्ञानेन

[१]बुद्ध्या । बुद्धिपूर्वं स्वेच्छयेति यावत् । आदाय य एषोऽन्तर्हृदये आकाशोऽस्ति तस्मिन् शेते । सुप्तोऽभूदित्युक्तसुप्तिः केत्यत आह– **तानि यदेति** ॥ विज्ञानमयः पुरुषो हरिः । तानि विज्ञानजननशक्तिमन्तीन्द्रियाणि । गृह्णाति निर्व्यापाराणि करोति । अथ तदा । एतत् एतस्मिन् हरौ । पुरुषः स्वपिति नाम प्रसिद्धम् । सर्वेन्द्रियव्यापारोपरमः सुप्तिरित्यर्थः । प्राणानां विज्ञानेन विज्ञानमादायेत्युक्तं विशदयति– **प्राणो घ्राणः** ॥ तेन विज्ञानमयेन गृहीत एव भवतीत्यादि ॥ ४-१-१७ ॥

**स यत्रैत्स्वप्नया चरति ते ह्यस्य लोकास्तदुतेव महाराजो भवत्युतेव महाब्राह्मण उतेवोच्चावचं निगच्छति स यथा महाराजो जनपदान् गृहीत्वा स्वे जनपदे यथाकामं परिवर्तेतैवमेवैष एतत्प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते ॥ १८ ॥**

स्वहृदिस्थः स्वप्नावस्थाप्रेरकत्वाच्च स्वोपकारित्वरूपविशेषसम्बन्धवान् देह इति भावेनाह– **स इति** ॥ सः हरिः । यत्र यदा । एतत् एतस्मिन् शरीरे । स्वप्नया नाड्या। चरति जीवं चारयति च । हरिर्नाड्यां कुतश्चरतीत्यत आह– **ते हेति** ॥ ह यस्मात्ते नाडीविशेषाः । अस्य हरेर्लोकाः तस्मात्तया चरतीत्यन्वयः । जीवेशयोर्द्वयोरपि स्वप्नावस्थागतत्वे को विशेषस्तयोरित्यतः जीवव्यापारं तावदाह– **तदुतेवेति** ॥ तत् तदा। महाराज इव भवति। तद्वदात्मानं पश्यतीत्यर्थः । महाब्राह्मण इव भवतीत्यनुषङ्गः। उतशब्दाः पक्षभेदद्योतकाः । किं बहुना यदुच्चं राजादि यच्चावचं श्वमार्जारादि तद्वदात्मानं निगच्छति पश्यति । एवं जीवस्थितिमुक्त्वा भगवतः स्थितिं सदृष्टान्तमाह– **स इति** ॥ जानपदान् जनपदस्थान् गृहीत्वा परिवर्तते । सञ्चरति एवमेवैष

---

१. 'बुद्ध्येति नास्ति'-ख. ।

भगवान् एतत् एतस्य जीवस्य प्राणान् बाह्येन्द्रियाणि । **स्वे स्वाधीने** ॥ ४-१-१८ ॥

[सुषुम्नास्थहरिसन्निधानादेव सुषुप्तौ जीवः सुखी]

**अथ यदा सुषुप्तो भवति तदा न कस्यचन वेद हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततमभि-प्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते स यथा कुमारो वा महाराजो वा महाब्राह्मणो वाऽतिघ्नीमानन्दस्य गत्वा शयीतैवमेवैष एतच्छेते ॥ १९ ॥**

तानि यदेत्युक्तसुप्तौ विशेषं वक्तुं सुप्तस्थितिमाह– **अथेति** ॥ यदा जीवः कस्यचन किञ्चन । व्यत्ययात् बाह्यविषयान् न वेद तदा सुषुप्तौ भवतीत्यर्थः । क्व सुप्तो भवति जीव इत्यत आह– **हिता इत्यादि** ॥ द्वाभ्यामधिकसप्ततिसहस्राणि हिता इति नाम प्रसिद्धा नाड्यः । शिराः हृदयात् ह हृदयमारभ्य स्थितम् । पुरीततं शिरोऽन्तपर्यन्तं शरीरे व्याप्तम् । सुषुम्नाख्यनाडीविशेषम् । अभि परितः प्रतिष्ठन्ते । ताभिर्नाडीभिः । प्रत्यवसृप्य चरित्वा । पुरीतति सुषुम्नाख्यनाडीविशेषे । शेते नाडीविशेषस्थे हरावित्यर्थः । तदाह सूत्रे 'तदभावो नाडीषु तच्छ्रुतेरात्मनि ह'(ब्र.सू.३-२-७) इति । सुप्तौ ज्ञानरहितश्चेत्कथं तिष्ठतीत्यतस्सुखमयस्तिष्ठतीति सदृष्टान्तमाह– **स यथेति** ॥ स प्रसिद्धो दृष्टान्तो यथा । कुमारो रुद्रः । महाराजो वायुः । महाब्राह्मणो विरिञ्चः । आनन्दस्य आनन्दरूपस्य हरेः । अतिघ्नीं समीपम् । गत्वा शयीत सुखमास्ते । एवमेवैष जीवः । एतत् एतस्मिन् सुषुम्नास्थे हरौ शेते सुखमास्ते ॥ ४-१-१९ ॥

**स यथोर्णनाभिस्तन्तुनोच्चरेद्यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः**

**सर्वाणि भूतानि व्युच्चरन्ति। तस्योपनिषत्सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम् ॥ २० ॥**

इति अजातशत्रुब्राह्मणम् ॥ ४-१ ॥

जाग्रत्प्रवर्तकत्वाच्च स्वोपकारी स्वहृदिस्थ इत्येतत्सदृष्टान्तमाह– **स यथेति** ॥ प्राग्वदर्थोऽनयोः पदयोर्ज्ञेयः ।ऊर्णनाभिस्स्वोपभुक्तमन्नं तन्तुरूपेणोच्चरेत् उद्गमयेत् । यथा वा क्षुद्रा विस्फुलिङ्गा अग्नेर्व्युच्चरन्ति उद्गच्छन्ति। एवमेवास्माद्विज्ञानमयादात्मनो हरेस्सुप्तौ गृहीतास्सर्वे प्राणा इन्द्रियाणि । सर्वे लोकाः भूरादयः । सर्वे देवाश्चतुर्मुखादयः । सर्वाणि तदन्यानि सर्वाणि। भूतानि प्राणिनः। व्युच्चरन्ति उत्पद्यन्ते। लीयन्ते चेत्यपि ग्राह्यम्। अत्र यथोर्णनाभिस्तन्तुनोच्चरेत् एवमेवास्मादात्मनः सर्वे प्राणा इत्येतावता जाग्रत्प्रवर्तकत्वलाभेऽपि यथाग्रेरिति दृष्टान्तपूर्वकं सर्वलोका इत्युक्तिः प्रागुक्तप्राणादिसर्वश्रैष्ठ्यस्योपपादनाय । अन्तर्यामिणो गोप्यं नामाह– **हृदयस्येति** ॥ तस्य हृदिस्थस्य हरेरुपनिषत् रहस्यं नाम किमिति– **सत्यस्य सत्यमिति** ॥ तदर्थं स्वयमेव व्यनक्ति– **प्राणा इति** ॥ प्रागुक्तप्राणलोकदेवभूतानि प्राणन्तीति व्युत्पत्त्या प्राणपदेन ग्राह्यानि । तेषामेष हरिः सत्यं सच्छब्दोऽत्र जन्मस्थितिप्रलयमोक्षपरः तान् यापयतीति सत्यमिति तदर्थ इत्यर्थः ॥ २० ॥

इति अजातशत्रुब्राह्मणम् ॥ ४-१ ॥

## अथ शिशुब्राह्मणम्

[इद्रियनिग्रहार्थं लिङ्ग,(सूक्ष्म)शरीरादिस्थाः प्राण-रमा-रमेशा उपास्याः]

**यो ह वै शिशुꣳ साधनꣳ सप्रत्याधानꣳ सस्थूणꣳ सदामं वेद सप्त ह द्विषतो भ्रातृव्यानवरुणध्ययं वाव शिशुर्योऽयं मध्यमः प्राणस्तस्येवाधानमिदं प्रत्याधानं प्राणः स्थूणा अन्नं दाम ॥ १ ॥**

इन्द्रियजयाभावे विद्या न सिद्ध्यतीत्यतस्तदर्थं काञ्चन विद्यामाह– **यो हवा इत्यादिना** ।। वायुर्गोवत्सरूपेण सर्वप्राणिषु वर्तते । लोके वत्सस्य स्थूलगृहमध्ये सूक्ष्मगृहं कृत्वा तन्मध्ये वत्सबन्धनाय कञ्चन शङ्कुं स्थापयित्वा दाम्ना वत्सं बध्नन्ति तथा देहेऽपि गोवत्सरूपेण सर्वप्राणिगतस्य वायोः सूक्ष्मगृह-स्थूलगृहशङ्कुदामस्थानीयानि प्राणिनां सूक्ष्मदेहस्थूलदेहहरिश्रीतत्त्वानि जानतः सर्वेन्द्रियजयरूपफलोक्तिपूर्वं आधानादिस्वरूपाणि व्यनक्ति– **यो ह वा इति**।। तथाहि यो ह वै प्रसिद्धोऽधिकारी । साधानं सप्रत्याधानं सस्थूणं सदामं शिशुं वेद उपास्ते स उपासकः। द्विषतः विषयाभिधावनहेतून् अत एव भ्रातृव्यान् शत्रून् सप्त मनोबुद्धिसहितज्ञानेन्द्रियरूपान् 'सप्तगतेः' (ब्र.सू.२-४-६) इति सूत्रात् तदभिमान्यसुरान् । अवरुणद्धि वशीकृतेन्द्रियो भवतीत्यर्थः । कः शिशुः किमाधानादिकं यत्साहित्यज्ञानेन इन्द्रियजय इत्यत आह– **अय-मिति** ।। योऽयं प्रागुक्तस्सर्वप्राणिषु स्थितो मध्यमः प्राणो वायुरयमेव शिशुः गोवत्सरूपः । तस्य इदमेव प्रमाणसिद्धं जीवसूक्ष्मशरीरमेवाधानं आवासस्थानभूतं सूक्ष्मगृहम् । इदं जीवस्य स्थूलशरीरमेव प्रत्याधानं वितानम् । गृहाश्रयप्रदेशविस्तारः । प्राणो हरिः स्थूणा वत्सबन्धनस्थाणुः । अन्नं श्रीतत्त्वं दाम बन्धनरज्जुः ।। ४-२-१ ।।

[अक्षिस्थवायूपासकस्याक्षयो भोगः]

**तमेताः सप्ताक्षितय उपतिष्ठन्ते तद्या इमा अक्षँल्लोहिन्यो राज-यस्ताभिरेनꣳ रुद्रोन्वायत्तोऽथ या अक्षन्नापस्ताभिः पर्जन्यो या कनीनका तयाऽदित्यो यत्कृष्णं तेनाग्निर्यच्छुक्लं तेनेन्द्रोऽधरयैनं वर्तन्या पृथिव्यन्वायत्ता द्यौरुत्तरया नास्यान्नं क्षीयते य एवं वेद ।। २ ।।**

अक्षिस्थवायूपास्तिः कार्येति भावेन आख्यायिकामाह– **तमिति** ।। तं अक्षिस्थं वायुं । अक्षितयः अक्षीणज्ञानमनसः । एता वक्ष्यमाणा रुद्राद्यास्सप्त देवताः ।

उपतिष्ठन्ते उपासते । तदेव व्यनक्ति– **तद्या इति** ॥ तत् तत्र । सप्तसु मध्ये । रुद्रः । अक्षन् अक्षणि । या इमाः प्रसिद्धाः लोहिन्यो लोहिताः । राजयः रेखाः । ताभिरधिष्ठानरूपाभिः । ता अधिष्ठायेति यावत् । एनमक्षिस्थवायुम् अन्वायत्तस्तदधीनस्तमुपतिष्ठते इत्यर्थः । अथेत्यर्थान्तरे । या अक्षन्नापः । [1]अक्षन्नापः ताभिः पर्जन्य एनं अन्वायत्त इत्यनुषङ्गः । पूर्वत्रैवार्थः । या कनीनिका चक्षुषि कृष्णवर्णवर्तुलमण्डलमध्यस्था तया आदित्योऽन्वायत्तः । यत्कृष्णं चक्षुषि तेनाग्निरन्वायत्तः । यच्छुक्लं तेनेन्द्रोऽन्वायत्तः । अधरया वर्तन्या चक्षुर्गतोदकादि निर्गमनमार्गेण तामधिष्ठायेति यावत् । एनं वायुं पृथिवी धरादेवी अन्वायत्ता । द्यौः द्युलोकमानिनी उत्तरया वर्तन्या एनमन्वायत्ता । एवं वायुविदः फलमाह– **नास्येति** ॥ योऽधिकारी । एवं मोक्षार्थं रुद्राद्युपास्यमक्षिस्थं वायुं वेद स्थूणाभूतविष्णुना सह वेद । अस्य वेदितुरन्नं न क्षीयते । मुक्तः सन् अक्षयमेव भोगमनुभवतीत्यर्थः ॥ ४-२-२ ॥

**तदेष श्लोको भवत्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन् यशो निहितं विश्वरूपं तस्यासत ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संविदानेत्यर्वाग्बिलश्चमस ऊर्ध्वबुध्न इतीदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन् यशो निहितं विश्वरूपमिति प्राणा वै यशो विश्वरूपं प्राणानेव तदाह तस्याऽऽसत ऋषयः सप्त तीर इति प्राणा वा ऋषयः प्राणा[2]नेतदाह वागष्टमी ब्रह्मण संविदानेति वाग्घ्यष्टमी ब्रह्मणा संवित्ता ॥ ३ ॥**

रुद्रादयः अक्षिस्थं प्राणमुपासत इत्युक्तार्थे मन्त्रं पठति **तदेष श्लोक इति** ॥ तत्र उक्तार्थे संवादीति शेषः । चमस इव चमसः मन्त्रं पादश उपादाय

---

१. 'अक्षण्यापः' - क. ।

व्याचष्टे–**अर्वागित्या-दिना** ॥ यदिदं प्रथमपादोक्तं तच्छिरः । कुतः सिद्धं अर्वाग्बिलचमसत्वं शिरस इत्यतः तत्प्रसिद्धमित्याह– **एष हीति** ॥ एष शिरः । चमसशब्दापेक्षया एष इति पुल्लिङ्गता। चम्यते भक्ष्यतेऽनेनेति चमसः । चमु अदने इत्यतोऽस प्रत्ययः। तदुक्तं सूत्रे 'चमसवदविशेषात्' (ब्र.सू.१-४-९) इत्यत्र चमसशब्दो यथा शिरसि मुख्यः 'इदं तच्छिर' इत्याद्युक्तिबलादेवमव्यक्तादिशब्दोऽपि [१]'नामानि सर्वाणि' इत्युक्तिबलाद्विष्णौ मुख्य इति । द्वितीयं पादमुपादाय व्याचष्टे– **तस्मिन्नित्यादिना** ॥ तस्मिंच्छिरसि दक्षिणाक्षणि । प्राणा वै यशो विश्वरूपं यशो विश्वरूपशब्दिताः प्राणा वै प्राणा एवेत्युक्तं व्यक्तमाह– **प्राणानेतदिति** ॥ तस्मिन् यशो निहितं विश्वरूपमित्येतत्प्राणान् विष्णुरमावायून् आहेत्यर्थः । ज्ञानसुखात्मकत्वात् यशश्शब्देन गुणपूर्णरूपत्वात् स्त्रीषु पूर्णत्वात् जीवेषु पूर्णत्वात् क्रमाद्विष्णुरमावायवो विश्वरूपशब्देन प्रणेतृत्वहेतुना प्राणशब्देन चोच्यन्त इति भावः । यद्वा एतत्प्राणानाहेति कुत इत्यतः प्राणा वा इति पूर्ववाक्यम् । यशो विश्वरूपं यशो विश्वरूपशब्दोक्तास्त्रयो दक्षिणाक्षिगाः प्राणा वै प्रणेतारो वै । तस्मादिति योजना । एतत् तस्यासत ऋषय इत्येतत्प्राणानाह । कुतः । प्राणा वा ऋषय इति सप्तऋषयः प्रणेतारो वै अत इति योजना । तथाच वक्ष्यमाणास्सप्त ऋषयः तीरे शुक्लोहितादिरेखारूपस्थानेषु । तस्य वायोरुपासकास्सन्त आसत इति तृतीयपादस्यार्थ इति भावः । न सप्तऋष्युपास्यत्वमेव वायोरपि तु वागुपास्यता चास्तीति भावेन प्रवृत्तं चरमपादमुपादाय वागित्येकपदस्यार्थमाह– **वागित्यादिना** ॥ वाग्देवी हि प्रसिद्धा । वाचि स्थिता सरस्वती अष्टमी अष्टसंख्यापूरिका । ब्रह्मणा ब्रह्मनाम्ना वायुना । संवित्ता ज्ञाता । स स्थूणं वायुं उपास्त इति योज्यम् ॥ ४-२-३ ॥

---

१. **'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति'** इति भाल्लवेयश्रुतिः ।

**इमावेव गौतमभरद्वाजावयमेव गौतमोऽयं भरद्वाज इमावेव विश्वामित्रजमदग्नी अयमेव विश्वामित्रोऽयं जमदग्निरिमावेव वसिष्ठकश्यपावयवमेव वसिष्ठोऽयं कश्यपो वागेवात्रिर्वाचा ह्यन्नमद्यतेऽत्रिर्ह वै नामैतद्यदत्तिरिति सर्वस्यात्ता भवति सर्वमस्यान्नं भवति य एवं वेद ॥ ४ ॥**

इति शिशुब्राह्मणम् ॥ ४-२ ॥

ननु ताभिरेनं रुद्रोऽन्वायत्त इत्यादिना रुद्रादयः प्राणं सेवन्त इत्युक्तार्थे सप्तर्ष्युपास्यत्वबोधकमन्त्रोक्तिः कथमित्यतो मन्त्रे सप्तर्षिपदेन रुद्रादय एव विवक्षिता इति भावेन गौतमभरद्वाजादिसप्तऋषिवाचकशब्दैर्योगवृत्त्या रुद्रादय एवाभिधेया इत्याह – **इमावेवेति** ॥ इमौ इत्युक्तौ कावित्यतः प्रागुपासकत्वेन रुद्रोऽन्वायत्त इत्यादिना निर्दिष्टा एवेति भावेनाह– **अयमेवेति** ॥ प्रागुक्तो रुद्र एवातिशयेन ज्ञानवत्त्वहेतुना गौतम इत्युक्तः । अयमेव पर्जन्य एव वृष्टिद्वारा वाजमन्नं बिभर्तीति भरद्वाज उक्तः । अयमादित्य एव स्वप्रकाशेन विश्वज्ञापकत्वहेतुना विश्वामित्रशब्दोक्तः । अयमग्निः जं जातं [१]मितं परिमितमत्तीति व्युत्पत्त्या जमदग्निपदोक्तः । अयमिन्द्र एव सतामुत्तमत्वहेतुना वसिष्ठपदोक्तः । अयं पृथिवीत्युक्तो देवः कं मेघवृष्टमुदकं शयान एव पिबतीति कश्यपशब्दोक्तः । वाक् वागभिमानिनी द्यौरेवात्रिरत्रिपदोक्ता[२] । कुत इत्यतः व्युत्पत्त्या दर्शयति– **वाचा हीति** ॥ द्यौरित्युक्तया वाचान्नं द्युस्थैर्हुतमद्यते हि यतोऽत इति तर्ह्यत्तिरिति स्यात् न त्वत्रिरित्यत आह– **अत्तिरिति** ॥ अत्तिरिति यत् एतत् अत्रिर्ह वै नाम प्रसिद्धम् इति । अत्तीत्यत्रिरिति वाच्चं गौतमादिनामवत्त्वेन रुद्रादींश्च जानतः फलमाह– **सर्वस्येति** ॥ य एवं वेद स इति शेषः । सर्वस्येति कर्मणि षष्ठी । अद्याभावे कथमत्तृतेत्यत उक्तम्– **सर्वमस्येति** ॥ ४ ॥

इति शिशुब्राह्मणम् ॥ ४-२ ॥

---

१.'मं मितं परिमितम्' - क. । १.'द्यौरुमा अत्रिपदोक्ता' इति भा.बो. ।

## अथ मूर्तामूर्तब्राह्मणम्

### [मूर्तामूर्तविलक्षणो हरिः]

**द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च मर्त्यं च मृतं स्थितं च यच्च सच्च त्यच्च ॥ १ ॥**

[१]उक्ता विद्याः हरेर्मूर्तामूर्तसारवैलक्षण्यज्ञानपूर्वकमनुष्ठिताः फलिष्यन्ति नान्यथेत्यतो मूर्तामूर्तसारस्वरूपोक्तिपूर्वकं हरेः सर्ववैलक्षण्यमाह– **द्वे वावेत्यादिना खण्डेन** ॥ ब्रह्मणो हरेर्मूर्तममूर्तं चेति द्वे रूपे प्रतिमे । एवेत्यवधारणे। प्रतिमे एव । न स्वरूपे इति । वावेति प्रसिद्धौ । मूर्तामूर्तयोर्विशेषणान्याह– **मर्त्यमिति** ॥ ४-३-१ ॥

**तदेतन्मूर्तं यदन्यद्वायोश्चान्तरिक्षाच्चैतन्मर्त्यमेतत् स्थितमेतत्सत्तस्यैतस्य मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो य एष तपति सतो ह्येष रसः ॥ २ ॥**

मर्त्यं स्थितं सच्चेति त्रयं मूर्तस्य विशेषणं अन्यत् त्रयममूर्तस्येति व्यञ्जयन् मूर्तस्वरूपं मूर्तसारं च तावदाह– **तदेतदिति** ॥ वायोरन्तरिक्षशब्दितश्रीतत्त्वाच्च यदन्यद्रुद्रादिकं तदेतन्मूर्तं मुरेण पापेनाप्तत्वान्मूर्तमित्युच्यते । एतन्मूर्तं मर्त्यं शरीरमानित्वेन तत्त्यागरूपमरणोपेतम् । एतत् मूर्तं स्थितं विष्ण्वन्यपुमधीनम् । एतत् मूर्तं सत् षद्लृ विशरणगत्यवसादनेष्विति धातोर्विशरणावसादनयुक्तम् । उक्तविशेषणानुवादपूर्वकं मूर्तसारमाह– **तस्यैतस्येति** ॥ य एष आदित्यमण्डलगतस्तपति एष चतुर्मुखः रसस्सारः । कथं तस्य मूर्तस्य सारत्वमित्यतः तत्प्रसिद्धमित्याह– **सतो हीति** ॥ उपलक्षणं सत्त्वस्थितत्वमर्त्यत्वविशेषणयुक्तस्य

---

१. पूर्वोक्तविद्यायां स स्थूणं सदामं शिशुं वेदेत्युक्त्या साम्यभ्रमनिरासाय स्थूणाशब्दोक्तभगवतो मूर्तामूर्तवैलक्षण्योक्त्या अमूर्तसारत्वोक्त्या चात्रशिशु-शब्दोक्तरमावायूत्तमत्वमाहानेन ब्राह्मणेन ।

मूर्तशब्दितस्य श्रीब्रह्मवाय्वन्यजगतः एष सूर्यमण्डलगतविरिञ्चो रसः । हि प्रसिद्धमित्यर्थः ॥ ४-३-२ ॥

**अथामूर्तं वायुश्चान्तरिक्षं चैतदमृतमेतद्यदेतत्त्यं तस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो य एष एतस्मिन् मण्डले पुरुषस्तस्य ह्येष रस इत्यधिदैवतम् ॥ ३ ॥**

अथ मूर्तोक्त्यनन्तरं अमूर्तमुच्यत इति योज्यम् । वायुः मुख्यवायुः । भगवदन्तरेव रताऽक्षिस्थितेत्यन्तरिक्षनाम्नी श्रीतत्त्वम् । श्रीश्चामूर्तं पापास्पृष्टतया मूर्तविरुद्धत्वादमूर्तमुच्यते । तद्विशेषणान्याह– **एतदमृतमित्यादिना** ॥ श्रियो नित्यमुक्तत्वादमृतत्वम् । वायोर्देहानभिमानादमृतत्वम् । हर्येकनियम्यत्वादेतदमूर्तं यदित्युच्यते । ततत्वात्सर्वज्ञत्वाच्चैतदमूर्तमित्युच्यते । उक्तानुवादेन तद्रसमाह– **तस्येति** ॥ एतस्मिन् मण्डले रविबिम्बे यः पुरुषः पूर्णषड्गुणो हरिः एष रसः सारः । तस्य ह्येष रस इत्युक्तार्थम् । इति एवं प्रकारेण अधिधैवतं मूर्तामूर्तनिरूपणमित्यर्थः ॥ ४-३-३ ॥

**अथाध्यात्ममिदमेव मूर्तं यदन्यत्प्राणाच्च यश्चायमन्तरात्मन्नाकाश एतन्मर्त्यमेतत्स्थितमेतत्सत्तस्यैतस्य मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो यच्चक्षुः सतो ह्येष रसः ॥ ४ ॥**

अथाधिदैवतं मूर्ताद्युक्त्यनन्तरम् । अध्यात्मं देहे । मूर्तामूर्ततद्रसा उच्यन्त इत्यर्थः । तत्र मूर्तस्वरूपमाह– **इदमेवेति** ॥ प्राणाद्यदन्यत् यश्चायमन्तरात्मन् । आत्मनोऽन्तराकाशस्तदभिमानि श्रीतत्त्वम् । तस्माच्च यदन्यत् । इदमेव मूर्तमित्यर्थः । यश्चक्षुश्चक्षुर्गतो विरिञ्चः ॥ ४-३-४ ॥

**अथामूर्तं प्राणश्चायमन्तरात्मन्नाकाश एतदमृतमेतद् यदेतत् त्यं तस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष**

**रसो योऽयं दक्षिणेऽक्षन् पुरुषस्तस्य ह्येष रसः ॥ ५ ॥**

दक्षिणेऽक्षन् अक्षणि । यः पुरुषः पूर्णषड्गुणो हरिः । शिष्टं पूर्ववद्ध्येयम् ॥ ५ ॥

**तस्य हैतस्य पुरुषस्य रूपं यथा महारजनं वासो यथा पाण्ड्वा-विकं यथेन्द्रगोपो यथाग्न्यर्चिर्यथा पुण्डरीकं यथा सकृद्विद्युत्तꣳ सकृद्विद्युत्तेव ह वा अस्य श्रीर्भवति य एवं वेदाथात आदेशो नेति नेति नह्येतस्मादिति नेत्यन्यत्परमस्त्यथ नामधेयꣳ सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम् ॥ ६ ॥**

इति **मूर्तामूर्तब्रह्मणम्** ॥ ४-३ ॥

अधिदैवमध्यात्मं चोक्त्वा मूर्तरसस्य हरे रूपं दृष्टान्तेनाह– **तस्येति** ॥ यथा महारजनं वासः महारजनरक्तं वासस्तथेति सर्वत्र योज्यम् । पाण्ड्वाविकं पाण्डुरवर्णं अविलोमकृतं कम्बलं यथा तथेत्यर्थः । यथेन्द्रगोपस्तथेति । सकृद्विद्युत्तं युगपदुत्पन्नविद्युन्मण्डलम्। सकृद्विद्युत्तमिव भगवद्रूपं वेदितुः फलमाह– **सकृद्विद्युत्तेवेति** ॥ य एवं वेद सकृद्विद्युत्तमिव भगवद्रूपं वेद । सकृद्विद्युत्तेव प्रकाशमानास्य श्रीर्भवति । ह वा इति निश्चयमाह । अथ मूर्तामूर्तस्वरूपोक्त्यनन्तरम् । अतः भगवतोऽमूर्तसारत्वात् । तस्यामूर्तसारस्य हरेरादेश उपदेश उच्यते ॥ **नेति नेतीति** ॥ इति न इति नेति योजना । मूर्तवन्नामूर्तवन्नेति तदर्थः । मूर्तामूर्तविलक्षणं हरेरन्यदप्यस्ति किं तथा हरेरुत्तमं चास्ति किमित्यतो नेत्याह– **नहीति** ॥ इति नेत्युच्यमानं एतस्माद्धरेरन्यन्नास्ति परं च न ह्यस्ति । एष एव परः मूर्तामूर्तं त्वपरमेवेति भावः । अथ आदेशानन्तरम् । तस्यामूर्तसारस्य नामधेयम् ॥ **सत्यस्य सत्यमि-तीति** ॥ तद् विवृणोति– **प्राणा वा इति** ॥ प्राणन्तीति प्राणाः मूर्तामूर्ता-त्मकास्सत्यमुच्यन्ते । तेषामेष हरिः सत्यं सत्यत्वप्रद इत्यर्थः ॥ ६ ॥

इति **मूर्तामूर्तब्राह्मणम्** ॥ ४-३ ॥

## अथ मैत्रेयिब्राह्मणम्

[हरावतिस्नेहः कार्यः]

**मैत्रेयीति होवाच याज्ञवल्क्य उद्यास्यन् वा अरेऽहमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्याऽन्तं करवाणीति ॥ १ ॥**

अमूर्तसारो भगवानित्युक्तं तदुपपादयन् हरावतिस्नेहः कार्य इति भावेनाख्यायिकामाह – **मैत्रेयीत्यादिना** ॥ याज्ञवल्क्यस्य द्वे भार्ये मैत्रेयी कात्यायनी चेति । तत्र मैत्रेयीति सम्बोध्योवाच हेत्याश्चर्ये । मैत्रेय्याः प्रियत्वसिद्ध्यर्थे वा । वचनप्रकारमेवाह– अरे मैत्रेयि अहं अस्मात्स्थानात् गृहस्थाश्रमा-दुद्यास्यन् उद्गत्य यास्यन्नस्मि । प्रव्रजिष्यन्नस्मि । हन्त हर्षे । ते तवानया कात्यायन्या । अन्तं निर्णयं विभागं करवाणीत्युवाचेति योजना ॥ ४-४-१ ॥

[अमृतत्वस्य नाशाऽस्ति वित्तेन]

**सा होवाच मैत्रेयी यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्कथं तेनामृता स्यामिति नेति होवाच याज्ञवल्क्यो यथैवोप-करणवता जीवितं तथैव ते जीवितꣳ स्यादमृतत्वस्य नाशाऽस्ति वित्तेनेति ॥ २ ॥**

सा एवमुक्ता मैत्रेयी उवाच । ह आश्चर्यम् । कथमस्यैवं बुद्धिरिति । हे भगोः भगवन् । यत् यदा । मे मह्यम् । इयं पृथिवी । वित्तेन पूर्णा स्यात्तदा । तेन वित्तपूर्णपृथिवीरूपोपायेन। अमृता मुक्ता स्याम् । कथं किमित्युवाचेत्यर्थः । इति पृष्टो याज्ञवल्क्यो नानेन मुक्ता भविष्यसीति होवाच । तर्हि कोपयोगो वित्तस्येत्यतो मुक्त्यन्यत्रेति भावेनाह– **अथेति** ॥ अर्थान्तरेऽथशब्दः । यथा लोके उपकरणवतां गृहारामखट्वाशय्यादिभोगसाधनवतां सुखेन जीवितं जीवनं तथा ते वित्तेन जीवितमेव स्यात् । अमृतस्य मुक्तेश्चाशा नास्ति वित्तेनेति होवाच याज्ञवल्क्यः ॥ ४-४-२ ॥

**सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान् वेद तदेव मे ब्रूहीति ॥ ३ ॥**

सा होवाचेत्यादि व्यक्तार्थम् । यदेव [१]मुक्त्युपायत्वेन वेद भगवान् तदेव मे मह्यं ब्रूहीत्यर्थः ॥ ४-४-३ ॥

**स होवाच याज्ञवल्क्यः प्रिया बतारे नः सती प्रियं भाषस एह्यास्व व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति[२] ॥ ४ ॥**

प्रियां स्तुवन्नुपदेक्ष्यामि सावधाना भवेत्याह– **स हेति** ॥ अरे मैत्रेयि त्वं सती पतिव्रता। नः प्रिया प्रीतिविषयिणी । बत हर्षे । नः प्रियं यथा भवति तथा भाषसे। एहि आस्व उपविश । ते तुभ्यं [३]व्याचक्षाणस्य मे मम सकाशात्तन्निदिध्यासस्व । चित्ते सम्यग्धारयेत्युवाचेत्यन्वयः ॥ ४-४-४ ॥

[हरीच्छयैव सर्वं प्रियं भवति]

**स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति । न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति । न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति। न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्या-त्मनस्तु कामाय वित्तं प्रियं भवति । न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनः कामाय ब्रह्म प्रियं भवति । न वा**

---

१ 'मुक्त्युभयत्वेन' क. । २. 'ब्रवीतु भगवानि'ति कचित् श्रूयते। ३. 'व्याचक्षाणस्य' इति नास्ति ख. ।

**अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्रं प्रियं भवति। न वा अरे लोकानां कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति। न वा अरे देवानां कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्रिया भवन्ति। न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति। न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति। आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदꣳ सर्वं विदितम् ॥ ५ ॥**

आत्मापरोक्षज्ञानमेव मुक्त्युपाय इति भावेन तत्रादरजननायात्मनो महिमानमाह – **स होवाचेति** ॥ अरे मैत्रेयि । पत्युः कामाय कामेन व्यत्ययात्। अस्या अहं प्रियस्स्यामितीच्छयेति यावत् । पतिः स्त्रियाः प्रियो न भवति। किन्तु आत्मनो हरेः कामाय कामेन । पतिर्जायायाः प्रियो भवतीत्यर्थः। हरिश्चेदयमस्याः प्रियस्स्यादितीच्छति तदासौ तत्प्रियो भवतीति भावः । एवमेवोत्तरवाक्यानि योज्यानि । तत्र तत्रास्पष्टपदानामर्थ उच्यते । जायायै जायायाः । पुत्राणां कामाय कामेन । पुत्राः प्रियाः । मातापित्रादेरिति योज्यम् । वित्तस्य वित्ताभिमानिनः कुबेरस्य । वित्तं प्रियं जनस्येति योज्यम्। ब्रह्मणः ब्राह्मणजात्याक्रान्तविरिञ्चस्य । क्षत्रस्य क्षत्रजात्याक्रान्तस्य वायोः। लोकानां लोकाभिमानिनाम् । भूतानां पञ्चमहाभूताभिमानिनाम्। सर्वस्य सर्वाभिमानिनो देवस्य मूलप्रकृतेः । यदिच्छया पत्यादयो जायादीनां प्रिया भवन्ति स आत्मा मया द्रष्टव्यः । तद्दर्शनस्य क उपायः तं ब्रूहीति पृच्छन्त्यै मैत्रेय्यै याज्ञवल्क्य आहेति मध्ये योज्यम् । किमाहेत्यत आह– **आत्मा**

**वा अर इति** ।। अरे मैत्रेयि । य आत्मा द्रष्टव्यः स श्रोतव्यो मन्तव्यो निदिध्यासितव्य एवेति दर्शने श्रवणादीनि त्रीणि साधनानीति । यद्वा एवमात्मनो महिमोक्तौ तर्हि किं मया कार्यमिति मैत्रेय्या जिज्ञासायामाह– **आत्मा वार इति** ।। अरे मैत्रेयि! आत्मैव द्रष्टव्यः साक्षात्कर्तव्य इति विधिः । केनोपायेनेति तदीयहृद्गतप्रश्नस्योत्तरमाह– **आत्मा वार इति** ।। आत्मा द्रष्टव्य इति यदुक्तं मया तत्र श्रवणादीनि त्रीणि साधनानीति आत्मा वा अरे द्रष्टव्य इति वाक्यं विधिपरतयाऽनुवादपरतया च योज्यम् । तथा सति मध्ये शेषो नापेक्षितः । तदाह सूत्रे 'ब्रह्मजिज्ञासा' (ब्र.सू. १-१-१) इति । ब्रह्मापरोक्षज्ञानाय श्रवणमनननिदिध्यासनरूपा जिज्ञासा कर्तव्येति तदर्थोक्तेः । श्रवणमौपदेशिकवाक्यार्थज्ञानम् । मननं तु श्रुतेऽर्थे युक्त्यनुसन्धानम् । निरन्तरचिन्तनं निदिध्यासनम् । दर्शने ध्यानमेव साक्षात्साधनम् । श्रवणमनने तु ध्यानप्रतिबन्धकाज्ञानसंशयविपर्ययनिरासद्वारा तदङ्गे । तदाह सूत्रे 'तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम्' (ब्र.सू. ३-३-४३) इति । आत्मज्ञानार्थं तच्छ्रवणादिकमिव कर्मदेवतादिज्ञानार्थमपि तच्छ्रवणादिकं कार्यं किमित्यत आह– **आत्मनो वा इति** ।। आत्मनो दर्शनेन श्रवणेन मननेन विज्ञानेन निदिध्यासनेनेदं सर्वं कर्मदेवतादिकं जगद्विदितं विदितवत् ज्ञातफलं भवति । प्रधानविष्णुज्ञाने अप्रधानज्ञानफलमपि तेन भवतीत्यतो न तच्छ्रवणादि कार्यमिति भावः ।। ४-४-५ ।।

**ब्रह्म तं परादाद् योऽन्यत्रात्मनो ब्रह्म वेद क्षत्रं तं परादाद् योऽन्यत्रात्मनः क्षत्रं वेद लोकास्तं परादुर्योऽन्यत्रात्मनो लोका वेद देवास्तं परादुर्योऽन्यत्रात्मनो देवान् वेद भूतानि तं परादुर्योऽन्यत्रात्मनो भूतानि वेद सर्वं तं परादाद् योऽन्यत्रात्मनः सर्वं वेदेदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमानि भूतानीदं सर्वं यदयमात्मा ।। ६ ।।**

कुतो हरेः प्राधान्यमित्यतो जगदाश्रयत्वादिति भावेनान्यथाज्ञानिनोऽनर्थमाह– **ब्रह्मेत्यादिना** ॥ यः जीवः । 'ब्रह्म' प्रागुक्तं ब्रह्मशब्दार्थं आत्मनो हरेरन्यत्रान्याधीनत्वेन भगवदधीनत्वेन च न वेदेत्यपि गृह्यते । तमेवं वेदितारम् । ब्रह्म प्रागुक्तं ब्रह्म कर्तृ । परादात् परतो लोका लोकस्यान्धे तमसि स्थापयेदित्यर्थः । एवमग्रेऽपि ध्येयम् । क्षत्रादि पदार्थः प्रागुक्त एव । ब्रह्मादेर्भगवदनाश्रितत्वान्याश्रितत्ववेदिनोऽनर्थोक्तिर्यदाश्रितत्वोक्त्यर्था तदिदानीं भगवदाश्रितत्वमाह– **इदं ब्रह्मेति** ॥ इदं प्रकृतं ब्रह्मादिसर्वान्तं यत् यत्र यदाश्रितत्वेन वर्तते अयमात्मा आत्माश्रितत्वेनास्त इत्यर्थः ॥ ४-४-६ ॥

[दृष्टान्तत्रयेण हरेः प्राधान्योपपादनम्]

**स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ॥ ७ ॥**

जगत्स्रष्टृत्वाज्जगतस्तदधीनत्वाच्च हरेः प्राधान्यमिति भावेन स्रष्टृत्वं 'स यथार्द्रैधाग्नेः' इत्यादिना, तदधीनत्वं च 'सर्वासाम्' इत्यादिना विवक्षुस्ततो निर्गतत्वमात्रेण जगतस्तत्कारणकत्वं तदधीनत्वं च कुत इत्यतो दृष्टान्तत्रयेण तद्द्वयमुपपादयति पर्वत्रयेण– **स यथेति** ॥ वक्ष्यमाणदृष्टान्तो यथेत्यर्थः । दुन्दुभेर्हन्यमानस्य सत उत्पन्नान् शब्दान् बाह्यान् तदन्यमुरजकारणजन्यानन्याधीनान् वा ग्रहणाय ग्रहीतुं न शक्नुयात् । किन्तु दुन्दुभेस्तदाघातस्य वा पूर्वभावितया ग्रहणेन स शब्दो गृहीतः तज्जन्यत्वेन तदधीनत्वेन वा गृहीतो गृह्यते । एवं भगवन्तं तदिच्छां वा पूर्वभावितया जानंस्ततो निर्गतं जगत् तदन्यजन्यत्वेन तदन्याधीनत्वेन वा गृह्णातीति योज्यम् । अत्र दुन्दुभ्यादिशब्दास्तदभिमानिपराश्च ज्ञेयाः । यथा हन्यमानदुन्दुभिशब्दस्तदभिमानिदेवतावशगस्तथेति । योजना तु प्राग्वदेव । दुन्दुभिस्थानीयो भगवांस्तदाघातस्थानीयेच्छेति ज्ञेयम् । एवमग्रे दृष्टान्तद्वययोजना ध्येया ॥ ४-४-७ ॥

**स यथा शङ्खस्य ध्मायमानस्य न बाह्यांच्छब्दांच्छक्नुयाद्ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ॥ ८ ॥**

ध्मस्य वादनस्य ॥ ४-४-८ ॥

**स यथा वीणायै वाद्यमानायै न बाह्यांच्छब्दाच्छक्नुया-द्ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥ ९ ॥**

वीणायै वीणायाः । वाद्यमानायै वाद्यमानाया इत्यर्थः । व्यत्ययात् ॥ ९ ॥

[सर्वशास्त्राणां हयग्रीव एवोपदेष्टा]

**स यथाऽऽर्द्रैधाग्नेरभ्याहितात्पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेतद् यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि निःश्वसितानि ॥ १० ॥**

दृष्टान्तपूर्वं सङ्क्षेपेण स्रष्टृत्वमाह– **स यथार्द्रेति** ॥ आर्द्रैदोभिः आर्द्रकाष्ठैः युक्तो अग्निः आर्द्रैधोग्निः स एवार्द्रैधाग्निः सलोपश्छान्दसः[१] तस्मादभ्याहतात् पुञ्जीकृतात् पृथङ् नानाप्रकाराः धूमाः विष्फुलिङ्गाश्चेत्यपि ग्राह्यम् । विनिश्चरन्ति एवं वै एवमेव एतद्वक्ष्यमाणं अस्य महतो भूतस्य सदा विद्यमानस्य हयास्यरूपस्य ब्रह्मणस्सकाशान्निश्श्वसितं निर्गतं किं तदित्यत आह– **यदिति** ॥ ऋगाद्या अवान्तरवेदाः । इतिहासो नाम 'पञ्चरात्रं भारतं च मूलरामायणं तथा । इतिहास इति प्रोक्तः' इत्युक्त्या वक्ष्यमाणश्लोकान्यपञ्चरात्रादित्रयम् । विद्या मूलश्रुतिः । उपनिषदः काण्वाद्याः । श्लोकाः पञ्चरात्रसंहिताः । सूत्राणि ब्रह्मसूत्राणि ।

१. 'यद्वा आकारन्तो एधशब्दोऽस्ति'-ख. ।

व्याख्यानानि वेदव्याख्याः । तासां विस्तरोऽनुव्याख्यानानीति यत् । एतत् निःश्वसितमिति पूर्वेणान्वयः । एवं शब्दप्रपञ्चसृष्टिमुक्त्वाऽर्थसृष्टिमाह– **अस्यैवैतानीति** ॥ एतानि प्रमाणसिद्धानि महदादीन्यस्यैव हरेस्सकाशान्निःश्वसितानि अनायासेन सृष्टानीत्यर्थः । यद्वा इति यत् एतानि ऋगादीन्यस्यैव निःश्वसितानीत्युपसंहारः । अर्थात्मकं जगच्च अस्यैव निस्सृतमित्युपलक्ष्यते ॥ १० ॥

[सर्वाश्रयो हरिः]

**स यथा सर्वासामपाꣳ समुद्र एकायनमेवꣳ सर्वेषां स्पर्शानां त्वगेकायनमेवꣳ सर्वेषाꣳ रसानां जिह्वैकायनमेवꣳ सर्वेषां गन्धानां नासिकैकायनमेवꣳ सर्वेषाꣳ रूपाणां चक्षुरेकायनमेवꣳ सर्वेषां शब्दानाꣳ श्रोत्रमेकायनमेवꣳ सर्वेषाꣳ सङ्कल्पानां मन एकायनमेवꣳ सर्वासां विद्यानां हृदयमेकायनमेवं सर्वेषां कर्मणां हस्तावेकायनमेवं सर्वेषामानन्दानामुपस्थ एकायनमेवꣳ सर्वेषां विसर्गाणां पायुरेकायनमेवꣳ सर्वेषामध्वनां पादावेकायनमेवꣳ सर्वेषां वेदानां वागेकायनमेवम् ॥ ११ ॥**

मुख्यतस्सर्वाश्रयो भगवानित्येद् दृष्टान्तेनाह– **स यथेति** ॥ स वक्ष्यमाणो दृष्टान्तो यथेत्यर्थः । सर्वासामपां समुद्रः वरुणः खातो वा एकायनं मुख्याश्रयः । एवमिति दार्ष्टान्तिकोक्तिः । एवं सर्वजगतो भगवान् मुख्याश्रय इत्यर्थः । एवमग्रेऽपि । सर्वेषां सङ्कल्पानामित्यादि सप्तदृष्टान्ता अपि मुख्यतो हरेस्सर्वाश्रयत्वे योज्याः । जगत्प्रतीतिरपीशाधीनेति मध्ये पञ्चभिर्दृष्टान्तैराह – **सर्वेषां स्पर्शानामित्यादिना** ॥ त्वगेकायनं मुख्यप्रतीतिसाधनम् । एवं भगवान् मुख्यस्पर्शप्रतीतिहेतुरिति दार्ष्टान्तिको योज्यः । एवमग्रेऽपि । अध्वनां गतिक्रियाणामित्यर्थः ॥ ४-४-११ ॥

[मुक्तावपि जीवाः भगवदधीनाः]

**स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयेत नहास्योद्ग्रहाणायैव स्याद्यतो यतस्त्वाददीत लवणमेवं वा अरे इदं महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥ १२ ॥**

न केवलं संसारे जीवा भगवदाश्रिताः मुक्तावपीत्येद् दृष्टान्तेनाह– **स यथा सैन्धवेति** ॥ स यथेत्युक्तार्थः । सैन्धवखिल्यो घनीभूतलवणखण्डः । उदके समुद्रोदके प्रास्तः प्रक्षिप्तः उदकमनुसृत्य विलीयेत । उदकानुगुणतया द्रवीभावं प्राप्य नोपलभ्यते । अस्य विलीनस्य सैन्धवखिल्यस्य उद्ग्रहणाय उद्धारणाय उद्धृत्य ग्रहीतुं शक्तः कश्चिदपि नैव स्यात् । हेति प्रसिद्ध्यर्थः । कुतस्तत्र विलीनमिति ज्ञायत इत्यत उक्तम्– **यतो यत इति** ॥ यस्माद् यस्माद्देशादुदकमाददीत गृहीत्वा प्राशयेत् तत्र तत्र लवणमेव लवणरसोपेतमेवोदकं गृह्यते तेन ज्ञायत इत्यर्थः । उक्तानां समुद्रसैन्धवखिल्योदकानां मध्ये कस्य स्थाने कः प्रकृत इत्यतो हरिस्समुद्रस्थानीयः समुद्रजलवत्पूर्वमुक्तः सैन्धवखिल्यवन्नूतनमुक्त इत्याह– **एवमिति** ॥ अरे मैत्रेयि विज्ञानघनो जीवः एतेभ्यो भूतेभ्योऽबादिभ्यस्समुत्थाय उत्पद्य भूतपरिणामदेहसम्बन्धं प्राप्य निलीयमानानि देहोपादानभूतान्यन्वेव विनश्यति । देहवियोगलक्षणमुक्तत्वं प्रतिपद्यते ततश्चेदं महद्भूतमनन्तमपारं पूर्वमुक्ताश्रयं हरिं प्राप्नोति । अत्र समुद्रजलस्थानीयाः पूर्वमुक्ता इत्यपि ग्राह्यम् । सैन्धवखिल्यसाम्यं नूतनमुक्तस्याह– **न प्रेत्येति** ॥ प्रेत्य मुक्त्यनन्तरं स्थितस्य मुक्तस्य संज्ञा मुक्तविषयकसम्यग्ज्ञानमपरोक्षरूपममुक्तानामस्मदादीनां नास्तीत्यरे मैत्रेयि अहं ब्रवीमीति याज्ञवल्क्य उवाच ॥ ४-४-१२ ॥

[अमुक्ताऽज्ञेयाः मुक्ताः]

**सा होवाच मैत्रेय्यत्रैव मा भगवानमूमुहन्न प्रेत्य संज्ञाऽस्तीति स होवाच न वा अरे अहं मोहं ब्रवीमीत्यलं वा अर इदं विज्ञानाय ॥ १३ ॥**

एवमुक्ता सा मैत्रेयी मुक्तस्य ज्ञानमेव नास्तीत्युक्तवानिति मत्वाऽक्षिपतीत्याह– **सा होवाच मैत्रेयीति** ॥ भगवान् अत्रैव अवश्यज्ञातव्येऽर्थे मा मां अमूमुहत् मोहं प्रापितवानभूत् । कथं? प्रेत्य मुक्तयनन्तरं संज्ञा ज्ञानं नास्तीति परमपुमर्थे मोक्षे ज्ञानाभाववचनं कथं न मोहकं अतो यथावत्तत्स्वरूपं वाच्यमित्युवाचेत्यर्थः । एवमुक्तस्स याज्ञवल्क्यो अहं मोहं मोहकवाक्यं न ब्रवीमि किं तर्हीत्यत इदं मुक्तजातं विज्ञानाय यथायोग्यं परापरवस्तुविशेषेण ज्ञातुमलं शक्तमेवातो मद्वाक्यस्यामुक्ताज्ञेयत्वमेवार्थ इति भावः । **व्याख्यातैषा श्रुतिरुत्क्रान्तिपादीयानुव्याख्यानसुधयोः** ॥ ४-४-१३ ॥

[अपुमर्थत्वापत्तेर्न निर्विशेषज्ञान(शून्य)मात्रावशेषो मोक्षः]

**यत्र ह द्वैतमिव भवति तदितर इतरं जिघ्रति तदितर इतरं पश्यति तदितर इतरऽ शृणोति तदितर इतरमभिवदति तदितर इतरं मनुते तदितर इतरं विजानाति यत्र वा अस्य सर्वमात्मैवाभूत्तत्केन कं जिघ्रेत्तत्केन कं पश्येत्तत्केन कं शृणुयात्तत्केन कमभिवदेत्तत्केन कं मन्वीत तत्केन कं विजानीयाद्येनेदऽ सर्वं विजानाति तं केन विजानीयाद् विज्ञातारमरे केन विजानीयादिति ॥ १४ ॥**

इति मैत्रेयिब्राह्मणम् ॥ ४-४ ॥

मुक्तावात्ममात्रावशेषेण द्वितीयस्याभावाज्ज्ञानाभाव एव मुक्तस्येति वदतां मतेऽतिप्रसङ्गं वक्तुं व्यतिरेकव्याप्तिं तावदाह– **यत्रेति** ॥ यत्र यदा द्वैतं

द्वयोर्भावः द्विता भेदः तस्या इदं द्वैतं भिन्नं वस्तु द्वैतमिव भिन्नमिव परतन्त्रं भिन्नं वस्तु भवतीतीवशब्दः पारतन्त्र्यार्थः स्वरूपकथनायोक्तो नतु व्याप्तिशरीरप्रवेशितया । तत् तदा, इतरः पुमान् इतरं गन्धादिकं जिघ्रतीत्यादि ज्ञेयम् । यत्र हीति हिशब्दो व्याप्तेरदुष्टतां द्योतयति । यदर्थं व्याप्तिरुक्ता तं प्रसङ्गमाह– **यत्र वा इति** ॥ यत्र यदि मुक्तौ अस्य ज्ञानिनः सर्वं करणादिकमात्मैवाभूत् । स्वव्यतिरेकेण किमपि नासीत् तर्त्तर्हि केन कारणेन किं जिघ्रेदित्यादि ध्येयम् । गन्धादिविषयभोगो न स्यादित्यर्थः । येनेश्वरेण इदं सर्वं जीवो विजानाति तं हरिं केन विजानीयात् तज्ज्ञानं च न स्यादित्यर्थः । विज्ञातारं स्वात्मानं केन विजानीयात् । मुक्तान्तरं च केन विजानीयात् । अतो निर्विशेषज्ञानशून्यात्ममात्रावशेषो न मोक्षोऽपुमर्थ-त्वापत्तेरिति भावः । **व्याख्यातैषापि श्रुतिस्तत्त्वनिर्णयानुव्याख्यानादौ** ॥ ४-४-१४ ॥

इति मैत्रेयिब्राह्मणम् ॥ ४-४ ॥

## अथ मधुब्राह्मणम्

[पृथिव्याद्यभिमानिस्थितः भगवान् न मूलरूपाद् भिन्नः]

**इयं पृथिवी सर्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मधु यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चाय-मध्यात्मꣳ शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳसर्वम् ॥ १ ॥**

स्वहृदिस्थविष्णूपासनमेव मुक्तिहेतुर्न बहिष्ठोपासनमित्याद्येन ब्राह्मणेनोक्तम् । तच्च जितेन्द्रियस्यैव भवतीतीन्द्रियजहेतूपास्त्यर्थविद्या द्वितीयेनोक्ता । मूतामूर्तसार-विलक्षणतया भगवज्ज्ञानिनो विद्याः फलदा इति भावेन तृतीयब्राह्मणेन तच्चतुष्टयोक्तिपूर्वं तत्तृतीयवैलक्षण्यं हरेरुक्त्वा चतुर्थेऽमूर्तसारत्वमुपपादयंस्तत्र

हरावतिस्नेहः कार्य इत्याद्युक्तम् । अत्र तु आद्यब्राह्मणे अन्तःस्थोपास्तेर्बहिष्ठभगवदुपास्तितो मुक्तिहेतुत्वोक्त्यान्तःस्थबहिष्ठयो रूपयोः प्रतीतभेदं निवारयन् तयोरैक्यविषयां विद्यामाह– **इयमित्यादिना** ।। इयं पृथिवी तदभिमानिनी सर्वेषां भूतानां मधु मधुवत्सुखदा । अस्यै पृथिव्यै अस्याः पृथिव्याः सर्वाणि भूतानि मधु । शुश्रूषया सुखदानि । यश्चायमस्यां पृथिव्यां पृथिव्यभिमानिन्यां तेजोमयोऽनन्ततेजाः अमृतमयो नित्यः पुरुषोऽस्ति यश्चाध्यात्मं शारीरः शरीरमानिस्थः अयमेव सः पृथिव्यभिमानिस्थः । एवकारेण न मात्रयापि विशेषोऽस्तीत्युच्यते तयोर्मूलरूपेण चाभेदमाह– **योऽयमात्मेति** ।। य आत्मा सर्वगतो हरिः मूलरूपी सोऽप्ययमेव पृथिवीशारीरस्थहयशीर्षाख्य एक एवेत्यर्थः। केचित्तु अयमेव पृथिवीशारीरयोस्स्थितः सः स कः योऽयमात्मा हयशीर्षाख्यः स एवेति योजयन्ति । आत्मस्वरूपमाह– **इदममृतमिति** ।। अमृतं नित्यं ब्रह्म गुणपूर्णं सर्वमनूनं सर्वगमित्यर्थः । एवमग्रेऽपि योजना ध्येया ।। ४-५-१ ।।

**इमा आपः सर्वेषां भूतानां मध्वासामपाꣳ सर्वाणि भूतानि मधु यश्चायमास्वप्सु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ रैतसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ।। २ ।। अयमग्निः सर्वेषां भूतानां मध्वस्याग्नेः सर्वाणि भूतानि मधु यश्चायमस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं वाङ्मयस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ।। ३ ।। अयं वायुः सर्वेषां भूतानां मध्वस्य वायोः सर्वाणि भूतानि मधु यश्चायमस्मिन् वायौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं प्राणस्तेजो-**

**मयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ ४ ॥**

आपः अबभिमानिनी । रैतसो रेतोमानिस्थो रैतसनामा हयास्यः ॥ ४-५-२ ॥ अयमग्निः अग्न्यभिमानी वाङ्मयो वागभिमानिस्थः ॥ ४-५-३ ॥ वायुः प्रवहः । प्राणः त्वगिन्द्रियमानिप्राणवायुस्थः ॥ ४-५-४ ॥

**अयमादित्यः सर्वेषां भूतानां मध्वस्यादित्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नादित्ये तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ ५ ॥ इमा दिशः सर्वेषां भूतानां मध्वासां दिशाꣳ सर्वाणि भूतानि मधु यश्चायमासु दिक्षु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ श्रौत्रः प्रातिश्रुत्कस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ ६ ॥ अयं चन्द्रः सर्वेषां भूतानां मध्वस्य चन्द्रस्य सर्वाणि भूतानि मधु यश्चायमस्मिन् चन्द्रे तेजोमयो-ऽमृतमयः पुरुषो यश्चायमध्यात्मं मानसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ ७ ॥**

आदित्यश्चेतनश्चाक्षुषश्चक्षुर्मानिगतः ॥ ४-५-५ ॥ दिशः दिङ्मानिन्यः श्रौत्रः श्रोत्रमानिगतः प्रातिश्रुत्कः प्रतिशृणोतीति प्रातिश्रुत्कनामा ॥ ४-५-६ ॥ चन्द्रश्चेतनः मानसो मनोऽभिमानिस्थः ॥ ४-५-७ ॥

**इयं विद्युत्सर्वेषां भूतानां मध्वस्यै विद्युतः सर्वाणि भूतानि मधु यश्चायमस्यां विद्युति तेजोमयोऽमृतमयः पुरुषो**

यश्चायमध्यात्मं तेजसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ ८ ॥ अयं स्तनयित्नुः सर्वेषां भूतानां मध्वस्य स्तनयित्नोः सर्वाणि भूतानि मधु यश्चायमस्मिंस्तनयित्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शाब्दः सौवरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ ९ ॥ अयमाकाशः सर्वेषां भूतानां मध्वस्याकाशस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नाकाशे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ हृद्याकाशस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ १० ॥

विद्युत् विद्युन्मानी । तैजसः देहगततेजोऽभिमानिस्थः ॥ ४-५-८ ॥ स्तनयित्नुः स्तनयित्नमानी मुख्यवायुः । शाब्दः देहस्थशब्दमानिमुख्यवायुरूपे स्थितः । सौवरः स्वरस्थवायुरूपविशेषगतः ॥ ४-५-९ ॥ आकाश आकाशमानी हृद्याकाशः हृदयाकाशमानिस्थः ॥ ४-५-१० ॥

अयं धर्मः सर्वेषां भूतानां मध्वस्य धर्मस्य सर्वाणि भूतानि मधु यश्चायमस्मिन् धर्मे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं धार्मस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ ११ ॥ इदꣳ सत्यं सर्वेषां भूतानां मध्वस्य सत्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन् सत्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं सात्यस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमा-

**त्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ १२ ॥ इदं मानुषं सर्वेषां भूतानां मध्वस्य मानुषस्य सर्वाणि भूतानि मधु यश्चायमस्मिन् मानुषे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ १३ ॥ अयमात्मा सर्वेषां भूतानां मध्वस्यात्मनः सर्वाणि भूतानि मधु यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्ममात्मा तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ १४ ॥**

धर्मः धर्ममानी यमः । धार्मः धर्माभिमानियमगतः ॥ ४-५-११ ॥ सत्यम् । सत्यमिति सत्याभिमानिवायो रूपान्तरम् । सात्यः सत्यमानिवायुरूपस्थः ॥ ४-५-१२ ॥ मानुषं मनुष्याभिमानी स्वायम्भुवमनुः मानुषः स्वायम्भुवमनुस्थः ॥ ४-५-१३ ॥ आत्मा विरिञ्चः । [१]अध्यात्ममात्मा जीवगतः ॥ ४-५-१४ ॥

**स वा अयमात्मा सर्वेषां भूतानामधिपतिस्सर्वेषां भूतानाꣳ राजा तद्यथा रथनाभौ च रथनेमौ चारास्सर्वे समर्पिता एमेवास्मिन्नात्मनि सर्वाणि भूतानि सर्व एत आत्मानः समर्पिताः ॥ १५ ॥**

जीवगतात्मनो हरेर्महिमानमाह– **स वा इति** ॥ सर्वेषां भूतानां जीवानाम् । सर्वेषामात्मशब्दितविरिञ्चानां चेत्यपि ग्राह्यम् । अधिपतिः । आधिक्येन पालनात् अधिपतिः । राजा स्वामी । कथमित्यतो दृष्टान्तेनैतद् व्यनक्ति–

---

१. अध्यात्ममात्मा जीवगतविरिञ्चगतः इत्यर्थो विवृतः भावबोधे ।

**तद्यथेति** ।। तद्वक्ष्यमाणं निदर्शनं यथा । चशब्दावन्योन्यसमुच्चये । हरिरधिदैवमध्यात्मं रूपद्वयेन जगद्धत्त इत्युक्तार्थोपपादनाय रथनाभौ च रथनेमौ चेति दृष्टान्तद्वयोक्तिः । नाभिरन्तर्वस्तु । नेमिर्बाह्यवस्त्विति ज्ञेयम् । आत्मानो विरिञ्चाः ।। ४-५-१५ ।।

[मधुविद्यानारायणकवचौ दधीचिनोपदिष्टौ]

**इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत् [१]तद् वां नरा सनये दꣳस उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम् । दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाचेति ।। १६ ।।**

इयं मधुविद्याऽतिभद्रा पूर्वैरनुष्ठितत्वादुपदिष्टत्वाच्चेत्याह– **इदमिति** ।। तदिदं मधु । मधुविद्यां दध्यङ्नामा मुनिराथर्वणोऽथर्वगोत्रजोऽश्विभ्यामुवाच वै प्रसिद्धमेतत् । प्रसिद्धत्वमेवाह– **तदित्यादिना** ।। पश्यन् ज्ञानी ऋषिः मन्त्रद्रष्टा तदेतत् दध्यङ्ङश्विभ्यामुवाचेत्येतत् उवाचेत्यर्थः । कथमित्यतस्तद्वाक्यं पठति– **तद्वामिति** ।। हे नरा[२] नरौ अश्विनौ वां युवयोः यदुग्रं दंसः दधीचेः पूर्वशिरच्छेदनाश्वशिरःसन्धानादिरूपमुग्रं कर्म यच्च दध्यङ्ङाथर्वणोऽश्वस्य शीर्ष्णा ईं शीर्ष्ण्यैव वां युवाभ्यां मधु मधुविद्यां प्रोवाचेति तदुभयं सनये मोक्षादिपुमर्थलाभाय [३]आविष्कृणोमि । कथं तन्यतुः स्तनयित्नुः वृष्टिं न वृष्टिमिव ।। १६ ।।

**इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत् आथर्वणायाश्विना दधीचेऽश्व्यꣳ शिरः प्रत्यैरयतम् । स वां मधु प्रवोचदृतायं त्वाष्ट्रं यद्दस्रावपि कक्ष्यं वामिति ।। १७ ।।**

---

१. ऋग्वेदसंहिता १-११६-१२ । २. 'हे नरा नेतारौ अश्विनौ' इति भावबोधे । ३. 'प्रकटीकरोमि' ख. ।

अत्रैवार्थे मन्त्रान्तरं वक्तुमाह– **इदमिति** ।। किमवोचद् इत्यतो मन्त्रं पठति– **आथर्वणायेति** ।। हे [१]दस्रौ शत्रुभेदकौ अश्विनौ युवां आथर्वणाय दधीचे अश्व्यं अश्वसम्बन्धिशिरः प्रत्यैरयतं सन्धितवन्तौ स्थः । सः सन्धिताश्वशिराः दध्यङ् ऋतायन् युवयोर्मधुविद्यां वक्ष्यामीति प्राक् प्रतिज्ञातं सत्यं कुर्वन् वां युवाभ्यां मधु मधुविद्यां यत्त्वाष्ट्रम् । त्वष्टुः पुत्रेण विश्वरूपेण इन्द्रायोक्तं कक्ष्यं नारायणकवचं तदपि प्रवोचत् प्रावोचत् । अडभावश्छान्दसः । इन्द्रो हि दधीचिं प्रतीमां विद्यां परस्मै ब्रूयाश्चेत्तव शिरः छेत्स्यामीत्युक्तवान् । अश्विभ्यां च दधीचिं प्रतीमां विद्यामावाभ्यां ब्रूहीत्युक्ते दधीचिरिन्द्रोक्तमुक्त्वा तूष्णीमासीत् । तदाश्विनौ तर्हि त्वां रक्षिष्याव इत्युक्त्वा तस्य शिरः छित्वाऽन्यत्र प्रस्थाप्याश्वशिरः समादाय दधीचेः सन्धित्वाऽश्वशिरसैव तेन विद्यायां प्रोक्तायामिन्द्रेण च तदश्वशिरसि छिन्ने पुनर्यथापूर्वं तदीयमेव शिरः सन्धितवन्ताविति कथा ज्ञेया ।। ४-५-१७ ।।

**इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत् पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः पुरस्स पक्षी भूत्वा पुरः पुरुष आविशत् इति स वा अयं पुरुषः सर्वासु पूर्षु पुरि शयो नैनेन किञ्चनानावृतं नैनेन किञ्चनासंवृतम् ।। १८ ।।**

यश्चायमध्यात्मं शारीर इति सर्वशरीरेषु हरिस्तिष्ठतीत्युक्तेऽर्थे मन्त्रं वक्तुमाह– **इदमिति** ।। पश्यन्नृषिः तदेतद्भगवतस्सर्वशरीरस्थत्वमुवाच तं मन्त्रमाह– **पुर इति** ।। स पुरुषः द्विपदः पुरः शरीराणि चक्रे । चतुष्पदः पुरः शरीराणि चक्रे । ततः पक्षीभूत्वा द्विपदः पुरः चतुष्पदश्च पुरः आविशत् । पुरुषो जीव इति भ्रमनिरासाय पुरुषपदं निर्वक्ति– **स वा अयमिति** । स वा

---

१. 'दसु भेदने' ।

अयं हरिः पुरुष इत्युच्यते । कुतः । यतस्सर्वासु पूर्षु देहेषु पुरि हृदि शयः । न केवलं पुरि स्थितिमात्रं किन्तु अन्तर्बहिश्चास्तीत्युच्यते– **नैनेनेति** ॥ एनेन अनेनात्मना किञ्चन वस्तु ।अनावृतमन्तरव्याप्तं न । किन्तु व्याप्तमेव । असंवृतं अनाच्छादितं न । आच्छादितमेव । बहिर्व्याप्तमेवेत्यर्थः ॥ १८ ॥

[सर्वे जीवाः ईशप्रतिबिम्बभूताः]

**इदं वैतन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत्। रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रति-चक्षणाय इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश ॥ इत्ययं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च तदेदतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्य-मयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम् ॥ १९ ॥**

**इति मधुब्राह्मणम्** ॥ ४-५ ॥

अध्यात्ममात्मेति हरेस्सर्वजीवस्थत्वमुक्तं तत् दधीचाऽश्विभ्यामुक्तं चेत्याह– **इद-मिति** ॥ तदिदं सर्वजीवस्थत्वम् । तत्र मन्त्रमाह– **रूपमिति** ॥ जीवो हरे रूपं रूपं प्रति प्रतिरूपः प्रतिबिम्बो बभूव । तत् बिम्बरूपं अस्य जीवस्य । प्रतिचक्षणाय साक्षात्काराय भवति । नन्वेकस्य कथं बहुजीवेषु बिम्बतया स्थितिरित्यत आह– **इन्द्र इति** ॥ इन्द्रः परमेश्वरः मायाभिः स्वसामर्थ्यैः पुरुरूपः अनन्तजीवबिम्बरूपः ईयते ज्ञायते । अस्येन्द्रस्य हरयो हरिनामकानि रूपाणि दशशतानि युक्ता संयुक्ताः व्यूहशः सन्तीति हि प्रसिद्धम् । इन्द्ररथाश्वप्रतीर्तिं निवारयितुमाह– **अयं वा इति**॥ हरयो हरिनामकानि दश मत्स्यादीनि । चशब्दान्नारायणादीनि शतानि अयमिन्द्रः सहस्राणि विश्वादीनि । अयं बहूनि परादीनि । अयमनन्तानि अजिता-दीनि । तस्य हरेर्महिमान्तरमाह– **तदेतदिति** ॥ य आत्मा । यदात्मा ।

सर्वगतं ब्रह्म तदेतद्ब्रह्म गुणपूर्णम् । अपूर्वं स्वस्मादन्यत् पूर्वं नेत्यपूर्वमनादीत्यर्थः । अनपरमनन्तम् । अनन्तरं सर्वस्यापि स्वयमेवान्तरम् । अबाह्यं स्वस्मादन्यद्बाह्यं नेत्यबाह्यम् । सर्वस्मादपि स्वयमेव बाह्य इत्यर्थः । अयमात्मा सर्वमनुभवतीति सर्वानुभूः । इत्यनुशासनमिति ॥ ४-५-१९ ॥

इति मधुब्राह्मणम् ॥ ४-५ ॥

## अथ वंशब्राह्मणम्

[मधुविद्योपदेशकऋषिपरम्परा]

**अथ वꣳशः पौतिमाष्यो गौपवनाद्गौपवनः पौतिमाष्यात्पौतिमाष्यो गौपवनाद्गौपवनः कौशिकात्कौशिकः कौण्डिन्यात्कौण्डिन्यः शाण्डिल्याच्छाण्डिल्यः कौशिकाच्च गौतमाच्च गौतमः ॥ १ ॥ आग्निवेश्यादाग्निवेश्यः शाण्डिल्याच्चानभिम्लाताच्चानभिम्लात आनभिम्लातादानभिम्लातो गौतमाद्गौतमः सैतवप्राचीनयोग्याभ्याꣳ सैतवप्राचीनयोग्यौ पाराशर्यात्पाराशर्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्च गौतमाच्च गौतमो भारद्वाजाद्भारद्वाजः पाराशर्यात्पाराशर्यो बैजवापायनाद्बैजवापायनः कौशिकायनेः कौशिकायनिः ॥ २ ॥ घृतकौशिकाद्घृतकौशिकः पाराशर्यायणात्पाराशर्यायणः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्यः आसुरायणाच्च यास्काच्चासुरायणस्त्रैवणिरौपबन्धनैरौपबन्धनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाज आत्रेयादात्रेयो माण्टेर्माण्टिर्गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात्काप्यात्कैशोर्यः काप्यः**

**कुमारहारीतात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपादो बाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरात्पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्य आङ्गिरसो आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्वणाद्दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वꣳसना-न्मृत्युः प्राध्वꣳसनः प्रध्वंसनात्प्रध्वंसन एकऋषेरेकऋषिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोस्सनारुः सनातनात्सनातनः सनकात्सनकः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः ॥ ३ ॥**

इति षष्ठं वंशब्राह्मणम् ॥ ४-६ ॥

अध्यायद्वयोक्ता विद्याः प्रवर्तकऋषिज्ञानपूर्वमनुष्ठिता फलदा भवन्तीत्यतः प्रवर्तक-ऋषीनाह– **अथ वंश इत्यादिना** ॥ गुरुशिष्यपरम्परारूपो वंशो निरूप्यत इत्यर्थः। अत्र प्रथमान्तैरुपदेश्यानां पञ्चम्यन्तैरुपदेष्टॄणां निर्देशो ज्ञेयः । 'पाराशर्यात्' विप्रभार्यायां पराशराज्जातात् वेदव्यासभिन्नात्कस्माच्चिदित्यर्थः[१] । पाराशर्यो जातूकर्ण्यादित्यत्राप्येवं ध्येयम् । परमेष्ठी ब्रह्मा । ब्रह्मणो हयग्रीवात् ब्रह्म स्वयम्भु स्वतन्त्रम् । ब्रह्मणे नम इति वेदपुरुषवाक्यम् ।

इति वंशब्राह्मणम् ॥ ४-६ ॥

इति श्रीकाण्वोपनिषदर्थसङ्ग्रहे राघवेन्द्रयतिकृते चतुर्थोऽध्यायः

---

१. स्फुटोऽयमंशः भाष्ये– 'पाराशर्यो जातुकर्ण्यः पराशरसुतावुभौ । विप्रायामेव भार्यायां तृतीयः कृष्ण

# अथ पञ्चमोऽध्यायः

## अथ आश्वलब्राह्मणम्

[जनकसभा]

**जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे तत्र ह कुरुपाञ्चालानां ब्राह्मणा अभिसमेता बभूवुस्तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव कःस्विदेषां ब्राह्मणानां अनूचानतम इति स ह गवां सहस्रमवरुरोध दश दश पादाः एकैकस्याः शृङ्ग्योराबद्धा बभूवुः ॥ १ ॥**

भगवानेव सर्वोत्तमः सर्वगुणपूर्णः सर्वमुमुक्षूपास्यो मोक्षदश्चेत्यध्यायद्वयोक्तमृषिभिर्मीमांसया समर्थितमित्याहानेनाध्यायेन । तत्रादौ मीमांसाप्रकारमेवाख्यायिकयाह– **जनको ह वैदेह इति** ॥ विदेहगोत्रजो वैदेहः । जनको नामतः । बहुदक्षिणेनेति बहुव्रीहिः । ईजे अयजत् । ह प्रसिद्धम् । तत्र तस्मिन् यज्ञे कुरुपाञ्चालानां कुरूणां पाञ्चालानां देशानां सकाशात् ब्राह्मणा अभिसमेता मिलिता बभूवुः । विजिज्ञासा विशेषेण ज्ञातुमिच्छा । किमिति? येषां ब्राह्मणानां मध्ये अनूचानतमोऽतिशयेन ब्रह्मज्ञानी कस्स्वित् को वा इति विजिज्ञासा बभूवेत्यर्थः । स ह जनको गवां सहस्रमवरुरोध । यज्ञवाटसमीपे मिलितं चकार । तासामेकैकस्या गोव्यक्तेः शृङ्गयोः दशदशपादाः । पलस्य चतुर्थो भागः पाद इत्याहुः । सुवर्णस्य दशदशपादाः प्रतिशृङ्गं दशपादा आबद्धा बभूवुः ॥ ५-१-१ ॥

[याज्ञवल्क्येन गोधनस्वीकारः]

**तान् होवाच ब्राह्मणा भगवन्तो यो वो ब्रह्मिष्ठः स एता गा उदजतामिति ते ह ब्राह्मणा न दधृषुरथ ह याज्ञवल्क्यः स्वमेव ब्रह्मचारिणमुवाचैताः सौम्योदज सोमश्रवा३ इति**

**ता होदाचकार ते ह ब्राह्मणाश्चुक्रुधुः कथं नो ब्रह्मिष्ठो ब्रवीतेत्यथ ह जनकस्य वैदेहस्य होता आश्वलो बभूव सहैनं पप्रच्छ त्वं नु खलु नो याज्ञवल्क्य ब्रह्मिष्ठोऽसी३ इति स होवाच नमो वयं ब्रह्मिष्ठाय कुर्मो गोकामा एव वयं स्म इति तं ह तत एव प्रष्टुं दध्रे होताऽश्वलः ॥ २ ॥**

हे ब्राह्मणाः भगवन्तः पूज्या इति सम्बोध्य । वो युष्माकं मध्ये यो ब्रह्मिष्ठः स एता गाः उदजताम् । [१]अज गतौ क्षपणे च । गृह्णात्विति तानुवाच हेति योजना । न दधृषुः आत्मनो ब्रह्मिष्ठत्वबुद्ध्या गोग्रहणे धैर्यवन्तो नाभूवन् । अथानन्तरं याज्ञवल्क्यो ह किल स्वं स्वकीयमेव ब्रह्मचारिणमुवाच । हे सोम्य सोमपानार्ह [२]सामश्रवनामन् एताः गाः उदज आहर । मद्गृहं प्रति नयेत्युवाचेत्यर्थः । सामश्रवा इत्यामन्त्रणे प्लुतिः । ता गाः उदाचकार । आचार्यगृहं प्रति नीतवान् । आह्वयामासेति वा । नोऽस्माकं मध्ये अयं ब्रह्मिष्ठ इति कथं ब्रवीतीत्येव ते चुक्रुधुः । अथ तेषामेवं क्रोधानन्तरं जनकस्याश्वलो नाम होता बभूव ह । स हैनं याज्ञवल्क्यं पप्रच्छ । नोऽस्माकं मध्ये त्वं नु खलु ब्रह्मिष्ठोऽसी इति पप्रच्छेत्यन्वयः । असी इति प्लुतिः काकुस्वरेणाक्षेपार्था। स याज्ञवल्क्य उवाच । किमिति । तदाह– **नम इत्यादि** ॥ न वयं ब्रह्मिष्ठाः किन्तु ब्रह्मिष्ठाय नमस्कुर्म इति । तर्हि कथं ब्रह्मिष्ठपणभूता गा उदजध्वमित्यतो गोकामा इति । गोकामा एव वयं स्मो अतो गोग्रहणं कृतवन्त इत्यर्थः । एतेन ज्ञानिनो ब्रह्मिष्ठेषु प्रावण्येन भाव्यमिति सूचितम् । तं याज्ञवल्क्यं तत एव धाष्ट्र्याभावादेव अहं ब्रह्मिष्ठो भवाम्येवेत्यवचनेन धाष्ट्र्याभावं ज्ञात्वा प्रश्नं कर्तुं मनो दध्र इत्यर्थः ॥ ५-१-२ ॥

---

१. **'अज गतौ क्षपणे च'** इति नास्ति-क.। २. **'क्वचित् सोमश्रव'** इत्यपि पाठः । सामविधिं शृणोतीति सामश्रव इति व्याख्यानात् भावबोधेऽपि **'सामश्रवे'**त्युपनिषत्पाठः ।

# अथ पञ्चमोऽध्यायः

## अथ आश्वलब्राह्मणम्

[जनकसभा]

**जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे तत्र ह कुरुपाञ्चालानां ब्राह्मणा अभिसमेता बभूवुस्तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव कःस्विदेषां ब्राह्मणानां अनूचानतम इति स ह गवां सहस्रमवरुरोध दश दश पादाः एकैकस्याः शृङ्गयोराबद्धा बभूवुः ॥ १ ॥**

भगवानेव सर्वोत्तमः सर्वगुणपूर्णः सर्वमुमुक्षूपास्यो मोक्षदश्चेत्यध्यायद्वयोक्तमृषिभिर्मीमांसया समर्थितमित्याहानेनाध्यायेन । तत्रादौ मीमांसाप्रकारमेवाख्यायिकयाह– **जनको ह वैदेह इति** ॥ विदेहगोत्रजो वैदेहः । जनको नामतः । बहुदक्षिणेनेति बहुव्रीहिः । ईजे अयजत् । ह प्रसिद्धम् । तत्र तस्मिन् यज्ञे कुरुपाञ्चालानां कुरूणां पाञ्चालानां देशानां सकाशात् ब्राह्मणा अभिसमेता मिलिता बभूवुः । विजिज्ञासा विशेषेण ज्ञातुमिच्छा । किमिति? येषां ब्राह्मणानां मध्ये अनूचानतमोऽतिशयेन ब्रह्मज्ञानी कस्स्वित् को वा इति विजिज्ञासा बभूवेत्यर्थः । स ह जनको गवां सहस्रमवरुरोध । यज्ञवाटसमीपे मिलितं चकार । तासामेकैकस्या गोव्यक्तेः शृङ्गयोः दशदशपादाः । पलस्य चतुर्थो भागः पाद इत्याहुः । सुवर्णस्य दशदशपादाः प्रतिशृङ्गं दशपादा आबद्धा बभूवुः ॥ ५-१-१ ॥

[याज्ञवल्क्येन गोधनस्वीकारः]

**तान् होवाच ब्राह्मणा भगवन्तो यो वो ब्रह्मिष्ठः स एता गा उदजतामिति ते ह ब्राह्मणा न दधृषुरथ ह याज्ञवल्क्यः स्वमेव ब्रह्मचारिणमुवाचैताः सौम्योदज सोमश्रवा३ इति**

**ता होदाचकार ते ह ब्राह्मणाश्चुक्रुधुः कथं नो ब्रह्मिष्ठो ब्रवीतेत्यथ ह जनकस्य वैदेहस्य होता आश्वलो बभूव सहैनं पप्रच्छ त्वं नु खलु नो याज्ञवल्क्य ब्रह्मिष्ठोऽसी३ इति स होवाच नमो वयं ब्रह्मिष्ठाय कुर्मो गोकामा एव वयं स्म इति तं ह तत एव प्रष्टुं दध्रे होताऽश्वलः ॥ २ ॥**

हे ब्राह्मणाः भगवन्तः पूज्या इति सम्बोध्य । वो युष्माकं मध्ये यो ब्रह्मिष्ठः स एता गाः उदजताम् । [1]अज गतौ क्षपणे च । गृह्णात्विति तानुवाच हेति योजना । न दधृषुः आत्मनो ब्रह्मिष्ठत्वबुद्ध्या गोग्रहणे धैर्यवन्तो नाभूवन् । अथानन्तरं याज्ञवल्क्यो ह किल स्वं स्वकीयमेव ब्रह्मचारिणमुवाच । हे सोम्य सोमपानार्ह [2]सामश्रवनामन् एताः गाः उदज आहर । मद्गृहं प्रति नयेत्युवाचेत्यर्थः । सामश्रवा इत्यामन्त्रणे प्लुतिः । ता गाः उदाचकार । आचार्यगृहं प्रति नीतवान् । आह्वयामासेति वा । नोऽस्माकं मध्ये अयं ब्रह्मिष्ठ इति कथं ब्रवीतीत्येव ते चुक्रुधुः । अथ तेषामेवं क्रोधानन्तरं जनकस्याश्वलो नाम होता बभूव ह । स हैनं याज्ञवल्क्यं पप्रच्छ । नोऽस्माकं मध्ये त्वं नु खलु ब्रह्मिष्ठोऽसी इति पप्रच्छेत्यन्वयः । असी इति प्लुतिः काकुस्वरेणाक्षेपार्था। स याज्ञवल्क्य उवाच । किमिति । तदाह– **नम इत्यादि** ॥ न वयं ब्रह्मिष्ठाः किन्तु ब्रह्मिष्ठाय नमस्कुर्म इति । तर्हि कथं ब्रह्मिष्ठपणभूता गा उदजध्वमित्यतो गोकामा इति । गोकामा एव वयं स्मो अतो गोग्रहणं कृतवन्त इत्यर्थः । एतेन ज्ञानिनो ब्रह्मिष्ठेषु प्रावण्येन भाव्यमिति सूचितम् । तं याज्ञवल्क्यं तत एव धाष्ट्याभावादेव अहं ब्रह्मिष्ठो भवाम्येवेत्यवचनेन धाष्ट्याभावं ज्ञात्वा प्रश्नं कर्तुं मनो दध्र इत्यर्थः ॥ ५-१-२ ॥

---

१. '**अज गतौ क्षपणे च**' इति नास्ति-क.। २. '**क्वचित् सोमश्रव**' इत्यपि पाठः । सामविधिं शृणोतीति सामश्रव इति व्याख्यानात् भावबोधेऽपि '**सामश्रवे**'त्युपनिषत्पाठः ।

[मृत्युतरणोपायोपदेशः]

**याज्ञवल्क्येति होवाच यदिदꣳसर्वं मृत्युनाऽऽप्तꣳ सर्वं मृत्युनाऽऽभिपन्नं केन यजमानो मृत्योराप्तिमतिमुच्यत इति होत्रर्त्विजाऽग्निना वाचा वाग्वै यज्ञस्य होता तद्येयं वाक् सोऽयमग्निः स होता स मुक्तिः साऽतिमुक्तिः ॥ ३ ॥**

याज्ञवल्क्येति सम्बोध्योवाच होताऽऽश्वल इत्यनुषङ्गः । यदिदं सर्वं प्राणिजातं मृत्युनाप्तं मृत्युनाभिपन्नं ग्रस्तं च केन पुंसा यजमानो मृत्योराप्तिमतिमुच्यत इत्युवाचेत्यन्वयः। इति पृष्टो याज्ञवल्क्य आह– **होत्रेति** ॥ होत्रर्त्विजा। अग्निना वाचा होत्रर्त्विगादिनामकेन होत्रर्त्विगग्निवाक्स्थितेन वासुदेव-रूपेण हरिणोपासितेन यजमानो मृत्योरतिमुच्यत इत्युवाच । याज्ञवल्क्य इति योज्यम् । होतरि वाचि च स्थितरूपयोरन्योन्यं भेदः किमित्यतो नेत्याह– **वाग्वा इति** ॥ वाङ्नामा वागन्तःस्थो वासुदेवरूपो हरिरेव यज्ञस्य होता होतृनामा होतृसंस्थो वै प्रसिद्धः । वागन्तःस्थस्याग्निस्थस्य च रूपस्या-भेदमाह– **तद्येयमिति** ॥ सा प्रसिद्धा चासौ या च तद्येयं वाक् वाङ्नामा। वागन्तःस्थो हरिः सोऽयमग्निः अग्निनामाग्निस्थः । तस्य होतृस्थेनाभेदमाह– **स होतेति**॥ सोऽग्निस्थोऽग्निनामको हरिः होता । होतृसंस्थो होतृनामकः वागादिस्थस्य कथं मोचकतेत्यत आह– **स इति** ॥ स वागादिस्थः मुक्तिः मुक्तिदः। न केवलं मुक्तिदत्वमात्रं साऽतिमुक्तिः । अतिशयितमुक्तिदश्च विधेयापेक्षया सेति निर्देशः । मनुष्येभ्यो देवानामधिकसुखदोऽपीत्यर्थः । एवमग्रेतनखण्डत्रययोजना ध्येया ॥ ५-१-३ ॥

**याज्ञवल्क्येति होवाच यदिदꣳसर्वमहोरात्राभ्यामाप्तꣳ सर्व-महोरात्राभ्यामभिपन्नं केन यजमानोऽहोरात्रयोराप्तिमति-मुच्यत इत्यध्वर्युणर्त्विजा चक्षुषाऽऽदित्येन चक्षुर्वै यज्ञस्या-**

**ध्वर्युस्तद्यदिदं चक्षुः सोऽसावादित्यः सोऽध्वर्युः स मुक्तिः साऽतिमुक्तिः ॥ ४ ॥**

अहोरात्राभ्याम् तत्कृतविकाराभ्यामित्यर्थः । अध्वर्युणा ऋत्विजा । चक्षुषा-दित्येनेत्यस्याध्वर्य्वादिगतेन तन्नामकेन सङ्कर्षणाख्यरूपेणोपासितेनेत्यर्थः ॥ ४ ॥

**याज्ञवल्क्येति होवाच यदिदꣳ सर्वं पूर्वपक्षापरपक्षाभ्यामाप्तꣳसर्वं पूर्वपक्षापरपक्षाभ्यामभिपन्नं केन यजमानः पूर्वपक्षापरपक्षयोराप्तिमतिमुच्यत इत्युद्गात्रर्त्विजा वायुना प्राणेन प्राणो वै यज्ञस्योद्गाता तद्योऽयं प्राणः स वायुः स उद्गाता स मुक्तिः साऽतिमुक्तिः ॥ ५ ॥**

**पूर्वपक्षेति** ॥ पूर्वपक्षापरपक्षकृतविकाराभ्यामित्यर्थः । उद्गात्रा ऋत्विजा । वायुना प्राणेनेत्यस्योद्गात्रादिस्थेन प्रद्युम्नाख्यरूपेणोपासितेनेत्यर्थः ॥ ५-१-५ ॥

**याज्ञवल्क्येति होवाच यदिदमन्तरिक्षमनारम्भणमिव केनाक्रमेण यजमानः स्वर्गं लोकमाक्रमत इति ब्रह्मणर्त्विजा मनसा चन्द्रेण मनो वै यज्ञस्य ब्रह्मा तद्यदिदं मनः सोऽसौ चन्द्रः स ब्रह्मा स मुक्तिः साऽतिमुक्तिरित्यतिमोक्षाः ॥ ६ ॥**

**यदिति** ॥ यद्यस्मादिदमन्तरिक्षं आकाशमनारम्भणमनालम्बनमिव भासते अथ तस्मात् केनाक्रमेण कर्मणा साधनेन यजमानः स्वर्गं लोकं मोक्षमाक्रमते प्राप्नोति । ब्रह्मणा ऋत्विजा मनसा चन्द्रेणेत्यस्य ब्रह्मर्त्विगाद्यन्तर्गतेन अनिरुद्धाख्यरूपेणोपासितेनेत्यर्थः ॥ निगमयति– **इत्यतिमोक्षा इति** ॥ अतिशयितमोक्षहेतूपास्तय इत्युक्त्वा इत्यर्थः ॥ ५-१-६ ॥

[देवपदप्राप्त्युपायाः]

**अथ सम्पदः याज्ञवल्क्येति होवाच कतिभिरयमद्यर्ग्भिर्होता-**

**ऽस्मिन् यज्ञे करिष्यतीति तिसृभिरिति कतमास्तास्तिस्र इति पुरोनुवाक्या च याज्या च शस्यैव तृतीया किं ताभिर्यजतीति यत्किञ्चेदं प्राणभृदिति ॥ ७ ॥**

अथ मोक्षहेतूपास्त्युक्त्यनन्तरं देवपदप्राप्त्यादिरूपसम्पत्साधनभूतोपास्तयो निरूप्यन्त इत्यर्थः ॥ सम्पद्धेतुत्वादुपास्तयः सम्पच्छब्देनोक्ताः याज्ञवल्क्येति सम्बोध्योवाच किल होताश्वलः । किमिति । कतिभिः कियतीभिः ऋग्भिः अयं होता अद्य अस्मिन् यज्ञे शंसनाख्यं कर्म करिष्यतीति । उत्तरमाह याज्ञवल्क्यः– **तिसृभिरिति** ॥ पुनः पृच्छत्याश्वलः ॥ **कतमास्तास्तिस्र इति** ॥ उत्तरमाह– **पुरोनुवाक्येत्यादि** ॥ यजनात्पूर्वं जप्या पुरोनुवाक्या यजनावसाने जप्या याज्या होमानन्तरं जप्या शस्येति टीकोक्तिः । पुरस्ताल्लक्ष्या पुरोनुवाक्या । उपरिष्टाल्लक्ष्या याज्येति याज्ञिकाः । एतासां फलं पृच्छति– **किं ताभिरिति** ॥ जयति प्राप्नोतीति पप्रच्छेत्यर्थः । उत्तरमाह– **यत्किञ्चिदिति** ॥ ताभिरित्यनुषज्यते । वासुदेवाख्यविष्ण्वधिष्ठानभूताभिः तत्र स्थितवासुदेवाख्यरूपेण स्मृतेनेति यावत् । यत्किञ्चेदं प्राणभृत् प्राणिजातं तज्जयति । प्राणभृतामीशो भवतीत्यर्थः ॥ ५-१-७ ॥

**याज्ञवल्क्येति होवाच कत्ययमद्याध्वर्युरस्मिन्यज्ञ आहुतीर्होष्यतीति तिस्र इति कतमास्तास्तिस्र इति या हुता उज्ज्वलन्ति या हुता अतिनेदन्ते या हुता [१]अधिशेरते किं ताभिर्जयतीति या हुता उज्ज्वलन्ति देवलोकमेव ताभिर्जयति दीप्यत इव हि देवलोको या हुता अतिनेदन्ते पितृलोकमेव ताभिर्जयत्यतीव हि पितृलोको या हुता अधिशेरते मनुष्यलोकमेव ताभिर्जयत्यथ इव हि मनुष्यलोकः ॥ ८ ॥**

---

१. **'अतिशेरते'** इत्यपि क्वचित् पाठः ।

याज्ञवल्क्येत्यादि प्राग्वत् । या हुताः अग्नौ प्रक्षिप्ताः समिदादयः उज्ज्वलन्ति या हुता आहुतयश्चरुप्रभृतयो अतिनेदन्ते । अतीव शब्दं कुर्वन्ति । या आहुतयः पयस्सोमरसादयः । अधि अधो गत्वा शेरते भूमावासते । फलं पृच्छति– **किमिति** ॥ ताभिः सङ्कर्षणाख्यरूपेण अधिष्ठिताभिः तिसृभिराहुतिभिः । तद्गतसङ्कर्षणाख्यरूपेणेति यावत् । किं जयतीति पृष्ट उत्तरमाह– **या इति** ॥ या आहुतयो हूयमानहविः पदार्थाः उज्ज्वलन्ति । ताभिः तन्निष्ठसङ्कर्षणरूपेण स्मृतेन देवलोकमेव जयति । देवलोकाधिपत्यं लभते । कथमित्यत उज्ज्वलनत्वसाम्यादित्याह– **दीप्यत इव हीति** ॥ एवमग्रेऽपि ध्येयम् । पितृलोकः अतीव अत्यन्तं नेदते नादवानिव । अध इव हि । नरकाद्यधोगतिसाम्यनिरासायेवशब्दः । देवलोकपितृलोकापेक्षयाधस्तन इत्यर्थः ॥ ५-१-८ ॥

**याज्ञवल्क्येति होवाच कतिभिरयमद्य ब्रह्मा यज्ञं दक्षिणतो देवताभिर्गोपायतीत्येकयेति कतमा सैकेति मन एवेत्यनन्तं वै मनोऽनन्ता विश्वे देवा अनन्तमेव स तेन लोकं जयति ॥ ९ ॥**

यज्ञं [1]दक्षिणतो दक्षिणभागे स्थितो ब्रह्मा । अद्य यज्ञं कतिभिर्देवताभिः गोपायतीत्यु-वाचाश्वल इत्यर्थः । शिष्टं प्राग्वत् ॥ **मन एवेति** ॥ मनोऽभिमानी चतुर्मुख एवेत्यर्थः । तं स्तौति– **अनन्तं वा इति** ॥ तदानन्त्यमुपपादयति– **अनन्ता इति** ॥ यदधिष्ठिता विश्वेदेवा अप्यनन्ताः किमु मनोऽनन्तमिति निश्चयेन विमोक्ष्यत्वाद्वा अनन्ताख्यविष्णूपासकत्वाद्वा अनन्ता विश्वेदेवा इत्यर्थः । एवं ज्ञानिनः फलमाह– **अनन्तमिति** ॥ तेन मनोऽभिमानिचतु-र्मुखस्थेन तदधिष्ठानदेवेषु विद्यमानेन च प्रद्युम्नाख्यरूपेणोपासितेन तदुपासनयेति यावत् । अनन्तं अनन्ताख्यविष्णुलोकं जयति प्राप्नोति ॥ ५-१-९ ॥

---

१. '**दक्षिणतो आहवनीयस्य दक्षिणभागे**' इति भावबोधे ।

**याज्ञवल्क्येति होवाच कत्ययमद्योद्गाताऽस्मिन् यज्ञे स्तोत्रियाः स्तोष्यतीति तिस्र इति कतमास्तास्तिस्र इति पुरोनुवाक्या च याज्या च शस्यैव तृतीया कतमास्ता या अध्यात्ममिति प्राण एव पुरोनुवाक्या अपानो याज्या व्यानः शस्या किं ताभिर्जयतीति पृथिवीलोकमेव पुरोनुवाक्यया जयत्य-न्तरिक्षलोकं याज्यया द्युलोकꣳ शस्यया ततो ह होता आश्वल उपरराम ॥ १० ॥**

इत्याश्वलब्राह्मणम् ॥ ५-१ ॥

स्तोत्रियाः सामारूढा ऋचः ता ऋचः अध्यात्मं याः [१]यदभिमन्यमानाः ता देवताः कतमा इत्यर्थः ॥ **किं ताभिरिति** ॥ प्राणापानव्यानरूपदेवताभिः पुरोनुवाक्याद्यधिष्ठात्रीभिरित्यर्थः । पुरोनुवाक्यया पुरोनुवाक्यामानिप्राणगतेन । याज्यया याज्यामान्यपानस्थेन । शस्यया शस्यामानिव्यानस्थेनानिरुद्धेनोपासितेनेत्यर्थः । ततः स्वकृतप्रश्नानामुत्तरस्योक्तत्वादेव उपरराम तूष्णीं बभूव ॥ ५-१-१० ॥

इति आश्वलब्राह्मणम् ॥ ५-१ ॥

## अथ आर्तभागब्राह्मणम्

[इन्द्रियाणि कति? विषयाश्च कति?]

**अथ हैनं जारत्कारव आर्तभागः पप्रच्छ याज्ञवल्क्येति होवाच कति ग्रहाः कत्यतिग्रहा इत्यष्टौ ग्रहा अष्टावतिग्रहा इति ये तेऽष्टौ ग्रहा अष्टावतिग्रहाः कतमे त इति ॥ १ ॥**

अथाश्वलोपरत्यनन्तरं जरत्कारोरपत्यं जारत्कारवः ऋतभागस्यापत्यं आर्तभागः । गृह्णन्ति विषयानिति ग्रहाः इन्द्रियाणि कति । अतिग्रहाः विषयाश्च कति

१. 'प्राणाभिमन्यमानाः' - ख. ।

कियन्त इत्युवाचेत्यन्वयः । उत्तरमाह– **अष्टाविति** ॥ संख्येयान् पृच्छति– **एत इति** ॥ एते अष्टौ ग्रहा अष्टावतिग्रहाश्चोक्ताः । ते कतमे कीदृशा इत्युवाचेत्यन्वयः ॥ १ ॥

[अष्टौ ग्रहा अष्टावतिग्रहाः]

**प्राणो वै ग्रहः सोऽपानेनातिग्रहेण गृहीतोऽपानेन हि गन्धान् जिघ्रति ॥ २ ॥**

उत्तरमाह– **प्राणो वा इति** ॥ प्राणः घ्राणेन्द्रियं ग्रहः । अतिग्रहत्वप्रदर्शनपूर्वं प्राणाख्यातिग्रहं दर्शयति– **स इति** ॥ स प्राणोऽपानेनापानेनाभिमन्यमानेन गन्धेनातिग्रहेण गृहीतः । अनेन घ्राणं गृह्णाति स्वाभिमुख्येनाहरतीति गन्धोऽति-ग्रह इति गन्धस्य घ्राणातिग्रहत्वमुक्तं भवति । प्राणस्य ग्रहत्वं दर्शयति– **अपानेनेति** ॥ अपानाभिमन्यमानेन घ्राणेन गन्धान् जिघ्रति जीवः हि यस्मात्तस्मात्प्राणो ग्रह इत्यर्थः ॥ ५-२-२ ॥

**वाग्वै ग्रहः स नाम्नाऽतिग्रहेण गृहीतो वाचा हि नामान्यभिवदति ॥ ३ ॥ जिह्वा वै ग्रहः स रसेनातिग्रहेण गृहीतो जिह्वया हि रसान्विजानाति ॥ ४ ॥ चक्षुर्वै ग्रहः स रूपेणातिग्रहेण गृहीतश्चक्षुषा हि रूपाणि पश्यति ॥ ५ ॥ श्रोत्रं वै ग्रहः स शब्देनातिग्रहेण गृहीतः श्रोत्रेण हि शब्दान् शृणोति ॥ ६ ॥ मनो वै ग्रहः स कामेनातिग्रहेण गृहीतो मनसा हि कामान् कामयते ॥ ७ ॥ हस्तौ वै ग्रहः स कर्मणाऽतिग्रहेण गृहीतो हस्ताभ्याꣳ हि कर्म करोति ॥ ८ ॥ त्वग्वै ग्रहः स स्पर्शेनातिग्रहेण गृहीतस्त्वचा हि स्पर्शान् वेदयत इत्येतेऽष्टौ ग्रहा अष्टावतिग्रहाः ॥ ९ ॥**

**वाग्वा इति** ॥ प्राग्वद्योजना । एवमग्रेऽपि । इत्येते अष्टौ ग्रहा अष्टावतिग्रहा इत्येतत्पर्यन्तं योजना ध्येया ॥ कामेन काम्येन ॥ उपसंहरति– **इत्येतेऽष्टाविति** ॥ ५-२-३–९ ॥

[मृत्युः का देवता? तस्याः मृत्युदेवता का? इत्यादिप्रतिवचनम्]

**याज्ञवल्क्येति होवाच यदिदꣳ सर्वं मृत्योरन्नं का स्वित्सा देवता यस्या मृत्युरन्नमित्य[१]ग्निर्वै मृत्युः सोऽपामन्नमप पुनर्मृत्युं जयति[२] य एवं वेद ॥ १० ॥**

प्रष्टव्यान्तरं पृच्छति– **याज्ञवल्क्येति** ॥ यदिदं प्रमितं सर्वं यस्य मृत्योरन्नं स मृत्युः का देवता । स च मृत्युर्यस्या देवताया अन्नं सा च देवता केति योजना । आद्यस्योत्तरमग्निरिति । द्वितीयस्योत्तरं स इति । [३]अत्रैके **सोऽग्निरपां अबभिमानिनः सूर्यस्यान्नमिति वा अग्निपदेन चतुर्मुखोऽप्शब्देन विष्णुरिति वार्थ** इत्याहुः । एतज्ज्ञानिनः फलमाह– **अपपुनरिति** ॥ अपमृत्युं पुनर्मृत्युं पुनर्मृतिं च जयति अतिक्रामति । मुक्तो भवतीति यावत् । य एवं वेदेति योज्यम् ॥ ५-२-१० ॥

[ब्रह्मज्ञानी प्रारब्धफलमनुभूय मुक्तिमेति]

**याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियत उदस्मात्प्राणाः क्रामन्त्याहो३ नेति नेति होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते स उच्छ्वयत्याध्यायत्याध्मातो मृतः शेते ॥ ११ ॥**

मनुष्यो ज्ञानी निर्याणकाले किं ब्रह्मनाड्या प्राणैस्सह गच्छति उत यावच्छरीरलयमत्रैव स्थित्वा तल्लये पश्चाद्गच्छतीति पृच्छति– **याज्ञवल्क्येति** ॥

---

१. 'अग्नौ सर्वे देवा विलीयन्ते' इति श्रुतेः । २. 'य एवं वेद' इति क्वचित् नास्ति ।
३. श्रीरघूत्तमतीर्थानां व्याख्यानमत्र श्रीमच्चरणैर्निर्दिष्टम् । 'सोऽग्निरपां सूर्यस्यान्नं.... विष्णुस्तस्यान्नं' भा.टि. ।

अयमात्मत्वरूपैकगुणोपासको ब्रह्मज्ञानी पुरुषो यत्र यदा म्रियते तदा अस्मात् ज्ञानिदेहात् प्राणा वागादीन्द्रियाभिमानिनः उत्क्रामन्ति **आहो३ नेति** ॥ मृतिकाले इन्द्रियाभिमानिभिस्सह ब्रह्मज्ञानी ब्रह्मनाड्योत्क्रामत्युत नेति प्रश्नार्थः। उत्तरमाह– **नेति होवाचेति** ॥ अत्रैव समवलीयन्ते । यावच्छरीर-नाशमत्रैव शरीरे तिष्ठन्ति स ज्ञानी उच्छ्वयति स्थूलदेहो भवति । आध्मायति । बाह्यवायुना पूरितो भवति । आध्मातो मृतो निश्चेष्टः शेते । एवं प्रारब्धफलभूतं देहोच्छूनतादिकमनुभूय पश्चान्मुक्तिं गच्छतीत्यर्थः ॥ ५-२-११ ॥

[अनन्तं वै नाम]

**याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियते किमेनं न जहातीति नामेत्यनन्तं वै नामानन्ता विश्वे देवा अनन्तमेव स तेन लोकं जयति ॥ १२ ॥**

मुक्तौ विशेषं पृच्छति– **याज्ञवल्क्येति** ॥ अयं पुरुषो ब्रह्मज्ञानी यत्र यदा म्रियते मुक्तो भवति तदा एनं जीवं किं न जहाति न त्यजतीत्युवाचेत्यन्वयः । उत्तरमाह– **नामेतीति** ॥ कुत इत्यत आह– **अनन्तमिति** ॥ नाम्नोऽनन्तत्वं कुत इत्यतस्तद्वाच्यानां देवानामनन्तत्वादित्याह– **अनन्ता वा इति** ॥ ब्रह्मरुद्रादिदेवानामनन्तत्वात्तन्नामान्यप्यनन्तानीत्यर्थः । एतज्ज्ञानिनः फलमाह– **अनन्तमेवेति** ॥ य एवं वेदेति शेषः ॥ ५-२-१२ ॥

[साधारणमृतिप्रकारः]

**याज्ञवल्क्येति होवाच यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवीꣳ शरीरमाकाशमात्मौषधीर्लोमानि वनस्पतीन् केशा अप्सु लोहितं च रेतश्च निधीयते क्वायं तदा पुरुषो भवतीत्याहर सोम्य हस्तमार्तभागाऽऽवामेवैतस्य वेदिष्यावो न नावेत्**

**तत् स जन इति तौ होत्क्राम्य मन्त्रयाञ्चक्राते तौ ह यदूचतुः कर्म हैव तदूचतुरथ यत्प्रशशꣳसतुः कर्म हैव तत्प्रशंशꣳसतुः पुण्यो वै पुण्येन कर्मणा भवति पापः पापेनेति ततो ह जारात्कारव आर्तभाग उपरराम ॥ १३ ॥**

**इत्यार्तभागब्राह्मणम् ॥ ५-२ ॥**

इदानीं साधारणमृतिप्रकारं पृच्छति– **याज्ञवल्क्येति** ॥ यत्र यदा । वाक् वागभिमानी अग्निं अधिदैवभूतं मूलरूपमप्येति प्राप्नोति । वातं देहस्थवाय्वभिमानी प्राणः मूलरूपम् । एवं चक्षुरित्यादावपि ध्येयम् । अत्राध्यात्मगतवागादिदेवानामधिदैवप्राप्तिर्भागश एव भागशस्तु जीवेनेति ज्ञेयम् । तथाच सूत्रम् 'अग्न्यादि-गतिश्रुतेरिति चेन्न भाक्तत्वात्' (ब्र.सू.३-१-४) इति । 'आत्मा' देहप्रेरकतया हृदिस्थं हरे रूपम् 'आकाशं' बहिर्व्याप्तं स्वकीयं रूपं लोहितं रेतश्च तदुभयमानिद्धयं अप्सु निधीयते तदाऽयं पुरुषो जीवः क्व भवति । कुत्रस्थाने तिष्ठतीत्युवाचेत्यन्वयः । इति पृष्टस्योत्तरं वक्तुं तस्यातिगोप्यत्वज्ञापनायोपोद्धातमाह– **आहरेति** ॥ हो सोम्य हस्तमाहर । गृहाण देहीति वा । हे आर्तभाग आवामेव एतस्यैतत् त्वत्पृष्टं तत्त्वं वेदिष्यावः । नौ आवाभ्यां स जनोऽयोग्यजनः एतत् न विद्यादित्यर्थः । तौ याज्ञवल्क्यार्तभागौ उत्क्रम्योत्थाय । मन्त्रयाञ्चक्राते । किं मन्त्रयामासतुरित्यत उपनिषत्स्वयमाह– **तौ हेति** ॥ यत् कर्मैव । कर्मफलदातृतया कर्मपदेन भगवान् ग्राह्यः । प्रशशंसतुरित्यर्थः । क्व तदा पुरुष इति कृतप्रश्नस्योत्तरमाह– **पुण्यो वा इति** ॥ स मृतः पुरुषो यदि पुण्यकर्मा तर्हि पुण्येन कर्मणा तत्स्थेन तन्नामकेन हरिणा पुण्यो भवति । स्वर्गादिपुण्यलोकस्थो भवति । पापकर्मा चेत्पापेन कर्मणा पापफलदातृतया पापनामकेन पापस्थेन हरिणा पापो नरकादिलोकस्थो भवति । यदि ज्ञानी तर्हि ज्ञानस्थेन हरिणा मुक्ति-

माप्नोतीत्यपि ग्राह्यम् ॥ **तत इति** ॥ स्वकृतप्रश्नस्योत्तरितत्वात् उपरराम तूष्णीं बभूवेति ॥ ५-२-१३ ॥

इति आर्तभागब्राह्मणम् ॥ ५-२ ॥

## अथ भुज्युब्रह्मणम्

**अथ हैनं भुज्युर्लाह्यायनिः पप्रच्छ याज्ञवल्क्येति होवाच मद्रेषु चरकाः पर्यव्रजाम ते पतञ्जलस्य काप्यस्य गृहानैम तस्यासीद् दुहिता गन्धर्वगृहीता तमपृच्छाम कोऽसीति सोऽब्रवीत् सुधन्वाऽऽङ्गिरस इति तं यदा लोकानामन्तान-पृच्छामाथैनमब्रूम क्व पारिक्षिता अभवन्निति क्व पारिक्षिता अभवन् स त्वा पृच्छामि याज्ञवल्क्य क्व पारिक्षिता अभवन्निति ॥ १ ॥**

अथार्तभागप्रश्नोत्तरानन्तरं भुज्युर्भुज्यनामा लह्यस्यापत्यं लाह्यायनिः एनं पप्रच्छ। एतत्प्रश्नस्य न त्वयोत्तरं वक्तुं शक्यमिति भावेन काञ्चन कथामाह– **याज्ञवल्क्येति**॥ चरकास्तीर्थचारिणः सन्तो वयं मद्रेषु देशेषु पर्यव्रजाम पर्यटनवन्तोऽभूम। ते वयं काप्यस्य कपिगोत्रोत्पन्नस्य पतञ्जलस्य पतञ्जलनाम्नो गृहानैम अगमाम। तस्य पतञ्जलस्य दुहिता पुत्री गन्धर्वगृहीता गन्धर्वेणा-विष्टाऽऽसीत्। तं दुहित्राविष्टं त्वं क इत्यपृच्छाम। सोऽब्रवीत् सुधन्वा आङ्गिरसोऽङ्गिरोगोत्रज इत्यब्रवीदित्यर्थः। तं गन्धर्वं यदा लोकानामन्तान् निर्णयानपृच्छाम। अथ तदा एनं गन्धर्वं क्व पारीक्षिता अभवन्नित्यब्रूमेत्यर्थः। परितः ईक्षितृत्वात्परीक्षिद्विष्णुः। तत्पुत्रत्वात्पारीक्षिताः अतीतानागतकामदेवा ज्ञेयाः। द्विरुक्तिरादरार्था। सोऽहं त्वा पच्छामि ॥ ५-३-१ ॥

**स होवाचोवाच वै सोऽगच्छन् वै ते तद्यत्राश्वमेधयाजिनो गच्छन्तीति क्व न्वश्वमेधयाजिनो गच्छन्तीति द्वात्रिंशतं**

**वै देवरथाह्न्यान्ययं लोकस्तं समन्तं पृथिवी द्विस्तावत्पर्येति ताꣳ समन्तं पृथिवी द्विस्तावत्समुद्रः पर्येति तद्यावती क्षुरस्य धारा यावद्वा मक्षिकायाः पत्रं तावानन्तरेणाकाशस्तानिन्द्रः सुपर्णो भूत्वा वायवे प्रायच्छत् तान्वायुरात्मनि धित्वा तत्रागमयद् यत्राश्वमेधयाजिनोऽभवन्नित्येवमिव वै स वायुमेव प्रशसꣳस तस्माद्वायुरेव व्यष्टिर्वायुः समष्टिरप पुनर्मृत्युं जयति य एवं वेद ततो ह भुज्युर्लाह्यायनिरुपरराम ॥ २ ॥**

इति भुज्युब्राह्मणम् ॥ ५-३ ॥

एवं पृष्टो याज्ञवल्क्य उवाच । स सुधन्वाङ्गिरसस्तुभ्यमुवाच वै उक्तवानेव किल । अहं तु ब्रवीमीति मत्वोत्तरमाह– **अगच्छन्वा इति** ॥ यत्र लोके अश्वमेधयाजिनः शताश्वमेधयाजित्वेनाश्वमेधयाजिन इत्युक्ताः अतीतानागत-मुक्तेन्द्राः गच्छन्ति तत् तत्र ते पारीक्षिता अगच्छन्नित्युवाच याज्ञवल्क्य इत्यर्थः । पुनः पृच्छति– **क न्वश्व-मेधयाजिन इति** ॥ ब्रह्माण्डाद्बहि-स्तिष्ठन्तीति वक्तुं ब्रह्माण्डस्वरूपमेकदेशेनाह– **द्वात्रिंशतमिति** ॥ द्वात्रिंशतं द्वात्रिंशत् । देवरथस्य परिवर्तमानस्याहानि मुहूर्तानि देवरथाहानि । तैर्व्याप्तानि योजनानि देवरथान्हानि यावन्ति योजनानि देवस्य सूर्यस्याहोभिः प्रकाशैर्वा व्याप्तानि अयम् । सौरप्रकाशव्याप्तो देशो लोकनामा द्वात्रिंशन्मुहूर्तात्मकाहोरात्राभ्यां यावन्तं देशं सूर्यरथः परिभ्रमति तावति देशे सौरप्रकाशः । यावति च सौरप्रकाशः तावान् देशो लोक इत्युच्यत इत्यर्थः । यावान् लोकनामको देशः द्विस्तावत् द्विगुणितस्तावान् देशः काठिण्यात्पृथिवीत्युक्तं तमः । तं लोकनामकं देशं समन्तं समन्तात्पर्येति । परितो वर्तते । यावांस्तमः प्रदेशः द्विस्तावत्समुद्रः घनोदकनामा तां पृथिवीं समन्तं समन्तात्पर्येति परितो वर्तते । ततस्त्वण्डं च सौवर्णं तद्भिन्नं हरिणा पुरेति ग्राह्यम् । यावती क्षुरस्य धारा अग्रं यावद्वा मक्षिकायाः पत्रं तावान् तत्र सौवर्णाण्डे अन्तरेणाकाशोऽस्ति ।

तेन मार्गेणेन्द्रः सामर्थ्यादिन्द्रनामा पुरुषरूपी गरुडः सुपर्णो भूत्वा सुपर्णरूपी भूत्वा पारीक्षिता[१]न्वायवे प्रायच्छत्। वायुस्तान् पारीक्षितान् आत्मनि स्वशरीरे [२]धित्वा तत्रागमयत् यत्र प्रद्युम्ननामके विष्णौ अश्वमेधयाजिनो मुक्तिगा इन्द्रा अभवन्निति । यथाहं पारीक्षितानां मोक्षदातृतया वायुं स्तौमि । एवमिव वै । एवमेव वै । स गन्धर्वोऽपि वायुमेव प्रशशंस । वेदपुरुषः स्वयं वायुं स्तौति– **तस्मादिति** ॥ पारीक्षितानां मोक्षदातृत्वाद्वायुरेव व्यष्टिः । वि विविधं प्रत्येकमनेकविधं देवर्षिपितृयक्षगन्धर्वमानुषोरगासुरभेदेन यदष्टकं तन्नयतीति व्यष्टिः वायुरेव समष्टिः सं सम्पूर्णं यत् सुपर्णेशशेषेन्द्रतत्स्त्रीरूपाष्टकं तन्नयति प्रेरयतीति समष्टिः । एकादशस्कन्धैकादशाध्यायतात्पर्ये तु 'पञ्चभूतमनोबुद्धि-रुद्राणां प्रतिदेहकम् । बाह्यतश्चापि नेतृत्वाद्वायुर्व्यष्टिः समष्टिकः' (भा.ता. ११-११-४४) इत्युक्तम् । व्यष्टिसमष्टित्वेन वायुज्ञानिनः फलमाह– **अपपुन-रिति** ॥ अपमृत्युं पुनर्मृत्युं मृतिं च जयति अतिक्रामतीत्यर्थः ॥ ५-३-२ ॥

इति भुज्युब्राह्मणम् ॥ ५-३ ॥

## अथ उषस्तब्राह्मणम्

[ब्रह्मणः लक्षणानि]

**अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ याज्ञवल्क्येति होवाच यत्साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरो यः प्राणेन प्राणिति स त आत्मा सर्वान्तरो योऽपानेनापानिति स त आत्मा सर्वान्तरो यो व्यानेन व्यानिति स त आत्मा सर्वान्तर य उदानेनोदानिति स त आत्मा सर्वान्तरो**

---

१. 'वायवे ब्रह्मणे इत्यर्थ' इति भा.बो. । २. धृत्वा इत्यर्थः ।

**यः समानेन समानिति स त आत्मा सर्वान्तर एष आत्मा सर्वान्तरः ॥ १ ॥**

अथ भुज्युप्रश्नोत्तरानन्तरं चक्रस्यापत्यं चाक्रायण उषस्तनामा एनं याज्ञवल्क्यं पप्रच्छ। साक्षादन्यप्रसादं विना अपरोक्षं यथा भवति तथा अत्ति अनुभवति स्वस्वरूपमन्यच्चेति साक्षादपरोक्षात्। ब्रह्म सर्वगुणपरिपूर्णः। यश्चात्मा सर्वेषां नियामकः सर्वनियमने अन्यापेक्षा नास्तीत्याह– **सर्वान्तर इति** ॥ सर्वं सामर्थ्यं स्वान्तरेवास्तीति सवान्तर इत्यर्थः। सर्वशक्तिमानिति यावत्। इति यत् यो मया श्रुतः तं लक्षणेन मे व्याचक्ष्वेति होवाचेत्यन्वयः। उत्तरमाह– **एष इति** ॥ ते तव आत्मा नियामकः साक्षादपरोक्ष-त्वाद्युक्तगुण-विशिष्टस्त्वया पृष्टः। एष वक्ष्यमाण इत्यर्थः। एष क इति पृच्छति– **कतमो याज्ञवल्क्य सर्वान्तर इति** ॥ सर्वान्तरत्वादिगुणकः किंलक्षणक इत्यर्थः। तस्य ब्रह्मात्मशब्दप्रवृत्तिनिमित्तान्येव लक्षणानीति भावेनात्मशब्दार्थमाह– **य इति** ॥ यः प्राणेन प्राणनाम्ना मुख्यवायुरूपेण प्राणिति जगत्प्राणनं करोति स ते तव आत्मा सर्वान्तरः सर्वशक्त्यादिमत्त्वरूपप्रागुक्तगुणक इत्यर्थः। एवमग्रेऽपि योजना ध्येया। **अपानिति** ॥ मलादिविसर्जनं प्राणिनां करोति। व्यानिति भुक्तमन्नादिकं शरीरे विविधं नयति। उदानिति ऊर्ध्वं नयति श्वासादि करोति। समानेन समानितीत्यपि ग्राह्यम्। निगमयति– **एष त इति** ॥ ते आत्मा सर्वान्तर एषः प्राणादिपञ्चरूपमुख्यवायुद्वारेण प्राणनादिव्यापारकर्तृत्वलक्षणक इत्यर्थः ॥ ५-४-१ ॥

**स होवाचोषस्तश्चाक्रायणो यथा विब्रूयादसौ गौरसावश्व इत्येवमेवैतद्व्यपदिष्टं भवति यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरो न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारꣳ शृणुया न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं**

**विजानीया एष त आत्मा सर्वान्तरोऽतोऽन्यदार्तं ततो होषस्तश्चाक्रायण उपरराम ॥ २ ॥**

**इति उषस्तब्राह्मणम् ॥ ५-४ ॥**

वाद्यन्तरोक्तरीत्या देवतान्तराणामपीदं लक्षणं सममतो साधारणं लक्षणं तस्य नाम च ब्रूहीति भावेन पुनः पृच्छति– **स होवाचेत्यादिना** ॥ गवादिस्वरूपे पृष्टे असौ चतुष्पात् गौरसौ चतुष्पादश्व इति यथा कश्चिद्विब्रूयात् वदेत्। एवमैतत् त्वया व्यपदिष्टं उक्तं भवति। यथा चतुष्पात्त्वादिलक्षणं गवाश्वादि-साधारणं एवं प्राणनादिकर्तृत्वलक्षणं त्वयोक्तं वाद्यन्तरोक्तदिशा हर-हिरण्य-गर्भादिसाधारणमिति नेदं निर्णायकमिति भावः ॥ **यदेवेति** ॥ य एव साक्षादपरोक्षत्वादिगुणकः श्रुतो मया तं अन्यासाधारणलक्षणादियुक्ततया मे मह्यं व्याचक्ष्वेति प्रश्नार्थः। एष इत्यादि प्राग्वत्। साकल्येनाज्ञेयत्वं लक्षणमाह– **न दृष्टेरित्यादिना** ॥ दृष्टेर्द्रष्टारं श्रुतेश्श्रोतारमित्यादेः द्रष्टव्यस्य द्रष्टारं श्रोतव्यस्य श्रोतारमित्यादिरूपेण दृष्टेरित्यादेर्द्रष्टारमित्यादौ कर्मार्पिकतया वा द्रष्टारं दृष्टेः चक्षुषा न पश्येरित्यादिरूपेण वार्थो ज्ञेयः। विज्ञातिशब्दो बुद्धिपरोऽत्र ज्ञेयः। एवं न पश्येः न शृणुया इत्यादिना चक्षुराद्यगोचरत्व-मेकमितरासाधारणं लक्षणमुक्त्वा चेतनत्वे सत्यार्तिशून्यत्वमप्यपरमसाधारणं तत्तु नान्यत्रेति भावेनाह– **अतोऽन्यदिति** ॥ अतः अकारवाच्याद्धरे-रित्यर्थः। अन्यत् ब्रह्मादिजीवजातं आर्तं दुःखीत्यर्थः। अत इत्यनुवाद-बलादकारवाच्यत्वमपीतरासाधारणं[१] लक्षणमुक्तं भवति। तत इत्याद्युक्तार्थम् ॥ ५-४-२ ॥

**इति उषस्तब्राह्मणम् ॥ ५-४ ॥**

---

१. अत एवोक्तं ऐतरेयभाष्ये–अकारनामा नान्योऽस्ति तमृते विष्णुमव्ययम्। नारायणादिनामानि नृणां नामक्रियास्वपि। विहितान्यकारो नैवायं विहितस्तमृते प्रभुम्। वायुर्ब्रह्माऽपि चाकारदेवते नतु नामिनौ। इति।

## अथ कहोलब्राह्मणम्

### [मुक्तेशयोर्वैलक्षण्यनिरूपणम्]

**अथ हैनं कहोलः कौषीतकेयः पप्रच्छ याज्ञवल्क्येति होवाच यदेव साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरस्तमेव मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरो योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येत्येतं वै तमात्मानं विदित्वा ब्राह्मणः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति या ह्येव पुत्रैषणा या वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवतस्तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एवातोऽन्यदार्तं ततो ह कहोलः कौषीतकेय उपरराम ॥ १ ॥**

इति कहोलब्राह्मणम् ॥ ५-५ ॥

अथोषस्तोपरमानन्तरं कुषीतकेरपत्यं कौषीतकेयः कहोलनामा मुक्तानां भगवतो भेदज्ञानाय प्रागुक्तानुवादपूर्वं मुक्तेशयोर्वैलक्षण्यं पप्रच्छेत्याह– **अथेत्यादिना तमेवेति** ॥ मुक्तवैलक्षण्ययुक्तमेव मे व्याचक्ष्वेत्यर्थः । एष इत्यादि प्राग्वत् । मुक्तपरमात्मनोर्वैलक्षण्यज्ञानाय भगवत्स्वरूपं तावदाह– **योशनायेति** ॥ य आत्मा अशनाया अशितुमिच्छा पातुमिच्छा पिपासा ते अशनायापिपासे । शोकं दुःखं मोहं मिथ्याज्ञानं जरां देहावस्थाविशेषं मृत्युं मरणं अत्येति स्वत एवानाद्यनन्तकालेष्वतिक्रम्य वर्तते । एष त आत्मा सर्वान्तरस्त्वया पृष्ट इत्यर्थः । एवं भगवत्स्वरूपमुक्त्वा मुक्तस्वरूपमाह– **एतमिति** ॥ एतमशनायाद्यतिक्रान्तं प्रागुक्तसाक्षादपरोक्षत्वादिगुणं आत्मानं विदित्वा वै

विदित्वैव साक्षात्कृत्यैव । साक्षात्कृतब्रह्मप्रसादेनैवेति यावत् । ब्राह्मणाः ब्रह्माणनवन्तः । अण गतौ । ब्रह्मप्राप्तिमन्तः मुक्ता इति यावत् । भवन्तीति शेषः । स्वत एवानाद्यनन्तकालं शोकाद्यतीतं ब्रह्म । मुक्तास्तु तत्प्रसादायत्त-शोकाद्यतिक्रमवन्तोऽतस्तयोर्वैलक्षण्यमिति भावः । कथं मुक्ता इत्यत आह– **पुत्रेति** ॥ अन्योन्यसमुच्चये चशब्दः । ईषणा नाम आकाङ्क्षा । ईषणात्रया-दुत्थाय । तत्त्रितयमपि विहाय ब्राह्मणा भवन्तीत्यन्वयः । यद्वा पुत्रेत्यादे-रुत्तरेणाथेत्यादिना वैलक्षण्यान्तरोक्तिपरग्रन्थेनान्वयः । अथ मुक्त्यनन्तरं भिक्षाचर्यं चरन्ति हरेस्सकाशाद्विप्लुडानन्दभिक्षवो भवन्ति ब्राह्मणा इत्यनुषङ्गः । मुक्तावपि भिक्षावन्तश्चेद्दुःखिनः स्युरित्यतोऽतीतेषणत्वान्न दुःखित्वमिति भावेनोक्तम्– **पुत्रेषणायाश्चेत्यादि** ॥ ब्रह्मादेर्मुक्तवर्गस्य विप्लुडानन्दभिक्षुत्वाद्धरेरपरि-मितानन्दत्वात्तयोर्वैलक्षण्यं ध्येयमिति भावः । किमेतास्तिस्रोऽपीषणा अन्योन्यं स्वतन्त्रा इत्यतो नेत्याह– **या ह्येवेति** ॥ वित्तस्य प्रायः पुत्रार्थत्वा द्वित्तेषणा पुत्रेषणायामन्तर्गतेत्यर्थः। पुत्रवित्तयोस्स्वर्गादिलोकहेतुत्वात् पुत्रेषणावित्तेषणे द्वे अपि लोकेषणायामन्तर्भवत इत्यर्थः । तथा चैकैवेषणेति भावः। पुत्रेषणवित्तेषणयोरेव दृष्टविषयतयैक्यविवक्षया पुत्रवित्तेषणे एका लोकेषणा तु अदृष्टविषयत्वादन्येति द्वे एव ईषणे भवत इति द्वित्वपक्षेऽप्युभे इत्यतः पूर्वं ग्राह्यः । ननु लोकेषणाया यागादिनार्थ्यमानत्वात्कथं लोकेषणाया व्युत्थायेत्युक्तिरित्यतस्तस्या अपि त्याज्यत्वमाह– **उभे इति** ॥ दृष्टादृष्ट-विषयतया द्विधाभूते पुत्रेषणवित्तेषणलोकेषणे उभे हि यस्मादीषणे एव भवतोत ईषणात्वाद्दुःखरूपे एवेत्यर्थः। यथा पूर्वमुक्ता भिक्षुका एवं मुच्यमानोऽपि भिक्षुक इति येन स्यादित्यनेन वक्तुं मुक्तिसाधनान्याह– **तस्मादिति** ॥ मोक्षेतरलोकेषणाया अपि दुःखरूपतया ब्रह्मसाक्षात्कारस्यैव परमपुमर्थमुक्तिहेतुत्वात् ब्राह्मणो ब्रह्माणनयोग्यः पाण्डित्यं आगमजन्यं ज्ञानं प्राप्नुयादिति शेषः । पाण्डित्यं निर्विद्य नितरां लब्ध्वा बाल्ये युक्तिसहितज्ञानेन मननेनेति यावत् । तिष्ठासेत् स्थातुमिच्छेत् । मननजज्ञानं सम्पादयेदित्यर्थः । एवं पाण्डित्यं

बाल्यं च निर्विद्य प्राप्य । अथानन्तरं मुनिर्ध्यानी भवति । एवं मौनं ध्यानम् । चशब्दाच्छ्रवणमनने च निर्विद्य मौनं भगवत्साक्षात्कारं च प्राप्नोति । अथेश्वरसाक्षात्कारानन्तरं ब्राह्मणो, मुक्तो भवति । स ब्राह्मणो मुक्तः येन स्यात् येन केनापि भोगेन वर्तेत तेन वर्तनेन । ईदृश एव यथा संसारदशायां भिक्षुकः तथा हरेर्विप्रुडानन्दभिक्षुक एवेत्यर्थः । स्तुतयेऽनुमतिर्वा' (ब्र.सू. ३-४-१४) इत्यधिकरणभाष्यादौ तु 'अथ ब्राह्मण' इति वाक्यस्य जीवन्मुक्तपरत्वमुपेत्य येनेत्यस्याधिकारिभेदेनाविधिबन्धेन विहितसर्वानुष्ठानपरत्वं विहितेषु कतिचिदनुष्ठानपरत्वं, यथेष्टाचारविधिपरत्वमित्येवं रूपार्थत्रय-परत्वरूपकामाचारार्थकत्वमुक्तम् । तथा च सूत्राणि 'परामर्शं जैमिनिरचोदना चापवदति हि' (ब्र.सू.३-४-१८) 'अनुष्ठेयं बादरायणः साम्यश्रुतेः' (ब्र.सू.३-४-१९) 'विधिर्वा धारणवत्' (ब्र.सू.३-४-२०) । मुक्ताद्भगवतो वैलक्ष-ण्यान्तरमाह– **अत इति** ॥ अतो भगवतोऽन्यद्ब्रह्मादिमुक्तजातं कदाचिदार्तं न तथा भगवानित्यर्थः । ततः स्वकृतप्रश्नस्योत्तरितत्वादित्यर्थः ॥ ५-५-१ ॥

इति कहोलब्राह्मणम् ॥ ५-५ ॥

## अथ गार्गिब्राह्मणम्

[मुक्ता अपि तारतम्योपताः]

**अथ हैनं गार्गी वाचक्नवी पप्रच्छ याज्ञवल्क्येति होवाच यदिदꣳ सर्वमप्स्वोतं च प्रोतं चेति कस्मिन्नु खल्वाप ओताश्च प्रोताश्चेति वायौ गार्गीति कस्मिन्नु खलु वायुरोतश्च प्रोतश्चेत्यन्तरिक्षलोकेषु गार्गीति कस्मिन्नु खल्वन्तरिक्षलोका ओताश्च प्रोताश्चेति गन्धर्वलोकेषु गार्गीति कस्मिन्नु खलु गन्धर्वलोका ओताश्च प्रोताश्चेत्यादित्यलोकेषु गार्गीति कस्मिन्नु खल्वादित्यलोका ओताश्च प्रोताश्चेति चन्द्रलोकेषु**

**गार्गीति कस्मिन्नु खलु चन्द्रलोका ओताश्च प्रोताश्चेति नक्षत्रलोकेषु गार्गीति कस्मिन्नु खलु नक्षत्रलोका ओताश्च प्रोताश्चेति देवलोकेषु गार्गीति कस्मिन्नु खलु देवलोका ओताश्च प्रोताश्चेतीन्द्रलोकेषु गार्गीति कस्मिन्नु खल्विन्द्रलोका ओताश्च प्रोताश्चेति प्रजापतिलोकेषु गार्गीति कस्मिन्नु खलु प्रजापतिलोका ओताश्च प्रोताश्चेति ब्रह्मलोकेषु गार्गीति कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति स होवाच गार्गि माऽतिप्राक्षीर्मा ते मूर्धा व्यपतदनतिप्रश्न्यां वै देवतामतिपृच्छसि गार्गि माऽतिप्राक्षीरिति ततो ह गार्गी वाचक्नव्युपरराम ॥ १ ॥**

**इति गार्गिब्राह्मणम् ॥ ५-६ ॥**

पूर्वत्र मुक्तेशयोर्भेदज्ञापनायानेकवैलक्षण्यमुक्त म् । अत्र तु मुक्तानां तारतम्यमुच्यते। अथ कहोलप्रश्नानन्तरं वचक्नोरपत्यं वाचक्नवी गार्गी नामतः याज्ञवल्क्येति सम्बोध्योवाच । तदाह– **यदिति** ॥ यदिदं मुक्तमनुष्योत्तमजातं अप्सु आपिबन्त्यखिलान् भोगानित्यप्शब्दवाच्येषु मुक्तचक्रवर्तिषु ओतं आश्रितं नैतदौपचारिकमित्याह– **प्रोतमिति** ॥ आपः मुक्तश्चक्रवर्तिनः कस्मिन्नोताश्च प्रोताश्चेति पप्रच्छेत्यनुषङ्गः । प्रश्नस्योत्तरमाह– **वायाविति** ॥ प्रधानवायुपुत्रे चक्रनामके मुक्ते ओताश्च प्रोताश्चेत्युवाचेत्यनुषङ्गः । एवमग्रेऽपि । हे गार्गीति सम्बोधनम् ॥ **कस्मिन्नु खलु वायुरिति** ॥ मुक्तचक्रनामा वायुसुतः गन्धर्वलोकेषु गन्धर्वाख्यस्य प्रधानवायुसुतस्य लोकेषु । लोकशब्दोऽत्र संसाराल्लुप्तानां कानि सुखानीति व्युत्पत्त्या स्वरूपभूतानुभूयमानानन्दपरः । लोकेषु सुखमिति मुक्तगन्धर्वनामकवायुसुतसुखाधीनं मुक्तचक्रनामकस्वरूपसुखमिति यावत् । एवमग्रेऽपि । गन्धर्वलोका गन्धर्वाख्यमरुत्स्वरूप-

सुखानुभवाः । अन्तरिक्षलोकेषु अन्तरिक्षाख्यवायुसुतस्य मरुतो मुक्तस्य सुखेषु ओता इत्यर्थः । आदित्यलोकेषु मुक्तसूर्यानन्देषु । चन्द्रलोकेषु चन्द्रशब्दवाच्यमुक्तानिरुद्धानन्देषु । नक्षत्रलोकेषु नक्षत्राख्यमुक्तेन्द्रसुखेषु । देवलोकेषु रुद्रानन्देषु । इन्द्रलोकेषु मुक्तसरस्वत्यानन्देषु । प्रजापतिलोकेषु मुक्तब्रह्मानन्देषु । ब्रह्मलोकेषु परब्रह्मानन्देषु । [१]परब्रह्मानन्दस्याप्याश्रयप्रश्ने प्रत्युत्तरमाह– **मातीति** ।। अति अतिक्रम्य मा प्राक्षीः । प्रश्नं मा कार्षीः । ते मूर्धा शिरः मा व्यपतत् । पतितं न भवेत् । कुतः यतस्त्वं अनतिप्रश्न्यां आश्रयप्रश्नानर्हां देवतामति अतिक्रम्य पृच्छसि तदाश्रयप्रश्नस्यानर्थहेतुत्वान्नैवं प्रश्नं कुर्विति ।।

इति गार्गिब्राह्मणम् ।। ५-६ ।।

## अथ अन्तर्यामिब्राह्मणम्

[हरिस्सर्वनियन्ता]

**अथ हैनमुद्दालक आरुणिः पप्रच्छ याज्ञवल्क्येति होवाच मद्रेष्ववसाम पतञ्जलस्य काप्यस्य गृहेषु यज्ञमधीयानास्तस्यासीद्भार्या गन्धर्वगृहीता तमपृच्छाम कोऽसीति सोऽब्रवीत्कबन्ध आथर्वण इति सोऽब्रवीत्पतञ्जलं काप्यं याज्ञिकाꣳश्च वेत्थ नु त्वं काप्य तत्सूत्रं येनायं च लोकः परश्च लोकः सर्वाणि च भूतानि सन्दृब्धानि भवन्तीति सोऽब्रवीत्पतञ्जलः काप्यो नाहं तद्भगवन् वेदेति सोऽब्रवीत्पतञ्जलं काप्यं याज्ञिकाꣳश्च वेत्थ नु त्वं काप्य तमन्तर्यामिणं य इमं च लोकं परं च लोकꣳ सर्वाणि च भूतानि योऽन्तरो यमयतीति**

---

१. 'पर' इति नास्ति - ख. ।

**सोऽब्रवीत्पतञ्चलः काप्यो नाहं तं भगवन् वेदेति सोऽब्रवीत्पतञ्चलं काप्यं याज्ञिकाꣳश्च यो वै तत्काप्य सूत्रं विद्यात्तं चान्तर्यामिणमिति स ब्रह्मवित्स लोकवित्स देववित्स भूतवित्स आत्मवित्स सर्वविदिति तेभ्योऽब्रवीत्तदहं वेद तच्चेत्त्वं याज्ञवल्क्य सूत्रमविद्वांस्तं चान्तर्यामिणं ब्रह्मगवीरुदजसे मूर्धा ते विपतिष्यतीति वेद वा अहं गौतम तत्सूत्रं तं चान्तर्यामिणमिति यो वा इदं कश्चिद्ब्रूयाद्वेद वेदेति यथा वेत्थ तथा ब्रूहीति ॥ १ ॥**

पूर्वत्र ब्रह्मलोकेषु गार्गीति मुक्तसर्वाश्रयत्वेनोक्तस्य हरेः । 'एष त आत्मा सर्वान्तर' इति नियन्तृत्वेनोक्तस्य इह पुनस्सर्वनियन्तृत्वमुच्यते । अथेत्युक्तार्थम् । अरुणस्यापत्यं आरुणिरुद्दालको नामतः । वक्ष्यमाणप्रमेये श्रद्धाजननाय आख्यायिकामाह– **मद्रेष्वित्यादिना** ॥ काप्यस्य कपिगोत्रोत्पन्नस्य नामतः पतञ्चलस्य गृहेषु यज्ञं यज्ञविद्यामधीयानास्ते प्रसिद्धा वयम् । मद्रेषु मद्रदेशेषु वसाम तत्र स्थिता अभूम । तस्य पतञ्चलस्य भार्या गन्धर्वगृहीता गन्धर्वाविष्टा आसीत् । कोऽसीति तमपृच्छाम । कबन्धनामकोऽथर्वणः पुत्र इति सोऽब्रवीत् । याज्ञिकाश्च यज्ञमधीयानानस्मांश्च कबन्धोऽब्रवीत् पप्रच्छेत्यर्थः । तदाह– वेत्थेति । हे काप्य येनायं पृथिव्यादिलोकः परोऽन्तरिक्षादिलोकः । सर्वाणि भूतानि च । सन्दृब्धानि स्तम्भितानि भवन्ति तत्सूत्रं स्यूतमस्मिन् जगदिति व्युत्पत्त्या सूत्रनामकं त्वं वेत्थ नु जानासि किम्? इत्यब्रवीदित्यन्वयः । पुनः गन्धर्वः पप्रच्छेत्याह– **सोऽब्रवीत् पतञ्चलमित्यादि** ॥ अत्र गन्धर्ववाक्ये योऽन्तर इत्यत्र द्वितीयः यशब्दः 'पूर्णत्वद् य इतीर्यत' इत्युक्तेः विष्णुवाची[1] । तथाच यो यः विष्णुः इममादिलोकं भूतानि चान्तरोऽन्तस्थस्सन् यमयति तमन्तर्यामिणं

१. अकयप्रविसंभूमसखहा विष्णुवाचकाः । एकाक्षरा अ इत्येष निर्दोषत्वाज्जनार्दनः । आनन्दत्वात्क इत्युक्तः पूर्णत्वाद्य इतीर्यते ॥ इति भाष्योदाहृतशब्दनिर्णयोक्तेः इत्यर्थः ।

वेत्थ नु इत्यब्रवीदिति योजना ॥ **तमिति** ॥ अन्तर्यामिणमित्यर्थः । एवं सूत्रान्तर्यामिणौ न जानामीति काप्येनोक्ते तज्ज्ञानमावश्यकमिति भावेन तौ जानतः फलमाह गन्धर्वः– **सोऽब्रवीदित्यादिना** ॥ हे काप्येति सम्बोधनम् । इति विद्यादितीति पदस्यान्वयः। भूम्यादिलोकादिधारकत्वसर्वलोकाद्यन्त-र्नियन्तृत्वरूपस्वविज्ञातप्रकारेण जानीयादित्यर्थः । तं चान्तर्यामिणमित्यत्रापि इति विद्यादित्यन्वेति । ब्रह्मवित् पूर्णवित् लोकानां कर्तृवेदनाल्लोकवित् । देवानां देवस्य वेदनाद्देववित् । वेदार्थवेदनाद् वेदवित् भूतनियन्तृवेदनाद्भूतवित् आत्मवेदनाद्व्याप्तज्ञानादात्मवित् सर्वसारस्य वेदनात् सर्ववित् इति शब्दानन्तरमुक्त्वेति शेषः । इत्येवं सूत्रान्तर्यामिणोर्ज्ञानफलमुक्त्वा तेभ्यः काप्यप्रभृतिभ्योऽस्मभ्यं सूत्रान्तर्यामिस्वरूपमब्रवीत् । तत् सूत्रान्तर्यामिणोस्स्वरूपं अहं उद्दालकनामकोऽहं वेद जानामीति । तच्च सूत्रं तं चान्तर्यामिणं अविद्वान-जानंश्चेत् त्वं ब्रह्मगवीः ब्राह्मणानां गाः उदजसे आहरसि तर्हि ते मूर्धा विपतिष्यतीति उद्दालक उवाचेत्यन्वयः। एवमुद्दालकेनोक्तो याज्ञवल्क्य उत्तरमाह– **वेद वा अहमिति** ॥ गौतमेत्युद्दालकस्य सम्बोधनम् । याज्ञवल्क्य उवाचेति योज्यम् । उद्दालकः पुनस्तं प्रत्याह– **इदमिति** ॥ यो वा कश्चित् यः कोऽपि वेदेति जानामीति ब्रूयात् । नतु वक्ति । यथा येन प्रकारेण वेत्थ तथा ब्रूहीत्युवाचोद्दालक इत्यर्थः ॥ ५-७-१ ॥

[सूत्रनामको वायुः सर्वलोकाधारः]

**स होवाच वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि सन्दृब्धानि भवन्ति तस्माद्वै गौतम पुरुषं प्रेतमाहुर्व्यस्रꣳसिषतास्याङ्गानीति वायुना हि[1] गौतम सूत्रेण सन्दृब्धानि भवन्तीत्येवमेवैत-**

---

१. 'वै' इत्यपि पाठः दृश्यते ।

**याज्ञवल्क्यान्तर्यामिणं ब्रूहीति ॥ २ ॥**

एवमुद्दालकेनोक्तो याज्ञवल्क्य उत्तरमुक्तवानित्याह वेदपुरुषः– **स होवाचेति** ॥ सः याज्ञवल्क्यः । हे गौतम त्वया पृष्टं तत् सूत्रं वायुर्वै मुख्यवायुरेव । प्राक् गन्धर्वोक्तं सूत्रलक्षणं वायावस्तीत्याह– **वायुना वा इति** ॥ सर्वलोकादिस्तम्भकत्वं वायोरनुभवारूढं करोति– **तस्मादिति** ॥ वायोः सर्वलोकाधारत्वादेव वाय्वपगमे प्रेतं पुरुषं प्रत्याहुः । किमिति । अस्याङ्गानि करचरणाद्यवयवाः व्यस्रंसिषत अधोपतन् इत्याहुरित्यन्वयः । एवं वायोः सर्वलोकस्तम्भकत्वमनुभवारूढं कृत्वा साध्यमाह– **वायुना हीति** ॥ सन्दब्धानी-त्यनन्तरं अयं च लोक इत्याद्यनुषज्यते । इत्युवाचेतीति पदस्य पूर्वेणान्वयः । उद्दालको वक्ति– **एवमिति** ॥ हे याज्ञवल्क्य एतत् वायुर्वै सूत्रमिति त्वयोक्त-मेवमेव । नात्र विमतिरस्ति । अन्तर्यामिणं ब्रूहीत्युवाचोद्दालक इत्यर्थः ॥ ५-७-२ ॥

[विष्णुरेव सर्वाविदितः सर्वान्तर्यामी च]

**यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ ३ ॥**

आह याज्ञवल्क्यः– **यः पृथिव्यामित्यादिना** ॥ पृथुं नारायणं समादाय वाति गच्छतीति व्युत्पत्त्या पृथिवीशब्दोऽत्र गरुडपरः [१]तद्भार्यापरश्च । अत्र भाष्येऽनुक्तानामपि शाकल्यब्राह्मणे वक्ष्यमाणपृथिव्यादिदेवतानामत्रापि ग्रहणस्य तत्रैव भाष्ये वक्ष्यमाणत्वात् । यः पृथिव्यां पृथिवीमानिनि गरुडे तिष्ठन् तत्र प्रविष्टतया तत्स्थः पृथिव्या अन्तरः । अत्र व्यासतीर्थीयटीकारीत्या

१. प्रथितं हरिमादाय यातीति पृथिवः स्मृतः । तद्भार्या पृथिवीनामा..... ॥ इति शाकल्यब्राह्मणे वक्ष्यत्याचार्यः ।

'अतिप्रियत्वाच्च हरेरन्तरत्वमुदाहृतम्' इति स्मृतेरेतद्विषयत्वात् पृथिव्या इत्यादि पञ्चम्याः षष्ठ्यर्थत्वेन पृथिव्याः गरुडस्यान्तरोऽतिप्रिय इत्यर्थ इति [१]भवति। सूत्रभाष्यटीकाचन्द्रिकयोस्तु 'बाह्यापेक्षां विना' इति श्लोको [२]द्वितीयान्तर-पदस्यैवार्थद्वयपर इत्युपेत्य पृथिव्या इत्यादिपञ्चमीस्वारस्यानुसारेणान्तरो विविक्त इत्यर्थ उक्तः। एतन्मते पृथिव्या अन्तरोऽद्भ्योन्तर इत्यादिपञ्चम्यन्तपदोपेत-वाक्यजातस्यार्थोऽत्र भाष्ये नोक्त इति ज्ञेयम्। यं पृथिवी गरुडो न वेद साकल्येन। यस्य पृथिवी शरीरमिव शरीरं यथा जीवतन्त्रं तथा पृथिव्यपि यत्तन्त्रतया यस्य शरीरमिति तमन्तःकृत्वा तिष्ठतीति वा शरीरम्। यः पृथिवीमन्तरो बाह्यापेक्षां विना [३]रममाणश्च अतिप्रियस्सन् यमयति नियमयति तदीयधर्माणां स्वरूपसत्तायाश्च स्वामीति यावत्। एषः यच्छब्दपञ्चकेन निर्दिष्टस्ते तव उद्दालकस्यात्मा स्वामी अमृतो नित्योऽन्तर्यामी अन्तस्स्वतन्त्रस्सन् नियमनकर्तेत्यर्थः। एष त इत्युक्तजीवेशभेदज्ञापनाय आत्मपदस्य स्वरूपार्थत्वे [४]अत इति षष्ठ्या औपचारिकत्वापातात्। एवमग्रेऽपि अधिदैवाधि-भूताध्यात्मरूपप्रकरणत्रयगतविंशतिवाक्यान्यपि योजनीयानि ॥ ५-७-३ ॥

**योऽप्सु तिष्ठन्नद्भ्योऽन्तरो यमापो न विदुर्यस्यापः शरीरं योऽपो-ऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ ४ ॥**
**योऽग्नौ तिष्ठन्नग्नेरन्तरो यमग्निर्न वेद यस्याग्निः शरीरं योऽग्निमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ ५ ॥**

अप्सु अबभिमानिनि वरुणे ॥ ४ ॥ अग्नौ प्रसिद्धभूताग्निमानिनि ॥ ५ ॥

---

१. बाह्यापेक्षां विना यस्ते रमते सोऽन्तरः स्मृतः। इति ब्रह्मतर्कश्लोकः। पृथिव्यन्त-रिक्षाद्युपनिषच्छब्दानां रूढोऽर्थोऽत्र न स्वीकृतः। ''पृथुं नारायणं वाति समादायैव पक्षिराट्। अतः स पृथिवीत्युक्तस्त्वन्तरिक्षं हरः स्मृतः ॥ स्वान्तर्गतं यतः सर्वं इच्छया क्षपयेदसौ। द्यौर्नाम देवी विद्युत्स्यात् साक्षादेव सरस्वती ॥'' इत्यादिमहामीमांसावाक्यादस्यैवार्थस्य प्रामाणिकत्वं ज्ञेयम्।
२. '**द्वितीयान्तपद**'- ख.। ३. '**रममाणो अतिप्रियश्च**' - ख.। ४.'**अत**' इति क.।

योऽन्तरिक्षे तिष्ठन्नन्तरिक्षादन्तरो यमन्तरिक्षं न वेद यस्या-
न्तरिक्षꣳ शरीरं योऽन्तरिक्षमन्तरो यमयत्येष त आत्माऽन्त-
र्याम्यमृतः ॥ ६ ॥ यो वायौ तिष्ठन् वायोरन्तरो यं वायुर्न
वेद यस्य वायुः शरीरं यो वायुमन्तरो यमयत्येष त
आत्माऽन्तर्याम्यमृतः ॥ ७ ॥ यो दिवि तिष्ठन् दिवोऽन्तरो
यं द्यौर्न वेद यस्य द्यौः शरीरं यो दिवमन्तरो यमयत्येष
त आत्माऽन्र्याम्यमृतः ॥ ८ ॥

अन्तरिक्षे हरौ । स्वान्तर्गतं सर्वं इच्छया क्षपयेदिति व्युत्पत्त्या हरोऽत्रान्तरिक्षनामा । सर्वस्यान्तरीक्षणहेतुनान्तरिक्षनाम्नी वायुभार्याप्यन्तरिक्षपदेन ग्राह्या ॥ ५-७-६ ॥ वायौ मुख्यवायौ ॥ ५-७-७ ॥ दिवि सरस्वत्यां उमा च ग्राह्या ॥ ५-७-८ ॥

य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद
यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त
आत्माऽन्तर्याम्यमृतः ॥ ९ ॥ यो दिक्षु तिष्ठन् दिग्भ्योऽन्तरो
यं दिशो न विदुर्यस्य दिशः शरीरं यो दिशोऽन्तरो यमयत्येष
त आत्माऽन्तर्याम्यमृतः ॥ १० ॥ यश्चन्द्रतारके तिष्ठꣳ-
श्चन्द्रतारकादन्तरो यं चन्द्रतारकं न वेद यस्य चन्द्रतारकꣳशरीरं
यश्चन्द्रतारकमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः
॥ ११ ॥

आदित्ये सूर्ये ॥ ५-७-९ ॥ दिक्षु दिगभिमानिषु ॥ ५-७-१० ॥ चन्द्रतारक इति द्वन्द्वैकवद्भावः । क्रमात्तदभिमानिकामेन्द्रयोरित्यर्थः ॥ ५-७-११ ॥

**य आकाशे तिष्ठन्नाकाशादन्तरो यमाकाशो न वेद यस्याकाशः शरीरं य आकाशमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १२ ॥ यस्तमसि तिष्ठꣳस्तमसोऽन्तरो यं तमो न वेद यस्य तमः शरीरꣳ यस्तमसोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १३ ॥**

आकाशे आकाशाभिमानिनि विघ्नेशे ॥ ॥ ५-७-१२ ॥ तामयति ग्लापयतीति व्युत्पत्त्या तमसि दुर्गायाम् ॥ ॥ ५-७-१३ ॥

**यस्तेजसि तिष्ठꣳस्तेजसोऽन्तरो यं तेजो न वेद यस्य तेजः शरीरं यस्तेजोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः इत्यधिदैवतम् ॥ १४ ॥**

तेजसि चित्प्रकृतौ । इत्यधिदैवतम् । स्वस्वलोकस्थदेवताजातं तदन्तर्यामिनिरूपणं कृतम् ॥ ५-७-१४ ॥

**अथाधिभूतम् । यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरो यꣳ सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत इत्यधिभूतम् ॥ १५ ॥**

अथानन्तरं भवनशब्दितोत्पत्त्यधिकारो स्थितत्वादधिकारे स्थितत्वाधिभूतं सर्वजीवतदन्तर्यामिनिरूपणं क्रियत इत्यर्थः । सर्वेषु भूतेषु मनुष्यादिजीवेषु इत्यधिभूतम् । व्याख्यातप्रायमेतत् ॥ ५-७-१५ ॥

**अथाध्यात्मम् ॥ यः प्राणे तिष्ठन् प्राणादन्तरो यं प्राणो न वेद यस्य प्राणः शरीरं यः प्राणमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १६ ॥**

अथानन्तरमात्मानं जीवशरीरमधिकृत्य वर्तमान इन्द्रियाभिमानिजातं तदन्तर्यामी निरूप्यत इत्यर्थः । प्राणे प्राणमानिनि ॥ ५-७-१६ ॥

**यो वाचि तिष्ठन् वाचोऽन्तरो यं वाङ् न वेद यस्य वाक् शरीरं यो वाचमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १७ ॥ यश्चक्षुषि तिष्ठꣳश्चक्षुषोऽन्तरो यं चक्षुर्न वेद यस्य चक्षुः शरीरं यश्चक्षुरन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १८ ॥ यो मनसि तिष्ठन् मनसोऽन्तरो यं मनो न वेद यस्य मनः शरीरं यो मनोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १९ ॥ यस्त्वचि तिष्ठꣳस्त्वचोऽन्तरो यं त्वङ् न वेद यस्य त्वक् शरीरं यस्त्वचमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ २० ॥**

एवं वाचि चक्षुषीत्यादावपि तदभिमानिनो ग्राह्याः ॥ ५-७-१७–२० ॥

**यो विज्ञाने तिष्ठन्विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानꣳ शरीरं यो विज्ञानमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ २२ ॥**

विज्ञाने सर्वजीवाभिमानिनि चतुर्मुखे ॥ ॥ ५-७-२२ ॥

**यो रेतसि तिष्ठन्रेतसोऽन्तरो यꣳ रेतो न वेद यस्य रेतः शरीरं यो रेतोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतोऽदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञातैष त आत्माऽन्तर्याम्यमृतोऽतो-**

**य आकाशे तिष्ठन्नाकाशादन्तरो यमाकाशो न वेद यस्याकाशः शरीरं य आकाशमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १२ ॥ यस्तमसि तिष्ठꣳस्तमसोऽन्तरो यं तमो न वेद यस्य तमः शरीरꣳ यस्तमसोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १३ ॥**

आकाशे आकाशाभिमानिनि विघ्नेशे ॥ ॥ ५-७-१२ ॥ तामयति ग्लापयतीति व्युत्पत्त्या तमसि दुर्गायाम् ॥ ॥ ५-७-१३ ॥

**यस्तेजसि तिष्ठꣳस्तेजसोऽन्तरो यं तेजो न वेद यस्य तेजः शरीरं यस्तेजोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः इत्यधिदैवतम् ॥ १४ ॥**

तेजसि चित्प्रकृतौ । इत्यधिदैवतम् । स्वस्वलोकस्थदेवताजातं तदन्तर्यामिनिरूपणं कृतम् ॥ ५-७-१४ ॥

**अथाधिभूतम् । यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरो यꣳ सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत इत्यधिभूतम् ॥ १५ ॥**

अथानन्तरं भवनशब्दितोत्पत्त्यधिकारो स्थितत्वादधिकारे स्थितत्वाधिभूतं सर्वजीवतदन्तर्यामिनिरूपणं क्रियत इत्यर्थः । सर्वेषु भूतेषु मनुष्यादिजीवेषु इत्यधिभूतम् । व्याख्यातप्रायमेतत् ॥ ५-७-१५ ॥

**अथाध्यात्मम् ॥ यः प्राणे तिष्ठन् प्राणादन्तरो यं प्राणो न वेद यस्य प्राणः शरीरं यः प्राणमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १६ ॥**

अथानन्तरमात्मानं जीवशरीरमधिकृत्य वर्तमान इन्द्रियाभिमानिजातं तदन्तर्यामी निरूप्यत इत्यर्थः । प्राणे प्राणमानिनि ॥ ५-७-१६ ॥

**यो वाचि तिष्ठन् वाचोऽन्तरो यं वाङ् न वेद यस्य वाक् शरीरं यो वाचमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १७ ॥ यश्चक्षुषि तिष्ठꣳश्चक्षुषोऽन्तरो यं चक्षुर्न वेद यस्य चक्षुः शरीरं यश्चक्षुरन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १८ ॥ यो मनसि तिष्ठन् मनसोऽन्तरो यं मनो न वेद यस्य मनः शरीरं यो मनोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १९ ॥ यस्त्वचि तिष्ठꣳस्त्वचोऽन्तरो यं त्वङ् न वेद यस्य त्वक् शरीरं यस्त्वचमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ २० ॥**

एवं वाचि चक्षुषीत्यादावपि तदभिमानिनो ग्राह्याः ॥ ५-७-१७–२० ॥

**यो विज्ञाने तिष्ठन्विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानꣳ शरीरं यो विज्ञानमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ २२ ॥**

विज्ञाने सर्वजीवाभिमानिनि चतुर्मुखे ॥ ॥ ५-७-२२ ॥

**यो रेतसि तिष्ठन्रेतसोऽन्तरो यꣳ रेतो न वेद यस्य रेतः शरीरं यो रेतोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतोऽदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञातैष त आत्माऽन्तर्याम्यमृतोऽतो-**

**ऽन्यदार्तं ततो होद्दालक आरुणिरुपरराम ॥ २३ ॥**

**इत्यन्तर्यामिब्राह्मणम् ॥ ५-७ ॥**

रेतसि रेतोमानिनि । अत्र चेतनमात्रनियमनोक्तावप्यचेतननियमस्य कैमुत्य-सिद्धत्वाज्जडान्तर्यामी न पृथगुक्तः । अन्तर्यामिणो महिमान्तरमाह– **अदृष्ट इति** ॥ अदृष्टः चक्षुरगोचरः । द्रष्टा सर्वं साक्षात्कर्ता । अश्रुतः साकल्येन श्रवणागोचरः । श्रोता सर्वस्य स्वयंश्रोता । अमतः साकल्येन मननागोचरः । मन्ता मनोग्राहकः । अविज्ञातः विज्ञानलक्षणबुद्ध्यगोचरः । विज्ञाता विज्ञानलक्षणबुद्धिग्राहकः । अतोऽन्तर्यामिणोऽन्यस्स्वातन्त्र्येण द्रष्टा नास्ति । एवं विज्ञातेत्यन्तं योजना ध्येया । कुतोऽन्यस्य न स्वातन्त्र्यमित्यतो दुःखित्वा-दिति भावेनाह– **अतोऽन्यदार्तमिति** ॥ अन्तर्यामी त्वनार्त इति शेषः । अयं च ब्राह्मणः भगवद्विषयतया निर्णीतः सूत्रकृता 'अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्' (ब्र.सू.१-२-२८) इत्यादौ ॥ ५-७-२३ ॥

**इति अन्तर्यामिब्राह्मणम् ॥ ५-७ ॥**

## अथ अक्षरब्राह्मणम्

**[चित्प्रकृतिः सर्वाधारा विष्ण्वाश्रिता च]**

**अथ ह वाचक्नव्युवाच ब्राह्मणा भगवन्तो हन्ताहमिमं द्वौ प्रश्नौ प्रक्ष्यामि तौ चेन्मे वक्ष्यति न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति पृच्छ गार्गीति ॥ १ ॥**

पूर्वब्राह्मणे वाचक्नवी जीवानामुत्तरोत्तराश्रितत्वं अन्ततः सर्वेषां भगवदाश्रितत्वं च पृष्टवती दत्तोत्तरा अधुना चित्प्रकृतेस्सर्वाधारत्वं भगवदाश्रितत्वं प्रागपृष्टं प्रष्टुं ब्राह्मणानुज्ञार्थं तान् प्रति किञ्चिद्वाक्यमुक्तवतीत्याह वेदपुरुषः– **अथ हेति** ॥ उद्दालकोपरत्यनन्तरम् । वाचक्नवी वचक्नोरपत्यं गार्गी । ब्राह्मणा-नुवाच । किमिति? ह ब्राह्मणा भगवन्तः पूज्याः अहमिमं याज्ञवल्क्यं पुनर्द्वौ

प्रश्नौ प्रष्टव्यार्थौ प्रक्ष्यामि। हन्त यदि भवतामनुमतिर्भवेदित्यर्थः। तौ चेत्प्रष्टव्यार्थौ मे मह्यं वक्ष्यति याज्ञवल्क्यः तर्हि जातु कदाचित् युष्माकं मध्ये कश्चित् कोऽपि इमं याज्ञवल्क्यं ब्रह्मोद्यं ब्रह्मवादिनं सन्तं न वै नैव जेता भवेदिति ब्राह्मणानुवाचेति पूर्वेणान्वयः । विजिगीषुकथात्वात्तस्यां च सभ्यानुज्ञया प्रष्टव्यमिति तदनुज्ञानार्थं तेषामुपकाराय तान् प्रत्येवमुक्तवतीति ज्ञेयम् ॥ **पृच्छ गार्गीति** ॥ ब्राह्मणा अनुजज्ञिर इति योज्यम् ॥ १ ॥

**सा होवाचाहं वै त्वा याज्ञवल्क्य यथा काश्यो वा वैदेहो वोग्रपुत्र उज्ज्यं धनुरधिज्यं कृत्वा द्वौ बाणवन्तौ सपत्नातिव्याधिनौ हस्ते कृत्वोपोत्तिष्ठेदेवमेवाहं त्वा द्वाभ्यां प्रश्नाभ्यामुपोदस्थां तौ मे ब्रूहीति पृच्छ गार्गीति ॥ २ ॥**

सैवं ब्राह्मणैरनुज्ञाता गार्गी याज्ञवल्क्यमुवाच । अहं वै त्वा द्वौ प्रश्नौ प्रक्ष्यामीत्यनुषज्यते। प्रष्टव्यार्थयोरनुत्तरत्वेन महत्त्वं तावद्दृष्टान्तपूर्वकमाह– **यथेति** ॥ यथा उग्रपुत्रः क्रूरपुत्रः काश्यः काश्यां भवो वा वैदेहो विदेहराजा वा। उज्ज्यं उद्गतज्यं धनुरधिज्यं अधिगतज्यं कृत्वा। बाणवन्तौ अयोमयाग्रवन्तौ। सपत्नातिव्याधिनौ शत्रुवेधकरौ द्वौ शराविति शेषः। हस्ते गृहीत्वोपोत्तिष्ठेदेवमेवाहं त्वां द्वाभ्यां प्रश्नाभ्यां उपोदस्थां लुङ् उपतिष्ठेयं त्वदाभिमुख्येन तिष्ठेयम् । तौ मे ब्रूहीत्युवाचेत्यर्थः । आह याज्ञवल्क्यः पृच्छ गार्गीति ॥ ५-८-२ ॥

**सा होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिꣳस्तदोतं च प्रोतं चेति ॥ ३ ॥**

सैवमुक्त्वा वाचक्नवी याज्ञवल्क्येति सम्बोध्योवाच। दिवः द्युशब्दवाच्यात्स्वर्गलोकात् ऊर्ध्वं उपरि यदस्ति। पृथिव्या अवागधस्ताद्यदस्ति। द्यावापृथिवी द्यावाभूम्योः

अन्तरा मध्ये यदस्ति । इमे द्यावापृथिवी च भूतं अतीतं च भवच्च वर्तमानं च भविष्यदागामि चेति यदाचक्षते ज्ञानिनः तत्सर्वं कस्मिन् ओतं च प्रोतं चेत्युवाचेत्यर्थः ॥ ५-८-३ ॥

**स होवाच यदूर्ध्वं गार्गि दिवो यदर्वाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भविष्यच्चेत्याचक्षत आकाशे तदोतं च प्रोतं चेति ॥ ४ ॥**

स एवं पृष्टो याज्ञवल्क्य उवाच । किमुवाचेत्यत उक्तानुवादपूर्वमुत्तरमाहेत्याहोपनिषत्– **यदूर्ध्वमित्यादिना** ॥ यदाचक्षते तत्र आकाशे आ समन्तात्काशमानत्वहेतुना आकाशशब्दिते श्रीतत्त्वे ओतं च प्रोतं चेत्युवाचेत्यन्वयः ॥ ५-८-४ ॥

**सा होवाच नमस्तेऽस्तु याज्ञवल्क्य यो म एतं व्यवोचोऽथा परस्मै धारयस्वेति पृच्छ गार्गीति ॥ ५ ॥**

सा लब्धप्रथमप्रश्नपरिहारा । उवाच ह किल किमिति । हे यज्ञवल्क्य यस्त्वं मे मदीयं एतं दुरुत्तरं प्रश्नार्थं व्यवोचः विविच्योक्तवानसि । अतस्ते तुभ्यं नमोऽस्तु । अथेत्यर्थान्तरे । अपरस्मै अन्यस्मै प्रश्नाय । धारयस्व मनो धत्स्वेत्युवाचेत्यर्थः । पृच्छ गार्गीत्याह याज्ञवल्क्यः ॥ ५-८-५ ॥

**सा होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिँस्तदोतं च प्रोतं चेति ॥ ६ ॥**

आकाशशब्दितप्रकृतेस्सर्वाधारत्वमनुपचरितमिति वाचयितुं पूर्वपृष्टमेव पुनः पृच्छति– **साहेति** ॥ ५-८-६ ॥

**स होवाच यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या यदन्तरा**

**द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाश एव तदोतं च प्रोतं चेति कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति ॥ ७ ॥**

विदिताभिप्रायो याज्ञवल्क्यः यदूर्ध्वमित्यादिना उक्तानुवादपूर्वमनुपचरितमेव सर्वाधारत्वं प्रकृतेरित्याह– **आकाश एवेत्येवकारेण** । स्वाभिप्रेतं लब्ध्वा वाचक्नवी द्वितीयं पृच्छति– **कस्मिन्न्विति** ॥ ५-८-७ ॥

**स होवाचैतद् वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्र[१]मगोत्र[२]मजरमभयममृतमरजोऽशब्दमविवृतमसंवृतमपूर्वमनपरमनन्तरमबाह्यं न तदश्नाति किञ्चन न तदश्नाति कश्चन ॥ ८ ॥**

एवं पृष्टस्स याज्ञवल्क्यस्सर्वाधारप्रकृत्याधारत्वं हरेर्महिमोक्तिपूर्वमाह– **एतद्वा इत्यादिना खण्डचतुष्टयेन** ॥ तत् प्रकृत्याश्रयत्वेन वक्ष्यमाणम् । [३]अक्षरं चतुर्विधनाशहीनतया अक्षरपदवाच्यं ब्रह्म एतत् एतल्लक्षणक म् । ब्राह्मणा अभिवदन्ति वै। एतच्छब्दार्थं व्यनक्ति– **अस्थूलमित्यादिना** ॥ प्राकृतस्थूलसूक्ष्मह्रस्वदीर्घवैलक्षण्यादस्थूलमित्याद्युच्यते । सूत्रभाष्यादौ तु अस्थूलादिपदैः स्थौल्यादिविरुद्धाणुत्वादिग्रह इत्यप्युक्तम् । अलोहितमिति लोहिताद्युपलक्षितप्राकृतरूपरहितम् । एवमस्नेहमित्यपि ज्ञेयम् । अच्छायं छायाशब्दिताविद्याहीनम् । यद्वा व्याप्तत्वाच्छायाहीनम् । अतमः आवरणहीनम् । अवाय्व-

---

१. 'अगोत्र'मिति क्वचित् नास्ति । २. अजरमित्यारभ्य अनपरमित्यन्तो भागः क्वचिदुपनिषन्मूलकोशे न पठ्यते । अव्याख्यातश्च व्याख्यातृभिः । ३. चतुर्विधनाशश्च-'अनित्यत्वं देहहानिः दुःखप्राप्तिरपूर्णता । नाशश्चतुर्विधः प्रोक्तः' इत्युक्तो ध्येयः ।

नाकाशमतेजस्कमिति पञ्चभूतास्पृष्टदेहम् । असङ्गं अलेपम् । अरसमित्यादेः प्राकृतरसगन्धादिहीनमित्यर्थः । अतेजस्कं प्राकृतवचोहीनम् । अप्राणं प्राकृत-प्राणापानादिहीनम् । अमुखं मुखोपलक्षितप्राकृतदेहहीनम् । अमात्रं मिति-हीनम् । भिन्नांशशून्यं वा । स्वापेक्षया अन्तरं बाह्यं नेत्यनन्तरं अबाह्यं सर्वापेक्षया स्वयमेवान्तरं बाह्यं चेत्यर्थः । तदक्षरं किञ्चन नाश्नाति उपजीवनार्थं नात्ति अशुभं नात्तीति वा । जीवाद्यं नात्तीति वार्थः । कश्चन कोऽपि तदक्षराख्यं ब्रह्म नाश्नाति नात्ति । स्वातन्त्र्यान्न केनापि अद्यत इति भावः । तदाह सूत्रे 'अन्यभावव्यावृत्तेश्च' (ब्र.सू.१-३-१२) इति ॥ ५-८-८ ॥

[अनायासेन हरिः सर्वप्रवर्तकः]

**एतस्य वा अक्षरस्य गार्गि सूर्यचन्द्रमसौ विधृतौ तिष्ठत एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठत एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्राण्यर्धमासा मासा ऋतवः संवत्सरा इति विधृता-स्तिष्ठन्त्येतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्या यां यां च दिशमन्वेतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्याः प्रशंसन्ति यजमानं देवा दर्वीं पितरोऽन्वायत्ताः ॥ ९ ॥**

प्रकृतिद्वारा सर्वाधारत्वं हरेरनायासेनैवेति भावेनाह याज्ञवल्क्यः– **एतस्य वा इति** ॥ एतस्य प्रागुक्तगुणकस्य । प्रशासने वै प्रशब्दोक्तानन्याधीनासङ्कुचिताज्ञायां आज्ञानिमित्तमेव । सूर्याचन्द्रमसौ सर्वपरिज्ञातृत्वाह्लादकत्वाभ्यां हेतुभ्यां क्रमात्सूर्याचन्द्रपदोक्तौ ब्रह्मरुद्रौ । विधृतौ विशेषेण धृतौ तिष्ठतः । एवमग्रेऽपि । द्यावापृथिव्यौ दीप्यमानत्वपृथुत्वहेतुभ्यां क्रमात् द्यावापृथिवीशब्दिते श्रीभूमी । निमेषादिशब्दास्तदभिमानिपराः । इतिशब्द आद्यर्थः । प्राच्यः प्राक् प्रवहन्त्यः ।

अन्याः काश्चन। श्वेतेभ्यः श्वेतनामकेभ्यः । प्रतीच्यः प्रत्यक् पश्चिमसमुद्रं प्रति प्रवहन्त्यः । अन्याः काश्चन । किं बहुना यां यां दिशमनुस्यन्दन्ते एतस्याक्षरस्य प्रशासन एव स्यन्दन्त इत्यर्थः । ददतो दानं कुर्वतः पुरुषान् । मनुष्याः प्रशंसन्ति स्तुवन्ति । यजमानं यागकर्तारं । देवाः प्रशंसन्तीत्यनुषङ्गः । उच्छिष्टपिण्डावसरे दर्वीं पितरोऽन्वायत्ताः। अनुसृत्य स्थिताः। तदेतत्सर्वं एतस्याक्षरस्य प्रशासन एवेत्यर्थः । तदाह सूत्रे 'सा च प्रशासनात्' (ब्र.सू. १-३-११) इति । एतस्य वा इत्याद्यभ्यास आदरार्थः ॥ ५-८-९ ॥

[अक्षरज्ञानमेव मुक्तिनिदानम्]

**यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिंल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणोऽथ य एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मणः ॥ १० ॥**

एतदक्षरस्य ज्ञानमवश्यसम्पाद्यमिति भावेन तदज्ञानज्ञानयोरनर्थपुमर्थावाह याज्ञवल्क्यः– **यो वा इति** ॥ जुहोति अग्नौ हविः प्रक्षिपति यजते । देवतोद्देशेन हविर्ददाति । तपः कृच्छ्रचान्द्रायणादि । तप्यते [१]तपति तपः करोतीति यावत् । बहूनि वर्षसहस्राणीत्येतज्जुहोतीत्यादिषु त्रिष्वप्यन्वेति। अस्यानात्मविदः । तद्धोमादिकं अन्तवदेव नश्वरफलमेव भवति । प्रैति मृतो भवति । स कृपणः शोच्यः । अथेत्यर्थान्तरे। ब्राह्मणो मुक्तो भवति ॥ ५-८-१० ॥

**तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतꣳ श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञात्रेतस्मिन्नु खल्वक्षरे**

---

१. 'तपति करोति' - क. ।

**गार्ग्याकाश ओतश्च प्रोतश्चेति ॥ ११ ॥**

महिमान्तरमाह– **तद्वा एतदिति** ॥ अन्यैः साकल्येनादृष्टम् । स्वयं च तथा सर्वद्रष्टृ। एवमग्रेऽपि । अमतं मनोऽगोचरम् । स्वयं मन्तृ मनोज्ञातृ। अविज्ञातं बुद्ध्यगोचरम्। विज्ञातृ बुद्धिज्ञातृ । यद्वा अदृष्टमित्यादिना साक्षात्कारश्रवणमननध्यानानां साकल्येनाविषय इत्युच्यते। द्रष्ट्रन्तरादेर्भावादित्यत आह– **नान्यदिति** ॥ अतोऽक्षरादन्यत्स्वातन्त्र्येण द्रष्टृ नास्तीत्यर्थः। एवमग्रेऽपि। यदर्थमियता ग्रन्थेनाक्षरस्य महिमोक्तस्तदिदानीमाह– **एतस्मिन्निति** ॥ तद्वा एतदित्यादिनोक्तमाहात्म्यवत्यक्षरे चतुर्विधनाशहीने विष्णावित्यर्थः । तदाह सूत्रे 'अक्षरमम्बरान्तधृतेः' (ब्र.सू.१-३-१०) इति ॥ ५-८-११ ॥

**सा होवाच ब्राह्मणा भगवन्तस्तदेव बहु मन्यध्वं यदस्मान्नम-स्कारेण मुच्यध्वं न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति ततो ह वाचक्नव्युपरराम ॥ १२ ॥**

इति अक्षरब्राह्मणम् ॥ ५-८ ॥

एवं लब्धप्रश्नद्वयोत्तरा सा वाचक्नवी ब्राह्मणानुवाच । हे ब्राह्मणाः भगवन्तः यूयमस्माद्याज्ञवल्क्यात् । नमस्कारेण मुच्यध्वं मुक्ता भवत । मया यदुच्यते तदेव बहुमन्यध्वम्। कुत इत्यत उक्तम्– **नेति** ॥ युष्माकं मध्ये कश्चिदिमं ब्रह्मोद्यं ब्रह्मिष्ठं याज्ञवल्क्यं जातु कदापि जेता नैवास्त्यत इति योजना ॥ ५-८-१२ ॥

इति अक्षरब्राह्मणम् ॥ ५-८ ॥

## अथ शाकल्यब्राह्मणम्

[देवेषु त्रयस्त्रिंशत्सङ्ख्याकाः श्रेष्ठाः]

**अथ हैनं विदग्धः शाकल्यः पप्रच्छ कति देवा याज्ञवल्क्येति स हैतयैव निविदा प्रतिपेदे यावन्तो वैश्वदेवस्य निविद्युच्यन्ते**

**त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रयस्त्रिꣳशदित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति षडित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रय इत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति द्वावित्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्यध्यर्ध इत्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्येक इत्योमिति होवाच कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति ॥ १ ॥**

अथ वाचक्नवीप्रश्नोत्तरानन्तरं शकलस्यापत्यं शाकल्यो विदग्धनामा एनं याज्ञवल्क्यं देवाः कतीति पप्रच्छ । स याज्ञवल्क्यः । एतया वक्ष्यमाणया निविदा निविच्छब्दितमन्त्रेण । वैश्वदेवस्य शस्त्रस्य निविदि यावन्तो देवा उच्यन्ते तावतो देवान् । प्रतिपेदे ज्ञातवान् । तां निविदं पठति– **त्रयश्चेति** ॥ त्रयश्च त्री च शता त्रयस्त्रिंशाच्छतानि । त्रयश्च त्री च सहस्राणि त्रयस्त्रिंशत्सहस्राणीत्यर्थः । अनेककोटिसङ्ख्याकत्वेऽपि देवानां तेषु त्रयस्त्रिंशत्सहस्रसङ्ख्याका देवाः अधिकास्तेषु च त्रयस्त्रिंशद्देवा अधिका इत्येवमुक्तम् । याज्ञवल्क्योक्तमुत्तरमङ्गीकरोति । ओमित्युवाच ह शाकल्यः । त्रयस्त्रिंशत्सहस्रेत्युक्तदेवेषूत्तमान् पृच्छति शाकल्यः– **कत्येवेति** ॥ उत्तरमाह– **त्रयस्त्रिंशदिति** ॥ एवमग्रेऽपि प्रश्नपरिहारार्थौ ज्ञेयौ । ओमित्यभ्युपगमश्च ज्ञेयः । अधिकतया आ ऋद्धोऽध्यर्धः । संख्येयस्वरूपाणि पृच्छति– **कतम इति** ॥ त्रयस्त्रिंशत्सङ्ख्याकास्त्रयस्त्रिंशत्सहस्रसङ्ख्याकाश्च देवाः । कतमे कीदृशा इति सर्वे समाः किं वा न्यूनाधिकभावमापन्ना इति प्रश्नार्थः ॥ ५-९-१ ॥

**स होवाच महिमान एवैषामेते त्रयस्त्रिꣳशत्त्वेव देवा इति कतमे ते त्रयस्त्रिꣳशदित्यष्टौ वसव एकादश रुद्रा**

**द्वादशादित्यास्त एकत्रिꣳश[१]दिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिꣳशा इति ॥ २ ॥**

स एवं पृष्टो याज्ञवल्क्यः त्रयस्त्रिंशदेव देवाः तु विशिष्टाः एषां त्रयस्त्रिंशदेवानाम् । एते त्रयस्त्रिंशत्सहस्रसङ्ख्याका देवाः । महिमानः महिना माहात्म्येन मानः परिमिताः । [२]मानं ज्ञानं लयश्चेति मर्यादा चापि कथ्यत इत्यभिधानात् । व्यानाः अतः परिवारभूता एवेति यावत् इत्युवाचेत्यर्थः । तुशब्देन विशेषितान् देवान् पृच्छति– **कतमेव तर्हीति** ॥ इन्द्रश्च प्रजापतिश्च त्रयस्त्रिंशौ त्रयस्त्रिंशत्सङ्ख्यापूरकौ इत्युवाच याज्ञवल्क्य इत्यर्थः ॥ ५-९-२ ॥

**कतमे वसव इत्यग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसव एतेषु हीदꣳवसु सर्वं [३]हितमिति तस्माद्वसव इति ॥ ३ ॥**

अष्टानां स्वरूपं पृच्छति– **कतम इति** ॥ अग्रं विष्णुं नयतीत्यग्निः सुपर्णः । पृथिवी सौपर्णी । वायुः सूत्रात्मा मुख्यवायुः । अन्तरिक्षं तत्पत्नी श्रद्धानाम्नी । आदित्यः शिवः । द्यौः तद्भार्योमादेवी । चन्द्रमाः कामः । कामस्यानिरुद्धपितृत्वेन तदनुविष्टत्वादनिरुद्धः पृथङ्नोक्तः । नक्षत्राणीन्द्रः रूपबाहुल्याद् बहुवचनम् । नाम्नां निरुक्तिर्भाष्ये ध्येया[४] । एते वसव इति कुत एषां वसुत्वमित्यत आह– **एतेषु हीति** ॥ वसतीति वसु जगत् इदं सर्वं वसु । एतेष्वष्टसु देवेषु हितं निहितमिति । हि यतस्तस्माद् बसव इति । वस निवास इत्यस्मात् अन्तर्णीतण्यर्थाद् प्रत्यये वासयन्ति जगदिति वसव इत्युक्तं भवति ॥ ५-९-३ ॥

---

१. अत्र इन्द्रशब्देन वायुज इन्द्रो ग्राह्यः । नक्षत्रशब्देन रूपान्तरग्रहणात् । प्रजापतिशब्देन इन्द्रपुत्रो जयन्त उच्यते । भा.बो. । २. **'मानं इत्यारभ्य अभिधानात् इत्यन्तः भागः'** क. कोशे नास्ति । **'मानं ज्ञानं लयश्चेति मर्यादा वापि कथ्यत । इत्यभिधानम्'** -ख. । ३. **'निहितम्'** इत्यपि क्वचित् । ४. अग्रं विष्णुं नयेद्यस्मात् सुपर्णोऽग्निरुदाहृतः । प्रथितं हरिमादाय वातीति प्रथितः स्मृतः ॥

**कतमे रुद्रा इति दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदाऽस्माच्छरीरान्मर्त्यादुत्क्रामन्त्यथ रोदयन्ति तद्यद्रोदयन्ति तस्माद्रुद्रा इति ॥ ४ ॥**

पुरुषे जीवे । वर्तमानाः प्राणाः । ज्ञानेन्द्रियकर्मेन्द्रियप्रेरकाः । इमे प्रसिद्धाः । दक्षाग्निप्रमुखा वायुपुत्राः दश । आत्मा बुद्धिमानी बृहस्पतिः एकादशः । शिवान्यरुद्राणामपि प्राणाविष्टत्वेन दक्षादिग्रहणेन गृहीतत्वान्न पृथगुक्तिः । कथं रुद्रत्वमेषामित्यतो निर्वक्ति– **त इत्यादिना** ॥ ते प्राणाः आत्मा च । मर्त्यात् म्रियमाणात् शरीरात् । अथ तदा म्रियमाणसम्बन्धिनो जनान् ते प्राणाद्या रोदयन्ति । यद् रोदयन्ति तत्तस्माद् रुद्रा इत्युच्यन्त इत्यर्थः । रुदिर् अश्रुविमोचन इत्यतोऽन्तर्णीतण्यर्थाद्रक्प्रत्यये रुद्र इति सिद्धेरिति भावः ॥ ५-९-४ ॥

**कतम आदित्या इति द्वादश वै मासाः संवत्सरस्यैत आदित्या एते हीदꣳ सर्वमाददाना यन्ति ते यदिदꣳ सर्वमाददाना यन्ति तस्मादादित्या इति ॥ ५ ॥**

संवत्सरस्य संवत्सरात्मककालस्य द्वादशमासा वै प्रसिद्धाः । एते द्वादशमासाभिमानिनो धात्रर्यमविवस्वत्पूषत्वष्टृसवितृभगपर्जन्यवरुणमित्रयमचन्द्रशब्दिता आदित्याः । तेष्वादित्यशब्दं निर्वक्ति– **एत इति** ॥ एते द्वादशादित्याः इदं सर्वं प्राणिनामायुरादिकं आददानाः यन्ति गच्छन्ति । ते यद्यस्मादिदं सर्वमाददाना यन्ति तस्मात् आदित्या इत्युच्यन्त इत्यर्थः । आङ् पूर्वाभ्यां दाण् दाने या प्रापण इत्याभ्यां डप्रत्यये ददातेरिदादेशे चादित्य इति रूपसिद्धेरिति भावः । अश्विनिर्ऋतिकुबेरविनायकानामुत्तमत्वेऽप्यर्यमांशधातृविधातृ-

---

१. वायुजेन्द्रजयन्तयोः रूपविशेषं पृच्छति–कतम इति । स्तनयित्नुरेव तदभिमान्येव प्रसिद्ध्यर्थ एवकारः । यज्ञो यज्ञाभिमानी– भावबोधे ।

**द्वादशादित्यास्त एकत्रिꣳश[१]दिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिꣳशा इति ॥ २ ॥**

स एवं पृष्टो याज्ञवल्क्यः त्रयस्त्रिंशदेव देवाः तु विशिष्टाः एषां त्रयस्त्रिंशद्देवानाम् । एते त्रयस्त्रिंशत्सहस्रसङ्ख्याका देवाः । महिमानः महिना माहात्म्येन मानः परिमिताः । [२]मानं ज्ञानं लयश्चेति मर्यादा चापि कथ्यत इत्यभिधानात् । व्यानाः अतः परिवारभूता एवेति यावत् इत्युवाचेत्यर्थः । तुशब्देन विशेषितान् देवान् पृच्छति– **कतमेव तर्हीति** ॥ इन्द्रश्च प्रजापतिश्च त्रयस्त्रिंशौ त्रयस्त्रिंशत्सङ्ख्यापूरकौ इत्युवाच याज्ञवल्क्य इत्यर्थः ॥ ५-९-२ ॥

**कतमे वसव इत्यग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसव एतेषु हीदꣳवसु सर्वं [३]हितमिति तस्माद्वसव इति ॥ ३ ॥**

अष्टानां स्वरूपं पृच्छति– **कतम इति** ॥ अग्रं विष्णुं नयतीत्यग्निः सुपर्णः । पृथिवी सौपर्णी । वायुः सूत्रात्मा मुख्यवायुः । अन्तरिक्षं तत्पत्नी श्रद्धानाम्नी । आदित्यः शिवः । द्यौः तद्भार्योमादेवी । चन्द्रमाः कामः । कामस्यानिरुद्धपितृत्वेन तदनुविष्टत्वादनिरुद्धः पृथङ्नोक्तः । नक्षत्राणीन्द्रः रूपबाहुल्याद् बहुवचनम् । नाम्नां निरुक्तिर्भाष्ये ध्येया[४] । एते वसव इति कुत एषां वसुत्वमित्यत आह– **एतेषु हीति** ॥ वसतीति वसु जगत् इदं सर्वं वसु । एतेष्वष्टसु देवेषु हितं निहितमिति । हि यतस्तस्माद् बसव इति । वस निवास इत्यस्मात् अन्तर्णीतण्यर्थादु प्रत्यये वासयन्ति जगदिति वसव इत्युक्तं भवति ॥ ५-९-३ ॥

---

१. अत्र इन्द्रशब्देन वायुज इन्द्रो ग्राह्यः । नक्षत्रशब्देन रूपान्तरग्रहणात् । प्रजापतिशब्देन इन्द्रपुत्रो जयन्त उच्यते । भा.बो. । २. '**मानं इत्यारभ्य अभिधानात् इत्यन्तः भागः**' क. कोशे नास्ति । '**मानं ज्ञानं लयश्चेति मर्यादा वापि कथ्यत । इत्यभिधानम्**' -ख. । ३. '**निहितम्**' इत्यपि क्वचित् ।
४. अग्रं विष्णुं नयेद्यस्मात् सुपर्णोऽग्निरुदाहृतः । प्रथितं हरिमादाय वातीति प्रथितः स्मृतः ॥

**कतमे रुद्रा इति दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदाऽस्माच्छरीरान्मर्त्यादुत्क्रामन्त्यथ रोदयन्ति तद्यद्रोदयन्ति तस्माद्रुद्रा इति ॥ ४ ॥**

पुरुषे जीवे । वर्तमानाः प्राणाः । ज्ञानेन्द्रियकर्मेन्द्रियप्रेरकाः । इमे प्रसिद्धाः । दक्षाग्निप्रमुखा वायुपुत्राः दश । आत्मा बुद्धिमानी बृहस्पतिः एकादशः । शिवान्यरुद्राणामपि प्राणाविष्टत्वेन दक्षादिग्रहणेन गृहीतत्वान्न पृथगुक्तिः । कथं रुद्रत्वमेषामित्यतो निर्वक्ति– **त इत्यादिना** ॥ ते प्राणाः आत्मा च । मर्त्यात् म्रियमाणात् शरीरात् । अथ तदा म्रियमाणसम्बन्धिनो जनान् ते प्राणाद्या रोदयन्ति । यद् रोदयन्ति तत्तस्माद् रुद्रा इत्युच्यन्त इत्यर्थः । रुदिर् अश्रुविमोचन इत्यतोऽन्तर्णीतण्यर्थाद्रक्प्रत्यये रुद्र इति सिद्धेरिति भावः ॥ ५-९-४ ॥

**कतम आदित्या इति द्वादश वै मासाः संवत्सरस्यैत आदित्या एते हीदꣳ सर्वमाददाना यन्ति ते यदिदꣳ सर्वमाददाना यन्ति तस्मादादित्या इति ॥ ५ ॥**

संवत्सरस्य संवत्सरात्मककालस्य द्वादशमासा वै प्रसिद्धाः । एते द्वादशमासाभिमानिनो धात्रर्यमविवस्वत्पूषत्वष्टृसवितृभगपर्जन्यवरुणमित्रयमचन्द्रशब्दिता आदित्याः । तेष्वादित्यशब्दं निर्वक्ति– **एत इति** ॥ एते द्वादशादित्याः इदं सर्वं प्राणिनामायुरादिकं आददानाः यन्ति गच्छन्ति । ते यद्यस्मादिदं सर्वमाददाना यन्ति तस्मात् आदित्या इत्युच्यन्त इत्यर्थः । आङ् पूर्वाभ्यां दाण् दाने या प्रापण इत्याभ्यां डप्रत्यये ददातेरिदादेशे चादित्य इति रूपसिद्धेरिति भावः । अश्विनिर्ऋतिकुबेरविनायकानामुत्तमत्वेऽप्यर्यमांशधातृविधातृ-

---

१. **वायुजेन्द्रजयन्तयोः रूपविशेषं पृच्छति–कतम इति । स्तनयित्नुरेव तदभिमान्येव प्रसिद्ध्यर्थ एवकारः । यज्ञो यज्ञाभिमानी–** भावबोधे ।

सूर्येषु विशेषावेशान्न पृथगुक्तिः ॥ ५-९-५ ॥

**[१]कतम इन्द्रः कतमः प्रजापतिरिति स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिरिति कतमः स्तनयित्नुरित्यशनिरिति कतमो यज्ञ इति पशव इति ॥ ६ ॥**

अशनिरिति वज्राभिमानी वायुजेन्द्रः । पशवः पश्वभिमानी जयन्त इत्यर्थः । अपकृष्टोऽपि जयन्तो मन्वावेशात्त्रयस्त्रिंशत्सूक्तः ॥ ५-९-६ ॥

[त्रयस्त्रिंशत्सु षट् देवाः श्रेयांसः]

**कतमे षळित्यग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्चैते षळेतेषु हीदꣳ सर्वꣳ षळिति ॥ ७ ॥**

त्रयस्त्रिंशत्सु षडुत्तमा उक्तास्तान् पृच्छति **कतमे इति षळिति** ॥ पप्रच्छेत्यनुषङ्गः ॥ उत्तरमाह– **अग्निश्चेति** ॥ अग्न्यादिशब्दिता वसुत्वेनोक्ता एव ग्राह्याः। एतेषां षण्णां त्रयस्त्रिंशत्सु वरत्वे हेतुमाह– **एतेषु हीति** ॥ इदं षड् षट्कं ज्ञानविज्ञानैश्वर्यवीर्यश्रीयशोरूपगुणषट्कम् । एतेषु गरुडादिषु सर्वं सम्पूर्णं हि यतोऽतः एते षडुत्तमा इत्यर्थः ॥ ५-९-७ ॥

[षट्सु देवेषु वीन्द्रवायुमहेश्वराः श्रेष्ठाः । त्रिष्वपि भारतीवायू श्रेष्ठौ]

**कतमे ते त्रयो देवा इतीम एव त्रयो लोका एषु हीमे सर्वे देवा इति कतमौ तौ द्वौ देवावित्यन्नं चैव प्राणश्चेति कतमोऽध्यर्ध इति योऽयं पवत इति ॥ ८ ॥**

षट्सूत्तमांस्त्रीनृपृच्छति– **कतमे त इति** ॥ इमे एव प्राक् अग्निवाय्वादित्यशब्दिता वीन्द्रवायुमहेश्वराः स्वस्वभार्याणामाश्रयत्वाद्वा ज्ञानरूपत्वाद्वा लोका इत्युक्तास्त्रय इत्यर्थः । कथमेषां षड्भ्योऽप्युत्तमत्वमित्यत आह– **एतेषु हीमे सर्वे देवा इति** ॥ आयत्ता इति योज्यम् । इति यतोऽत उत्तमा इत्यर्थः । ब्रह्मशेषयो-

र्वायुरुद्रपदसाम्यात्तयोः पृथगनुक्तिः । त्रिष्वपि द्वौ वरावित्युक्तं प्राक् । तौ पृच्छति– **कतमाविति** ॥ अन्नं प्रागन्तरिक्षपदोक्ता श्रद्धा प्राणस्तपतिर्मुख्यवायुः ॥ ५-९-८ ॥

[ज्ञानादिगुणपूर्णज्ञत्वाद् वायुरध्यर्धः । उत्तमोऽर्थो हरिस्त्वेकः]

**तदाहुर्यदयमेक इवैव पवतेऽथ कथमध्यर्ध इति यस्मिन्निदꣳ सर्वमध्यार्ध्नोत्तेनाध्यर्ध इति कतम एको देव इति प्राण इति स ब्रह्म त्यदित्याचक्षते ॥ ९ ॥**

प्राक् तयोरध्यर्धोऽधिक इत्युक्तं तं पृच्छति– **कतम इति** ॥ यः सर्वलोकाश्रयतया पवते अयं वायुरध्यर्ध इति तदाहुर्वायोरध्यर्धत्वविषयेऽनुत्पत्तिमाहुः । किमिति अयं वायुः यद्यस्मादेक इवैव पवते अथ तस्मात् । कथमध्यर्धः । अर्धेनाधिको ह्यध्यर्ध इति वाच्यत्वादिति उत्तरमाह– **यदस्मि-न्निति** ॥ यद् यस्मादस्मिन् वायौ । इदं सर्वं बुद्धिस्थं ज्ञानादिगुणजातं अध्यार्ध्नोत् आधिक्येन ऋद्ध-मभूत् । तेन हेतुनाध्यर्ध इत्येव न त्वर्धेनाधिकोऽध्यर्ध इति । यद्वा कथमध्यर्ध इति प्रश्नस्य गुणसमृद्धिमत्त्वादध्यर्ध इत्युत्तरे कृते सति कथमस्य गुणसमृद्धत्व-मित्यतस्तदाहुरित्यादि वाक्यम् । तत् गुणसमृद्धतयोत्तमत्वमाहुः । यद्यस्मादयं वायरेक इवैव मुख्य इव स्वतन्त्र इवैवेति वा पवत अतो हेतोरध्यर्ध इत्यर्थः । वायोरपि विष्णोरुत्तमस्य सत्त्वादेक इवेत्युक्तं द्वयोरेकोऽधिक इत्युक्तं तं पृच्छति– **कतम एक इति** ॥ **प्राण इतीति** ॥ आ समन्तात्प्रकृष्टः ण आनन्दो यस्य स प्राणो विष्णुः एक इत्युच्यते । अन्यस्य तादृशस्याभावा-दुत्तम इत्यर्थः । श्रीस्तदत्यन्तान्तरङ्गत्वान्न पृथगुक्ता कुतस्तस्योत्तमतेत्यत आह– **स इति** ॥ स प्राणनामा विष्णुः ब्रह्म गुणपूर्णः यथा श्रुत्यादावुदितस्तथैवा-विकारेणानन्तकालेषु याति वर्तत इति त्यत् इत्याचक्षते ज्ञानिन इत्यर्थः ॥ ५-९-९ ॥

[स्वायम्भुवमनोः वायुर्नियामकः]

**पृथिव्येव यस्यायतनमग्निर्लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात् सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषं सर्वस्यात्मनः परायणं यमात्थ स एवायꣳ शारीरः पुरुषः स एष वदैव शाकल्य तस्य का देवतेत्यमृतमिति होवाच ॥ १० ॥**

प्रष्टव्यार्थज्ञानिनः फलोक्तिपूर्वं प्रष्टव्यं पृच्छति– **पृथिव्येवेति** ॥ एवशब्दः प्रसिद्धिपरः। प्रसिद्धा पृथिव्येव । यस्य पुरुषस्यायतनं यत्पुरुषाभिमन्यमाना यस्य पुरुषस्याग्निः । अत्तीति व्युत्पत्त्या अग्निनाम्नी अग्निस्था रमा । लोकः मनोवृत्तिरूपबाह्यप्रकाशहेतुः । यस्य पुरुषस्य मनः बोधरूपतया मनोनाम्नी मनःस्था रमा ज्योतिः स्वपरज्ञप्त्यभिव्यक्तिहेतुः । तं सर्वस्यात्मनो जीवजातस्य परायणमुत्तमाश्रयं पुरषं यो वै य एवाधिकारी विद्याज्जानीयात् । स वै स एव वेदिता ज्ञानी स्यात्तं पुरुषं हे याज्ञवल्क्य वेत्थ किमिति पप्रच्छेति योज्यम् । उत्तरमाह याज्ञवल्क्यः– **वेद वा इति** ॥ यमात्थ तं पुरुषं सर्वस्यात्मानं परायणमहं वेद वै जानाम्येव । तमाह य एवायं शारीरः सर्वजीवाभिमानी पुरुषः स्वायम्भुवो मनुः स एष त्वया पृष्टः पुनः पृच्छेत्याह याज्ञवल्क्यः– **वदैव शाकल्येति** ॥ पृच्छैवेत्यर्थः । पृच्छति तस्य शारीर-पुरुषस्य मनोः का देवता नियमनादिकर्त्रीति अमृतं वायुरिति होवाच ॥ ५-९-१० ॥

[काममानिप्रद्युम्नस्य श्रीसरस्वत्युमाः अनुग्राहिकाः]

**काम एव यस्यायतनꣳ हृदयं लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायं काममयः पुरुषः स एष वदैव शाकल्य**

**तस्य का देवतेति स्त्रिय इति होवाच ॥ ११ ॥**

एवमग्रेतनखण्डसप्तकस्यापि योजना ध्येया। काम एव मनोवृत्तिविशेषः स्त्रीरागः। हृदयं हृद्ययनाद् हृदयनाम्नी बुद्धिस्था रमा। लोकः बाह्यप्रकाशहेतुः। यस्येत्यनुषज्यते मनोनाम्नी ज्योतिः। स्वरूपज्ञानाविर्भावहेतुः। एवमग्रेऽपि। काममयः कामाभिमानी प्रद्युम्नः। स्त्रियः श्रीसरस्वत्युमाः॥ ५-९-११॥

[त्रिलोचनस्य चतुराननो नियन्ता]

**रूपाण्येव यस्यायतनं चक्षुर्लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवासावादित्ये पुरुषः स एष वदैव शाकल्य तस्य का देवतेति सत्यमिति होवाच ॥ १२॥**

रूपाणि शुक्लादीनि। दृष्टिहेतुत्वहेतुना चक्षुर्नाम्नी चक्षुःस्था रमा। आदित्ये पुरुषः रुद्रः। सत्यं चतुर्मुखः॥ ५-९-१२॥

[चन्द्रानुग्राहकाः गरुडशेषदक्षाः]

**आकाश एव यस्यायतनꣳ श्रोत्रं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायꣳ श्रौत्रः प्रातिश्रुत्कः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति दिश इति होवाच ॥ १३॥**

आकाश एव भूताकाश एव। श्रोत्रं श्रवणहेतुतया श्रोत्रनाम्नी श्रोत्रस्था रमा। श्रोत्रः श्रोत्रगतः। प्रतिशृणोतीति प्रातिश्रुत्कः पुरुषः चन्द्रः। दिशो गरुडशेषदक्षाः॥ १३॥

[निर्ऋतेर्यम उत्तमः]

**तम एव यस्यायतनꣳ हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद् याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायं छायामयः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति मृत्युरिति होवाच ॥ १४ ॥**

तम एवान्धकार एव । अत्रोत्तरखण्डद्वये च प्रागुक्तनिरुक्त्या बुद्धिस्था रमैव हृदयपदार्थः। सर्वत्र मनःशब्देनापि रमैव । छायामयः पुरुषः छायाभिमानी निर्ऋतिः । मृत्युर्यमः ॥

[सूर्यस्य प्राणो नियन्ता]

**रूपाण्येव यस्यायतनं चक्षुर्लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायमादर्शे पुरुषः स एष वदैव शाकल्य तस्य का देवतेत्यसुरिति होवाच ॥**

रूपाण्येव प्रसिद्धानि । चक्षुश्चक्षुःस्था रमा । आदर्शे दर्पणे । पुरुषः तदभिमानी सूर्यः। असुः अन्तर्गतो वायुः ॥ ५-९-१५ ॥

[पर्जन्ययन्ता वरुणः]

**आप एव यस्यायतनꣳ हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञ-वल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायमप्सु पुरुषः स एष वदैव शाकल्य**

**तस्य का देवतेति वरुण इति होवाच॥ १६ ॥**

आपो जडभूताः । अप्सु पुरुषः पर्जन्यः । वरुणः प्रसिद्धः ॥ १६ ॥

[शक्रस्य ब्रह्मा पालकः]

**रेत एव यस्यायतनꣳ हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ यं एवायं पुत्रमयः पुरुषस्स एष वदैव शाकल्य तस्य का देवतेति प्रजापतिरिति होवाच ॥ १७॥**

रेत एव प्रसिद्धम् । पुत्रमयः पुरुषः पुत्राभिमानी शक्रः । प्रजापतिः प्रजापालको ब्रह्मा ॥ ५-९-१७ ॥

**शाकल्येति होवाच याज्ञवल्क्यस्त्वाꣳ स्विदिमे ब्राह्मणा ओङ्गारावक्रयणमकृता३ इति ॥ १८ ॥**

एवमतिप्रश्नान् कुर्वन्तं प्रति शाकल्येति सम्बोध्योवाच याज्ञवल्क्यः । किमिति तदाह– **त्वां स्विदिति** ॥ इमे ब्राह्मणाः । त्वां स्वित् त्वां किल। अङ्गारावक्रयणं अक्रता३ अकृषत अकुर्वन् । प्लुतिर्दयाविशेषद्योतिका । अरे शाकल्याङ्गारविक्षेपहेतुभूतकाष्ठमेते अकुर्वन् त्वं न जानासि । ब्रह्मसङ्घप्रेरितस्त्वं मदभिमुखो भूत्वा बहुप्रश्नान् पृच्छसि । मत्कोपेन तव क्षेमः कथं भविष्यति। अलमियतेति दयया तं प्रत्युवाचेत्यर्थः । अङ्गारा अवक्रियन्ते इतस्ततो विक्षिप्यन्ते येन स काष्ठविशेषोऽङ्गारावक्रयणशब्दार्थः ॥ १८॥

[दिशः विद्यात् सदेवाः सप्रतिष्ठाः]

**याज्ञवल्क्येति होवाच शाकल्यो यदिदं कुरुपाञ्चालानां ब्राह्मणानत्यवादीः किं ब्रह्म विद्वानिति दिशो वेद सदेवाः सप्रतिष्ठा इति यद्दिशो वेत्थ सदेवाः सप्रतिष्ठाः ॥ १९ ॥**

तद्वचनमगणयन् पुनस्तज्जयेच्छया पृच्छति– **याज्ञवल्क्येति** ॥ कुरुपाञ्चालानां सम्बन्धिनस्तद्देशीयानिति यावत् । ब्राह्मणानति अतिक्रम्य । अवज्ञायेति यावत् । मामङ्गारावक्रयणमक्रतेति यद्वादीः । तत्किं ब्रह्म विद्वानिति बुद्ध्या अवादीरिति शाकल्येन पृष्टो याज्ञवल्क्यः । सत्यं अरे अहं ब्रह्म विद्वानेवेति भावेनाह– **दिशो वेद सदेवाः स प्रतिष्ठा इति** ॥ अहं दिशः सदेवाः अभिमानिदेवतासहिताः । सप्रतिष्ठाः साधाराः वेद ॥ ५-९-१९ ॥

**किं देवतोऽस्यां प्राच्यां दिश्यसीति आदित्यदेवत इति स आदित्यः कस्मिन् प्रतिष्ठित इति चक्षुषीति कस्मिन्नु चक्षुः प्रतिष्ठितमिति रूपेष्विति चक्षुषा हि रूपाणि पश्यति कस्मिन्नु रूपाणि प्रतिष्ठितानीति हृदय इति होवाच हृदयेन हि रूपाणि जानाति हृदये ह्येव रूपाणि प्रतिष्ठितानि भवन्तीत्येवमेवैतद्याज्ञवल्क्य ॥ २० ॥**

एवं याज्ञवल्क्येनोक्ते पृच्छति शाकल्यः– **यदिति** ॥ यत् यदि । सदेवाः दिशः वेत्थ तर्हि । अस्यां प्राच्यां दिशि । किं देवतोसि का देवता अधिष्ठात्री ज्ञाता येन स किं देवतोसि । एतद्दिगधिष्ठात्रीं कां देवतां ज्ञात्वा वर्तसे तद्वदेति प्रश्नार्थः । उत्तरमाह– **आदित्यदेवत इति** ॥ आदित्यो देवता प्राक् दिगधिष्ठात्री ज्ञाता येन स आदित्यदेवतोऽस्मीति शेषः । आदित्यं प्राक् दिगधिष्ठातारं जानामीत्यर्थः । दिशः सदेवाः सप्रतिष्ठा वेदेत्यत्र सदेव इत्यंशः पृष्टः उत्तरितश्च । अधुना सप्रतिष्ठ इत्यंशं पृच्छति– **स आदित्यः कस्मिन् प्रतिष्ठित इति** ॥ तस्योत्तरम्– **चक्षुषीति** ॥ दृष्टिशक्तिप्रेरके चक्षुर्मानिनि स्वायम्भुवमनाविति । कस्मिन् चक्षुः प्रतिष्ठितमित्यस्योत्तरम्– **रूपेष्विति** ॥ रूपाभिमानीन्द्रे । तदुपपादयति– **चक्षुषेति** ॥ स्वायम्भुवमनुना तत्प्रसादेन रूपाणि पश्यतीत्यर्थः । रूपाणि रूपाभिमानीन्द्रः कस्मिन्नित्य-

स्योत्तरम्– **हृदय इति** ।। बुद्धिमान्युमायां प्रतिष्ठितानीत्येतदुपपादयति– **हृदयेनेति** ।। निगमयति– **हृदये ह्येवेति** ।। तदुक्तमभ्युपैति– **एवमेवैतदिति** ।।

**किंदेवतोऽस्यां दक्षिणायां दिश्यसीति यमदेवत इति स यमः कस्मिन् प्रतिष्ठित इति यज्ञ एति कस्मिन् यज्ञः प्रतिष्ठित इति दक्षिणायामिति कस्मिन्नु दक्षिणा प्रतिष्ठितेति श्रद्धायामिति यदा ह्येव श्रद्धत्तेऽथ दक्षिणां ददाति श्रद्धायाꣳ ह्येव दक्षिणा प्रतिष्ठितेति कस्मिन्नु श्रद्धा प्रतिष्ठितेति हृदय इति होवाच हृदयेन हि श्रद्धां जानाति हृदये ह्येव श्रद्धा प्रतिष्ठिता भवतीत्येवमेवैतद् याज्ञवल्क्य ।। २१ ।।**

एवमुत्तरखण्डचतुष्टयेऽपि प्रश्नोत्तरपरवाक्ययोजना ध्येया । यज्ञे यज्ञमानिन्यनिरुद्धे । दक्षिणायां दक्षिणाभिमानिन्यां रतिदेव्याम् । श्रद्धायां श्रद्धामानिनि कामे । तदुपपादकं– **यदा हीत्यादि** ।। [१]हृदय इतीति प्राग्वत् । बुद्धिमान्युमायामित्यर्थः । एवमग्रेऽपि ।। ५-९-२१ ।।

**किंदेवतोऽस्यां प्रतीच्यां दिश्यसीति वरुणदेवत इति स वरुणः कस्मिन् प्रतिष्ठित इत्यप्स्विति कस्मिन्न्वापः प्रतिष्ठिता इति रेतसीति कस्मिन्नु रेतः प्रतिष्ठितमिति हृदय इति तस्मादपि प्रतिरूपं जातमाहुर्हृदयादिव सुप्तो हृदयादिव निर्मित इति हृदये ह्येव रेतः प्रतिष्ठितं भवतीत्येवमेवैतद् याज्ञवल्क्य ।। २२ ।।**

अप्सु अबभिमानिनि चन्द्रे । रेतसि रेतोमानिबृहस्पतौ । हृदये उमायाम् । तस्मादपि तस्मादेव । जातम् । प्रतिरूपं पुत्रमाहुर्वैदिकाः । किमिति किं

---

१. 'हृदये इत्यारभ्य इत्यर्थ इत्यन्तभागः' नास्ति - क. ।

पितृहृदयादिवायं पुत्रः सृप्तः विनिःसृतः। हृदयादिव निर्मित इत्याहुरित्यन्वयः। यत एव मतो हृदय एव रेतः प्रतिष्ठितमित्यर्थः। [१]हृदये देवे रेतोदेवः प्रतिष्ठित इत्यर्थः ॥ ५-९-२२ ॥

**किंदेवतोऽस्यामुदीच्यां दिश्यसीति सोमदेवत इति स सोमः कस्मिन् प्रतिष्ठित इति दीक्षायामिति कस्मिन्नु दीक्षा प्रतिष्ठितेति सत्य इति तस्मादपि दीक्षितमाहुः सत्यं वदेति सत्ये ह्येव दीक्षा प्रतिष्ठितेति कस्मिन्नु सत्यं प्रतिष्ठितमिति हृदय इति होवाच हृदयेन हि सत्यं जानाति हृदये ह्येव सत्यं प्रतिष्ठितं भवतीत्येवमेवैतद् याज्ञवल्क्य ॥ २३ ॥**

दीक्षायां दीक्षामानिन्यां शतरूपायाम्। सत्ये स्वायम्भुवमनौ। सत्ये स्वायम्भुवमनौ। तस्मादपि तस्मादेव। दीक्षितं पुरुषं सत्यं वदेत्याहुः। तस्मात्सत्ये ह्येव दीक्षा प्रतिष्ठितेति निगमनम्। हृदये उमायाम् ॥ ५-९-२३ ॥

**किंदेवतोऽस्या ध्रुवायां दिश्यसीत्यग्निदेवत इति सोऽग्निः कस्मिन्नु प्रतिष्ठित इति वाचीति कस्मिन्नु वाक्प्रतिष्ठितेति हृदय इति कस्मिन्नु हृदयं प्रतिष्ठितमिति ॥ २४ ॥**

ध्रुवायां प्राचीदक्षिणामध्यमायां दिशि। वाचि वागभिमानिबृहस्पतौ। हृदये उमायाम् ॥ ५-९-२४ ॥

**अहल्लिकेति होवाच याज्ञवल्क्यो यत्रैतदन्यत्रास्मन्मन्यासै यद्ध्येतदन्यत्रास्मत्स्याच्छ्वानो वै न दद्युर्वयाꣳसि वैनद् विमथ्नीरन्निति ॥ २५ ॥**

कस्मिन्नु हृदयं प्रतिष्ठितमित्युमाया अप्याश्रये पृष्टे याज्ञवल्क्य आक्षिपति— **अहल्लिकेति** ॥ अहन्नि लीनमस्येति अहल्लीकः। स एवाहल्लिकः। हे

अज्ञेत्यर्थः। अहल्लिकेति सम्बोध्योवाच । कुतस्तस्याज्ञत्वमित्यत उच्यते। [१]यत्र यस्मात् । एतत् हृदयम् । हृदयमानिनीमुमाम् । अस्मत् अहङ्कारा-भिमानिरुद्रात् अन्यत्र। मन्यासै मन्यसे जानासि। प्रसिद्धमपि रुद्राश्रितत्वमज्ञात्वा त्वं कस्मिन् प्रतिष्ठितमिति पृच्छसि अतोऽज्ञेति । तस्या रुद्रानाश्रितत्वे बाधकमाह– **यद्धीति** ॥ [१]यत्र यस्मात् । एतत् हृदयम्। हृदयमानिनी उमा। अस्मत् अहङ्कराभिमानिरुद्रात् अन्यत्र स्यात्। तदनाश्रिता स्यादिति यावत् । तर्हि बुद्धिमान्युमायाः देहाभिरक्षणोपयोगिबुद्धिशक्त्यभाव-प्रसङ्गेनैतच्छरीरं श्वानो वाऽद्युः । वयांसि वैनच्छरीरं विमथ्नीरन् विकर्षेरन्। कस्यापि जीवनं न स्यादिति भावः । इत्युवाच याज्ञवल्क्य इतीति पदान्वयः ॥ ५-९-२५ ॥

**कस्मिन्नु त्वं चात्मा च प्रतिष्ठितौ स्थ इति प्राण इति कस्मिन्नु प्राणः प्रतिष्ठित इत्यपान इति कस्मिन्न्वपानः प्रतिष्ठित इति व्यान इति कस्मिन्नु व्यानः प्रतिष्ठित इति उदान इति कस्मिन्नु उदानः प्रतिष्ठित इति समान इति स एष नेति नेत्यात्माऽगृह्यो नहि गृह्यतेऽशीर्यो नहि शीर्यतेऽसङ्गो नहि सज्यतेऽसितो न व्यथते न रिष्यत्येता-न्यष्टावायतनान्यष्टौ लोका अष्टौ देवा अष्टौ पुरुषाः स यस्तान् पुरुषान्निरूह्य प्रत्यूहात्यक्रामत्तं त्वौपनिषदं पुरुषं पृच्छामि तं चेन्मे विवक्ष्यसि मूर्धा ते विपतिष्यतीति तꣳह न मेने शाकल्यस्तस्य ह मूर्धा विपपातापि हास्य परिमोषिणोऽस्थीन्यपजह्रुरन्यन्मन्यमानाः ॥ २६ ॥**

---

१. 'यत्र यत्' - क. ।

एवमाक्षेपपूर्वमुक्तोऽपि शाकल्यः रुद्रोमयोरप्याश्रयं पृच्छति– **कस्मिन्निति** ॥ त्वं चाहं चेति रूपवानहङ्काराभिमानी रुद्रः । आत्मेत्युक्तबुद्धिमानिन्युमा चेत्येतौ द्वौ कस्मिन् प्रतिष्ठितौ स्थ इति पप्रच्छेत्यर्थः । प्राणे प्राणनामके शेष इत्युवाच याज्ञवल्क्य इत्यर्थः । अपाने अपाननाम्न्यां भारत्याम् । व्याने व्यानाभिधे वायौ । उदाने उदाननाम्न्यां च श्रीदेव्याम् । समाने समाननामके हरौ । कुतः समाननाम्नो हरेः सर्वाधारत्वमित्यत आह– **स एष इति** ॥ स कतम एको देवः प्राण इतीत्युक्तः । स एषः समाननामा आत्मा विष्णुः 'इति न' दुःखास्पृष्टरमावन्न भवति । 'इति न' दुःखस्पृष्टब्रह्मादिवच्च नेत्यर्थः । यद्वा 'इति न' बद्धब्रह्मादिवन्न । 'इति न' रमादिमुक्तवच्च नेत्यर्थः । तत्र हेतुमाह– **अगृह्य इत्यादि** ॥ अगृह्यः साकल्येन ग्रहणायोग्यः कुत एवमित्यतः साकल्येन गृह्यत इत्यत्र मानाभावादित्याह– **नहीति** ॥ साकल्येन गृह्यत इत्यत्र प्रमाणं नास्तीत्यर्थः । अशीर्यः कारणात् कालतोऽपि वा विशरणशून्यः । कुत इत्यतो– **नहीति** ॥ पूर्ववदर्थः । एवमग्रेऽपि । असङ्गः सर्वत्र सन्नपि तत्कृतदोषलेपशून्यः । नहीति प्राग्वत् । असितः न कदाचिद्बद्धः । न व्यथते दुःखीभवतीत्यत्र प्रमाणं नहीत्यर्थः ॥ **नरिष्यति इतीति** ॥ कालत्रयेऽपि नाशहीन इत्यर्थः । अत्र न हि रिष्यत इत्यपि वाक्यं ग्राह्यं प्रकरणबलात् । एवं शाकल्यप्रश्नस्य सर्वस्योत्तरमुक्त्वा सामर्षो याज्ञवल्क्यः शाकल्यं स्वयं पृच्छति– **एतानीति** ॥ एतानि पृथिव्येव यस्यायतनमित्यादिनोक्तानि पृथिव्यादीनि अष्टावायतनानि । अग्निर्लोक इत्यादिना उक्ता अष्टौ लोकाः । अमृतमिति होवाचेत्यादिनोक्ता अष्टौ देवाः । शारीरः पुरुष इत्यादिनोक्ता अष्टौ पुरुषाः । स प्रसिद्धो । यस्तान् पुरुषान् । आयतनलोकदेवतानपीत्यपि ग्राह्यम् । निरूह्य पुरुषाद्यपेक्षां विनैव निरूह्य निर्गत्य । स्थितेनेति शेषः । बहिष्ठरूपेणेति यावत् । ऊढ्वा प्रत्यूह्य । प्रतिप्रति तत्तदन्तर्यामिरूपेणोह्य ऊढ्वा । अत्यक्रामत्

अतिक्रान्तवान् । तं त्वौपनिषदं उपनिषदेकगम्यम् । पुरुषं त्वा त्वां पृच्छामि । तं पुरुषं चेद्यदि । मे मह्यम् । त्वं वि विशेषेण न वक्ष्यसि । तर्हि ते मूर्धा शिरः विपतिष्यतीत्युवाच याज्ञवल्क्यः । शाकल्यस्तं याज्ञवल्क्यपृष्टं भगवन्तं न मेने नाज्ञासीत् ह किल । तस्य मूर्धा विपपात ह । न केवलमयं मृतः किन्तु अस्य शाकल्यस्य अस्थीन्यपि परिमोषिणस्तेना अन्यन्मन्यमानाः रजतं मन्यमानाः अपजह्रुः अपहृतवन्तः ॥ ५-९-२६ ॥

**अथ होवाच ब्राह्मणा भगवन्तो यो वः कामयते स मा पृच्छतु सर्वे वा मां पृच्छत यो वः कामयते तं वः पृच्छामि सर्वान् वा वः पृच्छामीति ते ह ब्राह्मणा न दधृषुः ॥ २७ ॥**

अथ शाकल्यपातानन्तरं याज्ञवल्क्य उवाच, हे ब्राह्मणाः भगवन्तो वो युष्माकं मध्ये यः कामयते मां प्रष्टुमिच्छतीत्यर्थः । स मां पृच्छतु सर्वे वा यूयं मां पृच्छत वा । यद्वा वः युष्माकं मध्ये यः कामयते याज्ञवल्क्यो मां पृच्छत्वितीति यावत् । तमहं पृच्छामि सर्वान् यो युष्मान् वा पृच्छामीत्युवाचेत्यन्वयः । एवं तेनोक्तास्ते ब्राह्मणाः न दधृषुः धैर्यवन्तो नाभवन् ॥ ५-९-२७ ॥

[सर्वस्रष्टा हरिः स्वतन्त्रः]

**तान् हैतैः श्लोकैः पप्रच्छ ॥**

**यथा वृक्षो वनस्पतिस्तथैव पुरुषोऽमृषा ।**
**तस्य लोमानि पर्णानि त्वगस्योत्पाटिका बहिः ॥ २८ ॥**

तान् ब्रह्मणानेतैर्वक्ष्यमाणश्लोकैः पप्रच्छ याज्ञवल्क्यः । महाप्रलयानन्तरं जीवस्य देहयोगरूपोत्पत्तिकर्ता क इति प्रष्टुं तस्य नित्यत्वं तावदाह– **यथेति** ॥ यथा वनस्पतिः वनस्पतौ । व्यत्ययात् । वृक्ष इत्ययं शब्दो अमृषा अन्वर्थत-स्तथैव । पुरुषः पुरुष इत्ययं शब्दः अमृषा अन्वर्थ एव । वृक्षपदप्रवृत्ति-

निमित्तं वृक्णत्वं यथा वनस्पतौ विद्यते । तथा पुरुकाले सत्वरूपं पुरुषपद-वृत्तिनिमित्तं पुरुषे विद्यत एव । तथा चोक्तनिमित्तेन पुरुषपदवाच्यत्वात् जीवो नित्यः सिद्ध्यतीति भावः । वृक्षसदृशतया प्रकृतपुरुषस्य शरीरे हेयत्व-ज्ञापनाय वृक्षसारूप्यं वक्ति– **तस्येत्यादिना** ॥ तस्य पुरुषस्य देहस्य लोमानि पर्णानि । वृक्षपर्णानीव अस्य पुरुषदेहस्य । त्वक् लोमाश्रयभूतं चर्म । बहिरुत्पाटिका ॥ २८ ॥

**त्वच एवास्य रुधिरं प्रस्यन्दि त्वच उत्पटः ।**
**तस्मात्तदा तृण्णात्प्रैति रसो वृक्षादिवाऽहतात् ॥ २९ ॥**

वृक्षस्य बहिर्भूतत्वगिव । तद्व्यनक्ति– **त्वच इति** ॥ यथास्य वनस्पतेः त्वच[२] उत्पटो निर्यासः प्रस्यन्दि । तथास्य पुरुषस्य त्वच एव रुधिरं प्रस्यन्दि । तदेव व्यनक्ति– **तस्मादिति** ॥ तस्मात्साम्यादेव । तस्मादाहताद् वृक्षाद्रस इव आतृणात्सम्यक् छिन्नात् देहाद्रुधिरं प्रैति प्रकर्षेण एति निर्गच्छति । [१]तृण च्छेदने ॥ ५-९-२९ ॥

**माꣳसान्यस्य शर्कराणि किन्नाटं स्नाव तत्स्थिरम् ।**
**अस्थीन्यन्तरतो दारूणि मज्जा मज्जोपमा कृता ॥ ३० ॥**

वृक्षदेहयोः साम्यान्तरमाह– **मांसानीति** ॥ शर्कराणि वृक्षशकलस्थानीयानि मांसानि । स्नावतः स्थिरं स्नावास्थिमध्ये यत्स्थिरं विद्यते अस्थिसल्लीनं तत्कीनाटमिव दारुसंश्लिष्टपाशवत् । पुरुषस्यास्थीनि वृक्षस्यान्तरे विद्यमान-दारूणीव । वृक्षान्तःस्थसारभूतदारूणीव । वनस्पतिमज्जा पुरुषमज्जोपमा कृता ॥ ५-९-३० ॥

**यद्वृक्षो वृक्णो रोहति मूलान्नवतरः पुनः ।**
**मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति ॥ ३१ ॥**

---

१. 'तृण च्छेदन' इति नास्ति - क. ।

एवं पुरुषस्य वृक्षसाम्यमुपपाद्याधुना नाशोत्पत्तिमत्त्वेनापि साम्योक्तिपूर्वं यत्प्रष्टव्यं तत्पृच्छति– **यदिति** ॥ यद् यथा । वृक्णः छिन्नो वृक्षो मूलान्नवतरः पुनः प्ररोहति उत्पद्यते । तथा मृत्युना वृक्णः मर्त्यः स्वित् मर्त्योऽपि। पुनः पुरुषान्तरात् प्ररोहति। स वृक्षो मर्त्यश्च कस्मात् मूलात् कारणात्प्ररोहति उत्पद्यते। वृक्षपुरुषयोः स्वातन्त्र्येणोत्पादकः कः किंलक्षणकश्चेति प्रश्नाभिप्रायः ॥ ५-९-३१ ॥

**रेतस इति मा वोचत जीवतस्तत्प्रजायते ।**
**धानारुह इव वै वृक्षोऽञ्जसा प्रेत्य सम्भवः ॥ ३२ ॥**

याज्ञवल्क्यः स्वयमेव सम्भावितकारणान्तरमाशङ्क्य निराह– **रेतस इतीति** ॥ हे ब्राह्मणाः रेतसः सकाशात्पुरुषः प्ररोहतीति मावोचत मैवं वदत । कुत इत्यत उक्तम्– **जीवत इति** ॥ यस्मात् तद्रेतो जीवतः पित्रादेः प्रजायते। मया तु अञ्जसा प्रेत्य स्थितस्य महाप्रलयानन्तरं सम्भवः उत्पादकः क इति पृच्छ्यते । नहि तदा रेतोऽस्तीति भावः ॥ ५-९-३२ ॥

**यत्समूलमावृहेयुर्वृक्षं न पुनराभवेत् ।**
**मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति ॥ ३३ ॥**

वृक्षस्य बीजजन्यत्वस्य प्रत्यक्षसिद्धत्वात् तदुत्पादकप्रश्नो न युक्त इत्यत उक्तम्– **धानारुह इव वै वृक्ष इति** ॥ धाना बीजम् । बीजरुह इव वृक्षो न वस्तुतः स्वातन्त्र्येण तज्जन्य इत्यर्थः । नन्वथापि वृक्षो मूलाद्रोहती-त्युक्तत्वात्कथमुत्पादकप्रश्न इति चेन्न। तस्याङ्गीकारवादमात्रत्वात् कुत इत्यतस्तमपि पक्षं दूषयति– **यदिति** ॥ यद्यदा स मूलं वृक्षं पुरुषाः आवृहेयुः उद्वर्तयेयुः । तदा उन्मूलो वृक्षः पुनरा सम्यक् न भवेत् किम्। यथा एवं मृत्युना वृक्णः मर्त्यः स्वित् मर्त्योऽपि पुनर्न भवेत् किम्? भवेदेव। वृक्षो मर्त्यश्च तत्कस्मान्मूलात्प्ररोहतीत्यर्थः ॥ एवं याज्ञवल्क्येन

पृष्टे पुरुषस्य पुनरुत्पादकं भगवन्तं जानन्तोऽपि ब्राह्मणाः तत्पृष्टं सर्वं वक्तुमशक्तत्वात्तूष्णीं बभूवुः ॥ ५-९-३३ ॥

**जात एव न जायते कोऽन्वेनं जनयेत् पुनः ।**
**विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणम् ॥**
**तिष्ठमानस्य तद्विद इति ॥ ३४ ॥**

**इति शाकल्यब्राह्मणम् ॥ ५-९ ॥**

**इति पञ्चमोऽध्यायः**

अतः स्वयमेवोत्तरमाह याज्ञवल्क्यः— **जात एवेति** ॥ विज्ञानं पूर्णज्ञानरूपम्। आनन्दं पूर्णसुखरूपम् । ब्रह्म परब्रह्मैव सृज्यसर्जनकारणमिति शेषः । सृष्टावानन्दोद्रेक एव हेतुरिति [1]द्योतनायानन्दमिति विशेषणम् । सृष्ट्युपयुक्तसार्वज्ञोक्त्यर्थं विज्ञानमिति । ब्रह्मणोऽपि जनकोऽस्ति किमित्यतो नेत्याह – **जात एवेति**॥ अयं भगवान् जात एवानादिकालतश्चिदानन्ददेहयुक्ततयाविर्भूत एवातो न जायते । तस्मादेनं कोनु जनयेत् न कोऽपीति । न केवलमयं सृष्टिकर्तैव किन्तु दातुः स्वोद्देशेन हविरादिदातुः यजमानस्य राति रिष्टः [2]तद्विदो ब्रह्मविदश्च तिष्ठमानस्य नित्यं तद्भावानावतस्तु परायणं परमाश्रय इत्युवाच याज्ञवल्क्य इत्यर्थः ॥ ५-९-३४ ॥

**इति शाकल्यब्राह्मणम्**

**इति श्रीमत्काण्वोपनिषदर्थसङ्ग्रहे राघवेन्द्रयतिकृते पञ्चमोऽध्यायः**

---

१. 'देवस्यैष स्वभावोऽ आप्तकामस्य का स्पृहा' इति श्रुतिरपि नित्यतृप्तस्य परिपूर्णस्य भगवतो सृष्ट्यादिना न किमपि प्रयोजनं किन्तु केवललीलयैवानन्दोद्रेकात् परप्रयोजनार्थं सृष्टिरित्याह । तदाह बादरायणः–'लोकवत्तु लीलाकैवल्यम्' 'न प्रयोजनवत्त्वात्' इति । २. '**तद्वशेषब्रह्मविदश्च**'-ख. ।

# अथ षष्ठोऽध्यायः

## अथ षडाचार्यब्राह्मणम्

[जनकराज्ञा गुरुत्वेन याज्ञवल्क्यवरणम्]

**जनको ह वैदेह आसाञ्चक्रेऽथ ह याज्ञवल्क्य आवव्राज तꣳ होवाच याज्ञवल्क्य किमर्थमचारीः पशूनिच्छन्नण्वन्तानि-त्युभयमेव सम्राळिति होवाच ॥ १ ॥**

आगतानामृषीणां मध्ये यो ब्रह्मिष्ठस्तं गुरुत्वेन वरीतुं श्रेष्ठत्वनिर्णयाय हि कथायां कारितायां याज्ञवल्क्यस्य श्रेष्ठत्वेऽवधारिते सति तं गुरुत्वेन जनको वव्र इत्याहात्राध्याये । वैदेहो विदेहदेशाधीशो जनकनामा आसाञ्चक्रे बभूव ह किल अव्यग्रमना आसीदिति यावत् । अथ तदा । याज्ञवल्क्य आवव्राज आजगाम । तं होवाच जनक इत्यनुषङ्गः । अचारीः पर्यटनमकार्षीः । सम्भावितं कोटिद्वयं स्वयमेवोट्टङ्कयति– **पशूनिति** ॥ किं पशूनिच्छन्नुताण्वन्तान् वक्तुमिति शेषः । इत्युवाच जनक इत्यन्वयः । [1]अण्वन्तानित्यस्याणु-र्भगवान् । तद्विषयान् निर्णयानित्यर्थः । उभयं पशूनण्वन्तवचनं चेत्युभयमु-द्दिश्यैव सञ्चरामि हे सम्राडिति होवाच याज्ञवल्क्यः ॥ ६-१-१ ॥

[वाङ्नामकभगवदुपासना]

**यत्ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे जित्वा शैलिनिर्वाग्वै ब्रह्मेति यथा मातृमान् [2]पितृमानाचार्यवान् ब्रूयात्तथा तच्छैलिनोऽब्रवीद् वाग्वै ब्रह्मेत्यवददतो हि किं स्यादित्य-ब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एत-**

---

१. अणोः अन्तः अण्वन्तः । तान् । अणुविषयकनिर्णयान् इत्यर्थः । अन्तशब्दोऽत्र निर्णयवाची । 'उभयोरपि दृष्टोऽन्त' इत्यादौ तथा श्रवणात् । २. **'पितृमान्'** इति नास्ति- ख. ।

**त्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य वागेवायतनमाकाशः प्रतिष्ठा प्रज्ञेत्येनदुपासीत का प्रज्ञता याज्ञवल्क्य वागेव सम्राळिति होवाच वाचा वै सम्राळ् बन्धुः प्रज्ञायत ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानीष्टꣳ हुतमाशितं पायितमयं च लोकः परश्च लोकः सर्वाणि च भूतानि वाचैव सम्राट् प्रज्ञायन्ते वाग्वै सम्राट् परमं ब्रह्म नैनं वाग्जहाति सर्वाण्येनं भूतान्यभिरक्षन्ति देवो भूत्वा [१]देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ २ ॥**

यद्यण्वन्तान् वक्तुमागतस्तर्हि मह्यमुपदिशेति राज्ञा प्रार्थितो याज्ञवल्क्यः । अन्येभ्यः श्रुतादप्यधिकं विवक्षुरन्येभ्यो विदितमनुवदेत्याह– **यदिति** ।। ते तुभ्यं कश्चिज्ज्ञानी यदब्रवीत् तत्तावद्वयं शृणवामेत्युवाच याज्ञवल्क्यः । एवमुक्तो राजा वक्ति– **अब्रवीदिति** ।। मे मह्यं शिलिनस्यापत्यं शैलिनो। जित्वानामा मुनिः । ब्रह्म गुणपूर्णं। वक्तृत्वहेतुना वाङ्नामकमब्रवीत् इत्याह जनकः। शैलिनोपदिष्टं स्तोतुं याज्ञवल्क्यः तस्य आप्तत्वमाह– **यथेति** ।। मातृपित्राचार्यशिक्षितः पुरुषो यथा स्वशिष्याय ब्रूयात् तथा तत् वाग्वै ब्रह्मेत्येतदब्रवीत् । वाग्वै ब्रह्मेत्येतदुपपादयति । अवदतो वक्तृत्वहीनस्य किं फलं स्यात् न किमपि । अतो वक्तृत्वदातृत्वाद्वाक् ब्रह्मेत्यर्थः । इत्युवाच याज्ञवल्क्य इत्यन्वयः । तस्य वाङ्नामकस्य हरेः आयतनं स्थानं प्रतिष्ठां प्रतिमां ते तुभ्यमब्रवीत् । तुशब्दः काक्वर्थे । अब्रवीत्किमित्यर्थः । एवं

---

१. देवान् क्रीडादिगुणसम्पन्नश्वेतद्वीपादिस्थितभगवद्रूपविशेषान्-भा.बो. ।

याज्ञवल्क्येन पृष्टो राजोवाच– **न मेऽब्रवीदिति** ॥ तं प्रति मुनिराह। हे सम्राट् एतत् जित्वोपदिष्टं उपास्यस्य हरेर्वाङ्नामकत्वमेकपाद्वै इति । आयतनप्रतिमादेर्मुमुक्षुणा ज्ञेयत्वात्तस्य चानुपदेशादसम्पूर्णमेतदित्यर्थः। एवमुक्तः स सम्राडाह– **स इति** ॥ हे याज्ञवल्क्य । स वै ब्रह्मिष्ठत्वेन प्रसिद्धस्त्वं नोऽस्मभ्यं ब्रूहि। आयतनादिकमिति शेषः। एवमुक्तो मुनिराह– **वागेवेति**॥ प्रसिद्धवागिन्द्रियमेवायतनमधिष्ठानम् । आकाशः आसमन्तादीप्तत्वादाकाशनाम्नी रमा प्रतिष्ठा प्रतिमा । एतत् एतत्प्रज्ञेत्युपासीत । राजाह– **का प्रज्ञतेति** ॥ धर्मधर्मिणोरभेदबुद्ध्योत्तरमाह– **वागेव सम्राडिति होवाचेति** ॥ वाङ्नामकं भगवद्रूपमेवेत्यर्थः। तस्य प्रज्ञतामुपपादयति– **वाचेति**॥ वाचा वै वाङ्नामकभगवद्रूपेण वै बन्धुः प्रज्ञायते। को बन्धुरित्यत आह– **ऋगिति**॥ ऋगादेर्बन्धुत्वमिष्टोपायबोधकत्वेन ज्ञेयम्। ऋगादिपदार्थाः व्यक्ताः। [१]विद्येत्यमिताक्षरं पञ्चरात्रमुच्यते । श्लोकपदेन मिताक्षरं पञ्चरात्रमुच्यते । सूत्राणि ब्रह्मसूत्रादीनि। अनुव्याख्यानपदेन वेदव्याख्यानबृहत्तर्कादिविस्तारग्रन्थसङ्ग्रहः। व्याख्यानपदेन ब्रह्मतर्कादि वेदव्याख्यानसङ्ग्रहः। इष्टं यजनम्। हुतं दानम्। अशितं अन्नदानम्। पायितं जलपानम्। अयं च भूम्यादिलोकः। परश्च स्वर्गादिलोकः । सर्वाणि भूतानि वाचैव प्रज्ञायन्ते । निगमयति– **वाग्वा इति** ॥ एवमुपासकस्य फलमाह– **नैनमिति** ॥ योऽधिकारी। एवमायतनादियुक्तत्वेन वाङ्नामकम् । एतत् परमं ब्रह्म । विद्वानुपास्ते। एनमधिकारिणं वाक् वाङ्नामकं ब्रह्म न जहाति। सः देवान् देवत्वं अप्येति प्राप्नोति । ततो देवो भूत्वा स्वोत्तमदेवसायुज्यमाप्नोति । ततो ब्रह्मणा सह भगवन्तं प्राप्नोतीत्यर्थः । तत्र मुक्तौ सर्वाणि भूतानि तदवरमुक्तचेतनानि

---

१. अत्र भाष्यवाक्यान्यनुसन्धेयानि-'अमिताक्षरं पञ्चरात्रं विद्येत्याहुर्मनीषिणः। मिताक्षरं श्लोकवाच्यमुभयं वेद ईर्यते॥ इति ब्रह्माण्डे॥ सूत्रं तु ब्रह्मसूत्राख्यं महामीमांसिका तथा। तथा साङ्कर्षणं सूत्रं ब्रह्मतर्कादयस्तथा। प्रकाशिका निर्णयश्च तत्त्वनिर्णय एव च॥ व्याख्येति कथिताः सर्वाः स्वयं भगवता कृताः। बृहत्तर्कादयः सर्वा अनुव्याख्याः प्रकीर्तिताः॥ इति प्रतिसङ्ख्याने।

एनं मुक्तमभिक्षरन्ति सर्वभोगानुदुहन्तीत्यर्थः । देवत्वायोग्यो मनुष्यश्चेत्तज्ज्ञानी तदा देवलोकस्थः सन्देवसायुज्यं प्राप्य स्वावरैः पूज्यत इति ज्ञेयम् । एवमुपदिष्टः सम्राट् क्षत्रियत्वात्स्वोचितगुरुदक्षिणादानप्रतिज्ञामकरोदित्याह– **हस्त्यृषभ-मिति** ।। द्वन्द्वैकवद्भावः । सहस्रं संहस्रसङ्ख्योपेतं । किमुवाचेत्यत आह– **पिता मेऽमन्यतेति** ।। अननुशिष्य शिष्यायोपदेष्टव्यं सर्वमनुपदिश्य । गुरुदक्षिणां नाहरेता न गृह्णीयादिति । मे पिता अमन्यत व्यजानात् । अतः समग्रमुपदिश्य गृह्णामीत्युवाच याज्ञवल्क्य इत्यर्थः ।। ६-१-२ ।।

[प्राणनामकविष्णूपासना]

**यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्म उदङ्कः शौल्बायनः प्राणो वै ब्रह्मेति यथा मातृमान् पितृमानाचार्यवान् ब्रूयात्तथा तच्छौल्बायनोऽब्रवीत्प्राणो वै ब्रह्मेत्यप्राणतो हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य प्राण एवायतनमाकाशः प्रतिष्ठा प्रियमित्येनदुपासीत का प्रियता याज्ञवल्क्य प्राण एव सम्राळिति होवाच प्राणस्य वै सम्राट् कामायायाज्यं याजयत्यप्रतिगृह्यस्य प्रतिगृह्णात्यपि तत्र वधाशङ्कं भवति यां दिशमेति प्राणस्यैव सम्राट् कामाय प्राणो वै सम्राट् परमं ब्रह्म नैनं प्राणो जहाति सर्वाण्येनं भूतान्यभिरक्षन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्र ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ।। ३ ।।**

यदेवेत्यादिखण्डपञ्चकेऽप्येवमेव पश्नोत्तररूपतया योजना ध्येया । शुल्बायनस्यापत्यं शौल्बायनः । उदङ्को नामतः । ब्रह्म प्राणो वै जगत्प्रणयनात्प्राणशब्दितं

वै । प्रसिद्धं इत्यब्रवीदुदङ्क इत्यन्वयः । अप्राणतः उच्छ्वासनिःश्वासरहितस्य । तद्व्यापारकर्तृप्राणशब्दितभगवद्रूपहीनस्येति वा । किं स्यात्? न किमपि । प्रवृत्तिमात्रपरिलोपः स्यादित्यर्थः । प्राण एव प्राणापानादिरूपो वायुरेवायतनं स्थानम् । एनत्प्राणनामकं प्रियमित्युपासीत । तस्य प्रियत्वमुपपादयति– **प्राणस्यैवेति** ॥ हे सम्राट्, प्राणस्थस्य प्राणनाम्नो हरेरेव कामाय सम्प्रीत्यै भोजनं भवेदिति शेषः । तादृशभोगार्थमेवाज्ञोऽपि जनः प्राणस्य प्राणनाम्नो हरेः कामाय इच्छयैवायाज्यं शूद्रादिकमपि याजयति । अप्रतिगृह्यस्य प्रतिग्रहानर्हस्य सकाशात्प्रतिगृह्णाति । प्राणस्य कामेन यां दिशमेति तत्र वधाशङ्कं चौर्यकर्म भवत्यतः प्राणः प्रियः इत्यर्थः । वध आशङ्क्यते येन कर्मणा तद्वधाशङ्कमिति व्युत्पत्त्या चौर्यकर्म वधाशङ्कपदार्थः । निगमयति– **प्राणो वै सम्राट् परमं ब्रह्मेति ॥ नैनं प्राण इति** ॥ प्राणः प्राणस्थः तन्नामा हरिर्न जहातीत्यर्थः ॥ ६-१-३ ॥

[सर्वदर्शनाद् ब्रह्म चक्षुर्नामकम्]

**यदेव ते कश्चिदब्रवीत्तच्छृणवाम्नेत्यब्रवीन्मे बर्कुर्वार्ष्णश्चक्षुर्वै ब्रह्मेत्यपश्यतो हि किं स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राळिति स वै नो ब्रूहि याज्ञवल्क्य चक्षुरेवायतनमाकाशः प्रतिष्ठा सत्यमित्येनदुपासीत का सत्यता याज्ञवल्क्य चक्षुरेव सम्राळिति होवाच चक्षुषा वै सम्राट् पश्यन्तमाहुरद्राक्षीरिति स आहाद्राक्षमिति तत्सत्यं भवतिचक्षुर्वै सम्राट् परमं ब्रह्म नैनं चक्षुर्जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रं ददामीति होवाच जनको ह वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत**

**नाननुशिष्य हरेतेति ॥ ४ ॥**

वृष्णस्यापत्यं वार्ष्णः बर्कुर्नामतः । ब्रह्म चक्षुर्वै सर्वदर्शनाच्चक्षुर्नामकं वै अपश्यतः दर्शनादिपदचक्षुर्नामकहरिहीनस्य किं स्यात् । जाग्रद्दर्शनहेतुभूतस्य विश्वाख्यस्य भगवद्रूपस्य चक्षुःस्थस्याभावे पदार्थदर्शनमात्रलोपेन प्रवृत्त्यादिर्न स्यादिति भावः । चक्षुरेव चक्षुरिन्द्रियमेवायतनं स्थानम् । चक्षुःस्थस्य हरेः सत्यत्वमुपपादयति– **चक्षुषेति** ॥ चक्षुषा चक्षुर्नामकेन तत्स्थेन विश्वाख्यरूपेण तत्प्रेरणयेति यावत् । पश्यन्तं पुरुषं प्रत्याहुः । अन्ये पुरुषा अद्राक्षीरिति स पश्यन् पुरुष आह– **अद्राक्षमिति** ॥ पुनर्दृष्टं चेत्तद्वस्तु सत्यं यथास्थितं भवत्यतः चक्षुर्नामकस्य हरेः यथार्थज्ञानहेतुत्वाच्चक्षुःस्थं ब्रह्म सत्यं भवतीत्यर्थः । अत्र चक्षुःस्थविश्वाख्यरूपस्य सत्यार्थविषयकदर्शनहेतुत्वोक्त्या सत्यत्वोपपादनमुपलक्षणम् । शब्द[१]स्पर्शरूप-रसगन्धादिज्ञानहेतुत्वाच्च सत्यत्वं ध्येयम् । अत एव चक्षुःस्थविश्वरूपस्य कण्ठस्थानागमने सति चक्षुर्निमीलनं सर्वबाह्येन्द्रियव्यापारोपरतिश्च भवतीति ज्ञेयम्– **नैनमिति** ॥ एनमुपासकम् । चक्षुर्नामकं चक्षुःस्थं ब्रह्म न जहातीत्यर्थः ॥ ६-१-४ ॥

[श्रवणशक्तिदत्वात् श्रोत्रं ब्रह्म]

**यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे गर्दभी विपीतो भारद्वाजः श्रोत्रं वै ब्रह्मेति यथा मातृमान् पितृमानाचार्यवान् ब्रूयात्तथा तद् भारद्वाजोऽब्रवीच्छ्रोत्रं वै ब्रह्मेत्यशृण्वतो हि किं स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदि-त्येकपाद्वा एतत्सम्राळिति स वै नो ब्रूहि याज्ञवल्क्य श्रोत्रमेवायतनमाकाशः प्रतिष्ठानं त इत्येनदुपासीत काऽनन्तता याज्ञवल्क्य दिश एव सम्राळिति होवाच तस्माद् वै सम्राळपि**

१. 'स्पर्श' इति नास्ति-ख. ।

**यां कां च दिशं गच्छति नैवास्या अन्तं गच्छत्यनन्ता हि दिशः दिशो वै सम्राट् श्रोत्रꣳ श्रोत्रं वै सम्राट् परमं ब्रह्म नैनꣳ श्रोत्रं जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभꣳसहस्रं ददामीति होवाच जनको ह वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ५ ॥**

गर्दभी गर्दभदेशीयः। विपीतो नामतः। भरद्वाजस्यापत्यं भारद्वाजः। ब्रह्म श्रोत्रं वै श्रवणशक्तिदत्वाच्छ्रोत्रनामकं वै इत्यब्रवीदित्यन्वयः। अशृण्वतः श्रवणव्यापारदातृ भगवद्धीनस्य किं स्यात्। सच्छास्त्रश्रवणादेरसम्भवादतस्तद्दातृत्वाच्छ्रोत्रं ब्रह्मेत्यर्थः। श्रोत्रमेव श्रोत्रेन्द्रियमेवायतनं स्थानम्। **दिश एवेति** ॥ दिक्षु स्थितो दिङ्नामा विष्णुरेवेत्यर्थः। दिगन्तर्गतस्य विष्णोरनन्तत्वमुपपादयति– **तस्मादिति** ॥ हे सम्राळ्, हि यतो दिशोऽनन्ताः दिक्षु स्थितो दिङ्नामा विष्णुः सर्वव्यापी। तस्माद्वै तस्मादेव यः कोऽपि यां कां च दिशं तन्नामक-भगवदधिष्ठितां दिशं गच्छति। अस्या दिशोऽन्तमवसानं न गच्छतीत्यर्थः। यदधिष्ठितदिशामेवानन्तत्वं सोऽनन्त इति किमु वाच्यमिति भावः। ननु दिङ्-नामकस्य दिक्षु स्थितस्य हरेरनन्तत्वे श्रोत्रान्तःस्थस्य चानन्तत्वेनोपासनं कथमित्यत आह– **दिशो वै सम्राट् श्रोत्रमिति** ॥ दिक्षु स्थितमेव रूपं श्रोत्रस्थमित्यर्थः। एनमुपासकं श्रोत्रं श्रोत्रस्थं तन्नामकं ब्रह्म न जहातीत्यर्थः ॥

[मन्तृत्वतो ब्रह्म मनः]

**यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे सत्यकामो जाबालो मनो वै ब्रह्मेति यथा मातृमान् पितृमानाचार्यवान् ब्रूयात्तथा तज्जाबालोऽब्रवीन्मनो वै ब्रह्मेत्यमनसो हि किꣳ स्यादि-त्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद् वा**

**एतत्सम्राळिति स वै नो ब्रूहि याज्ञवल्क्य मन एवायतनमाकाशः प्रतिष्ठाऽऽनन्द इत्येनदुपासीत काऽऽनन्दता याज्ञवल्क्य मन एव सम्राळिति होवाच मनसा वै सम्राट् स्त्रियमभिहार्यते तस्यां प्रतिरूपः पुत्रो जायते स आनन्दो मनो वै सम्राट् परमं ब्रह्म नैनं मनो जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभं सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ६ ॥**

जबालाया अपत्यं जाबालः सत्यकामो नामतः । ब्रह्म मनो वै मन्तृत्वतो मनोनामकं वै इत्यब्रवीदित्यन्वयः । अमनसः मननशक्तिदातृ मनोनामक-भगवद्रूपहीनस्य किं स्यात् । मननादेरसम्भवात् । मन एव मनोरूपेन्द्रियमेवा-यतनम् । एनन्मनोनामकं ब्रह्म आनन्दः आनन्दहेतुरित्युपासीत । आनन्दता आनन्दहेतुता । मनोगतस्य हरेरानन्दहेतुत्वमुपपादयति– **मनसेति** ॥ [१]मनसा मनोनामकभगवदधिष्ठितेन मनसा । पुमान् स्त्रियमभिहार्यते अभिगच्छति । तस्यां स्त्रियां प्रतिरूपोऽनुरूपः पुत्रो जायते । स जातः पुत्रः आनन्दः आनन्दहेतुः । एवं यदधिष्ठितमनोव्यापारेण जातः पुत्रः सुखहेतुः स आनन्दरूपो हरिः सुखहेतुरिति किमु वाच्यमित्यर्थः । एनमुपासक म् । मनो मनोनामकं मनःस्थं ब्रह्म न जहातीत्यर्थः ॥ ६-१-६ ॥

[हृद्ययनात् ब्रह्म हृदयम्]

**यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे विदग्धः शाकल्यो हृदयं वै ब्रह्मेति यथा मातृमान् पितृमानाचार्यवान् ब्रूयात्तथा**

---

१. '**मनसा**' इति नास्ति-ख. ।

**तच्छाकल्योऽब्रवीद्धृदयं वै ब्रह्मेत्यहृदयस्य किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद् वा एतत्सम्राळिति स वै नो ब्रूहि याज्ञवल्क्य हृदयमेवायमायतनमाकाशः प्रतिष्ठा स्थितिरित्येनदुपासीत का स्थितता याज्ञवल्क्य हृदयमेव सम्राळिति होवाच हृदयं वै सम्राट् सर्वाणि भूतानि प्रतिष्ठितानि भवन्ति हृदयं वै सम्राट् परमं ब्रह्म नैनꣳ हृदयं जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभꣳसहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ७ ॥**

इति षडाचार्यब्राह्मणम् ॥ ६-१ ॥

विदग्धो नामतः । शकलस्यापत्यं शाकल्यः । ब्रह्म हृदयं वै । हृद्ययत इति व्युत्पत्त्या हृदयनामकं वै इत्यब्रवीत् । अहृदयस्य बुद्धिहेतुहृदयनामकभगवद्धीनस्य किं स्यात्? न किमप्यतो बुद्धिदातृत्वाद् हृदयं ब्रह्मेत्यर्थः। हृदयं प्रसिद्धमेवायतनं स्थानं स्थितिहेतुरित्यर्थः । स्थितता स्थितिहेतुता। उत्तरमाह– **हृदयमेवेति** ॥ हृदयनामकं हृदयगतमेव । हृदये सर्वशो व्याप्तं प्रादेशपरिमितम् । तथा हृत्कर्णिकामूलगतं अङ्गुष्ठाग्रप्रमाणकम् । तथा हृत्कर्णिकाग्रगतमङ्गुष्ठमात्रपरिमितं चेति भगवद्रूपत्रयमेव स्थितिहेतुरित्यर्थः । आद्यस्य हृदयनाम्नो हरेः स्थितिहेतुत्वमुपपादयति– **हृदयं वा इति** ॥ हृदयं हृदयनामक म् । हृदयमभिव्याप्य स्थितम् । प्रादेशपरिमितं रूपं सर्वेषां भूतानामायतनं स्थानं वै । द्वितीयतृतीयरूपयोः स्थितिहेतुतामुपपादयति– **हृदयं वा इति** ॥ हृत्कर्णिकामूलगतम् । हृत्कर्णिकाग्रगतं च सर्वेषां भूतनां प्रतिष्ठाधारकं सदा सुप्तौ चेति ज्ञेयम् । तद् व्यनक्ति– **हृदये ह्येवेति** ॥ हृत्कर्णिकामूलगते विष्णुरूप एव सर्वाणि भूतानि सदा प्रतिष्ठितानि भवन्ती-

त्यर्थः। तथा हृदये हृदयनाम्नि कर्णिकाग्रगते हरौ सर्वाणि भूतानि विशेषतोऽपि सुप्तौ प्रतिष्ठितानि भवन्तीत्यर्थः एनमुपासकं हृदयं हृदयनामकं रूपं न जहातीत्यर्थः । शिष्टं प्राग्वत् ॥ ६-१-७॥

इति षडाचार्यब्राह्मणम् ॥ ६-१ ॥

## अथ कूर्चब्राह्मणम्

[मुक्तिजनकतत्वज्ञानाय जनकप्रार्थना]

**जनको ह वैदेहः कूर्चादुपावसर्पन्नुवाच नमस्तेऽस्तु याज्ञवल्क्यानु मा शाधीति स होवाच यथा वै सम्राण्महान्तमध्वानमेष्यन् रथं वा नावं वा समाददीतैवमेवैताभिरुपनिषद्भिः समाहितात्माऽस्येवं वृन्दारक आढ्यः सन्नधीतवेद उक्तोपनिषत्क इतो विमुच्यमानः क्व गमिष्यसीति नाहं तद्भगवान् वेद यत्र गमिष्यामीत्यथ वै तेऽहं तद् वक्ष्यामि यत्र गमिष्यसीति ब्रवीतु भगवानिति ॥ १ ॥**

जनको ह वैदेहः स्वयोग्यरूपज्ञानं श्रोतुं कूर्चात्सिंहासनादवरुह्य उपावसर्पन् उपसत्तिं कुर्वन् कृत्वेति यावत् । उवाच तदाह– **नम इत्यादि** ॥ अनु अनुरूपं मम योग्यज्ञानं यथा भवति तथा मा मां शाधि शिक्षयेत्युवाचेत्यर्थः। एवमुक्तो याज्ञवल्क्यः मुक्तौ यत्स्वात्मना प्राप्यं तद्रूपमुपास्यैव मुक्तो भवतीति भावेन प्राप्यं पृष्टवानसि किमिति राजानं पृच्छति हे सम्राट्, यथा कश्चित्त्वादृशः सम्राट् राजा महान्तमध्वानं मार्गं स्थले जले वा एष्यन् गच्छन् यथाक्रमं रथं नावं वा समाददीत एवमेवैताभिः पूर्वोक्ताभिः वाग्वै ब्रह्मेत्यादिभिरुपनिषद्भिः समाहितात्मा स्वस्थमानसः असि । एवं दृश्यमानप्रकारेण वृन्दारकः वृन्दैः भृत्यादिसङ्घैः प्राप्यतमः आढ्यः धनी सन्नप्यधीतवेदः उक्तोपनिषत्कः व्याख्यातोपनिषत्कः त्वमित्यतः संसाराद्विमुच्यमानः क्व गमिष्यसीति पृष्टो

राजा वक्ति– **नाहमिति** ॥ यत्र गमिष्यामि तन्मया प्राप्यं अहं न वेदेत्युवाच राजेत्यर्थः । मुनिराह– **अथेति** ॥ एवं तर्हीत्यथशब्दार्थः। ते तुभ्यम् । राजा वक्ति– **ब्रवीतु भगवानिति** ॥ ६-२-१ ॥

[दक्षिणेऽक्षणि विद्यमानः दीप्तत्वादिन्धाभिधो विष्णुः इन्द्रनाम्ना व्यवह्रियते]

**इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन् पुरुषस्तं वा एतमिन्धꣳ सन्तमिन्द्र इत्याचक्षते परोक्षेणैव परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः ॥ २ ॥**

मुनिरुपदिशति– **इन्ध इति** ॥ योऽयं प्रसिद्धः सर्वेषां दक्षिणेऽक्षन् अक्षणि वर्तमानः पुरुषः दीप्तत्वादिन्धो वै नाम प्रसिद्धः । एष मुक्तौ राजभिः प्राप्यः । अतः स एव तद्धृदिस्थः उपास्यः । तं राजहृदयान्तर्गतम् । एतं दक्षिणाक्षिस्थम् । इन्धनामानं सन्तं इन्द्र इति परोक्षेणाप्रसिद्धनाम्ना आचक्षते देवाः । कुत एवमाहुरित्यत आह– **परोक्षेति** ॥ हि यस्माद्देवाः परोक्षप्रियाः । अप्रसिद्धनाम्नैव भगवदुपदेशप्रियाः । प्रत्यक्षद्विषः प्रसिद्धनाम्ना हरेरुपदेशद्वेषिणः । प्रत्यक्षोपदेशे अयोग्यानामपि ज्ञानप्राप्तेः तेषां सम्यग्ज्ञानाभावस्य देवानां प्रियत्वादिति भावः । तदाह सूत्रे 'अनाविष्कुर्वन्नन्वयात्' (ब्र.सू. ३-४-४९) इति । साधून्प्रति प्रत्यक्षोपदेशस्येष्टत्वात्परोक्षप्रिया इवेतीवशब्दः ॥ २ ॥

[दक्षिणाक्षिगतभगद्रूपमहिमा]

**अथैतद्वामेऽक्षिणि पुरुषरूपमेषास्य पत्नी विराट् तयोरेष सꣳस्तावो य एषोऽन्तर्हृदय आकाशोऽथैनयोरेतदन्नं य एषोऽन्तर्हृदये लोहितपिण्डोऽथैनयोरेतत्प्रावरणं यदेदन्तर्हृदये जालक-मिवाथैनयोरेषा सृतिः सञ्चरणीयैषा हृदयादूर्ध्वा नाड्युच्चरति यथा केशः सहस्रधा भिन्न एवमस्यैता हिता**

**नाम नाड्योऽन्तर्हृदये प्रतिष्ठिता भवन्त्येताभिर्वा एतदास्रवति तस्मादेष प्रविविक्ताहारतर इवैव भवत्यस्माच्छारीरादात्मनः ॥ ३ ॥**

दक्षिणाक्षिगतभगवद्रूपमहिमानं उपास्यान्तरोक्तिपूर्वमाह– **अथेति** ॥ अन्यदपीत्यथशब्दार्थः । एतत् वामे अक्षणि स्थितपुरुषरूपं चोपास्यमिति शेषः । एषा प्रसिद्धा विराट्नाम्नी श्रीरस्याक्षिस्थस्य हरेः पत्नी । तयोरिन्द्रविराजोरेष संस्तावः सर्ववेदरूपस्तुतिः य एषोऽन्तर्हृदय आकाशः आ समन्तात्काशमानः कर्णयोः पिधाने सति सर्वजीवानां घोषात्मना प्रतीयमान इति यावत् । एष संस्ताव इति पूर्वेणान्वयः । अथ य एष प्रसिद्धो हृदये हृत्कमलरूपे लोहितपिण्डः कर्णिकारूपः स एनयोरिन्द्रविराजोरन्नं तत्र स्थित्वाऽन्नस्यादनाद्धेतोरन्नमित्युच्यते । अथ यदेतत्प्रसिद्धं हृदयेऽन्तर्जालकमिव स्थितं वपारूपं तदेनयोः पूर्वोक्तेन्द्रविराजोः प्रावरणमन्तर्वस्त्रस्थानीयम् । अथ या एषा हृदयाद्धृदयमारभ्योर्ध्वनाडी ऊर्ध्वब्रह्मरन्ध्रपर्यन्तं वर्तते । एषा एनयोः संचरणी संचरणहेतुभूता सृतिर्मार्गः । हृदयलोहितपिण्डे स्थितस्य हरेराहारं वक्तुमाह– **यथेति** ॥ यथा केशः सहस्रधा भिन्नः अस्य जीवस्य हृदयेऽन्तः प्रतिष्ठिता भवन्ति । एताभिः हितानामकनाडीभिः । एतत् मस्तकस्थितममृतमास्रवत् स्रवत्स्वभावमास्रवति स्यन्दते आगच्छति । [1]तदत्ति इन्धनामा हरिरिति योज्यम् । तस्मात्तददनादेष इन्धः अस्माच्छारीरादात्मनो जीवात् प्रविविक्ताहारतरो विलक्षणाहार एव भवति । 'अवतारेषु स्थूलमपि भुङ्क्ते इति' [2]इवशब्दः । व्याख्यातमेतत्सप्तमे गीताभाष्ये[3] (गी.भा.७-२२) ॥ ६-२-३ ॥

---

१. '**अतिशयेन**'- ख. । २. जीवभोग्यस्येशभोग्यत्वेऽपि ईशभोग्यस्य जीवभोग्यत्वाभावाद्वा इव शब्दः । ३. 'आह च सूक्ष्माशनम् । 'प्रविविक्ताहारतर इवैव भवत्यस्माच्छरीरादात्मनः 'प्रविविक्तभुग्यतो ह्यस्माच्छारीरात्पुरुषोत्तमः । अतोऽभोक्ता च भोक्ता च स्थूलभुग्यत एव तु ॥' इति ॥ अत्र प्रमेयदीपिका–गन्धादिषु यो जीवेन्द्रियागोचरः सारभागस्तस्य भोगं परमेश्वरोऽस्माच्छरीरादात्मनो जीवादतिशयेन विलक्षणभोग एव भवति । अवतारेषु स्थूलमपि भुङ्क्ते इतीवशब्दः ।

**तस्य प्राची दिक् प्राञ्चः प्राणा दक्षिणा दिक् दक्षिणाः प्राणाः प्रतीची दिक् प्रत्यञ्चः प्राणा उदीची दिगुदञ्चः प्राणा ऊर्ध्वा दिगूर्ध्वाः प्राणा अवाची दिगवाञ्चः प्राणाः सर्वा दिशस्सर्वे प्राणाः स एष नेति नेत्यात्माऽगृह्यो नहि गृह्यतेऽशीर्यो नहि शीर्यते असङ्गो नहि सज्यतेऽसितो न व्यथते न रिष्यत्यभयं वै जनक प्राप्तोऽसीति होवाच याज्ञवल्क्यः स होवाच जनको ह वैदेहोऽभयं त्वागच्छता-द्याज्ञवल्क्य यो नो भगवन्नभयं वेदयसे नमस्तेऽस्त्विमे विदेहा अयमहमस्मि ॥ ४ ॥**

इति कूर्चब्राह्मणम् ॥ ६-२ ॥

चतुर्दिक्षु इन्धस्य सेवकानाह– **तस्येत्यादिना** ॥ प्राञ्चः प्राचीदिगवस्थिताः प्रणेतृत्वहेतुना प्राणनामकाः इन्द्राग्नी तद्भार्ये चेति चत्वारः । तस्य हरेः प्राची दिक् प्राच्यां दिशि तिष्ठन्तीत्यर्थः । अत्र प्राच्यादिपदेन सकोणाश्चतस्रो दिशो विवक्षिता इति ज्ञेयम् । एवमग्रेऽपि योजना ध्येया । दक्षिणाः दक्षिणदिशि स्थिताः प्राणनामानः यमनिर्ऋती तद्भार्ये चेति चत्वारः । प्रत्यञ्चः प्रतीचीदिक्स्थिताः प्राणाः वरुणवायू तद्भार्ये इति चत्वारः । उदञ्चः उत्तरदिक्स्थिताः सोमेशानौ तद्भार्ये चेति चत्वारः । ऊर्ध्वाः ऊर्ध्वदिगवस्थिताः प्राणाः चतुर्मुखमुख्यवायू तद्भार्ये चेति चत्वारः । अवाञ्चः अधोदिगवस्थिताः शेषकामौ तद्भार्ये चेति चत्वारः अवाक् दिशि प्रतितिष्ठन्तीत्यर्थः । एवमुक्तदिशा सर्वे प्राणा इन्द्राद्याः । सर्वदिक्षु स्थिताः । हरिपरिवारतया तिष्ठन्तीत्यर्थः । इन्धस्य महिमान्तरमाह– **स एष इत्यादिना** । व्याख्यातमिदं वाक्यं पूर्वाध्याये शाकल्यब्राह्मणान्त्यभागे । हे जनक त्वं अभयं संसारभयाभावं [१]प्राप्तोऽसीति होवाच याज्ञवल्क्यः । एवमुक्तो राजोवाच । हे भगवन् याज्ञवल्क्य

यत्त्वत्प्रसादान्नोऽस्माकं अभयं वेदयसे प्रापयसि । तत्त्वा त्वां गच्छतात् । त्वत्प्रसादादागतमभयं त्वत्तृप्तयेऽस्तु । नान्यद् वयं तव प्रतिकर्तुं शक्नुम इत्यर्थः । ते तुभ्यं नमोऽस्तु । इमे मदीयाः विदेहाः विदेहदेशास्तव । अयमहं तवास्मि । तव भृत्योऽस्मीत्युवाचेत्यन्वयः ॥ ६-२-४ ॥

इति कूर्चब्राह्मणम् ॥ ६-२ ॥

## अथ ज्योतिर्ब्राह्मणम्

[अवस्थात्रये स्वर्गे मुक्तावपि भगवानेव ज्ञानप्रदः]

**जनकं ह वैदेहं याज्ञवल्क्यो जगाम स मेने न वदिष्य इत्यथ ह यज्जनकश्च वैदेहो याज्ञवल्क्यश्चाग्निहोत्रे समूदाते तस्मै ह याज्ञवल्क्यो वरं ददौ स ह कामप्रश्नमेव वव्रे तꣳ हास्मै ददौ तꣳह सम्राळेव पूर्वः पप्रच्छ ॥ १ ॥**

विद्यान्तरमाह– **जनकमित्यादिना** ॥ जनकं ह वैदेहं प्रति याज्ञवल्क्यः जगाम । किमर्थमित्यत आह– **समिति** ॥ एनेन अनेन राज्ञा । संवदिष्ये संवादं करिष्ये । इति तेन संवादार्थं स्वयमेव कुतो जनकं प्रत्यगमदित्यत आह– **अथ हेति** ॥ यद्यस्माज्जनकश्च याज्ञवल्क्यश्च पूर्वमग्निहोत्रगृहे समूदाते संवादं कृतवन्तौ । तदा तस्मै प्रसन्नः सन्मुनिर्वरं ददौ । स राजा स्वयमेवागमनं कामप्रश्नमेव वरं च ययाचे ह किल । तं याचितं वरमस्मै ददौ । ततः कारणात्स्वयमेवानाहूतो जगामेत्यर्थः । एवं वरस्य दत्तत्वाद्यथेष्टं पृच्छेति याज्ञवल्क्योक्त्यनन्तरं यद्यपि प्रष्टव्यं तथाप्यौत्सुक्यवशात्तं सम्राळेव पूर्वः पूर्वं पप्रच्छ प्रश्नमकरोत् ॥ ६-३-१ ॥

---

१. जनकस्य निश्चितमोक्षत्वात्प्राप्तोऽसीत्युक्तम् । 'एष्यत्तु निश्चितं यत्स्यादतीतत्वेन भण्यते' इति भागवततात्पर्योक्तेः ।

**याज्ञवल्क्य किं ज्योतिरयं पुरुष इत्यादित्यज्योतिः सम्राडिति होवाचादित्येनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद् याज्ञवल्क्य ॥ २ ॥**

तदाह– **याज्ञवल्क्येति** ॥ अयं पुरुषः संसारिजीवः । किं ज्योतिर्ज्ञानसाधनं यस्य स किंज्योतिरिति बहुव्रीहिः । किमस्य ज्ञानसाधनमित्यर्थः । इति पृष्ट उत्तरमाह मुनिः – **आदित्यज्योतिरिति** ॥ बहुव्रीहिरयमपि । एवमग्रेऽपि । ज्योतिःशब्दोऽत्र ज्ञानसाधनपरो ध्येयः । हेति शब्दः आदित्यस्य ज्योतिष्ट्व-प्रसिद्ध्यर्थः । एवमग्रेऽपि । तदेवोपपादयति– **आदित्येनैवेति** ॥ बाह्यतेजोऽ-न्तरव्यावृत्त्यर्थोऽत्रैव शब्दः सर्वत्र ज्ञेयः । आदित्येन ज्योतिषा अयं जीवः । आस्ते उपविशति । पल्ययते परितो गच्छति कर्म कुरुते । विपल्येति प्रत्यावर्तते । इतिशब्दो हेत्वर्थः । इति हेतोरादित्यज्योतिरयं जीव इत्यर्थः । मुनिनोक्तमर्थमङ्गीकृतवान् राजेत्याह– **एवमेवेति** ॥ ६-३-२ ॥

**अस्तमित आदित्ये याज्ञवल्क्य किंज्योतिरेवायं पुरुष इति चन्द्रमा एवास्य ज्योतिर्भवतीति चन्द्रमसैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद् याज्ञवल्क्य ॥ ३ ॥ अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते किंज्योतिरेवायं पुरुष इत्यग्निरेवास्य ज्योतिर्भवतीत्यग्निनैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद् याज्ञवल्क्य ॥ ४ ॥**

**अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ किं ज्योतिरेवायं पुरुष इति वागेवास्य ज्योतिर्भवतीति वाचैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीति**

**तस्माद् वै सम्राडपि यत्र स्वः पाणिर्न विनिर्ज्ञायतेऽथ यत्र वागुच्चरत्युपैव तत्र ह्येतीत्येवमेवैतद् याज्ञवल्क्य ॥ ५ ॥**

एवमेवोत्तरखण्डचतुष्टयेऽपि प्रश्नप्रतिवचनोपपादनवाक्यानामर्थो ध्येयः । **वागेवेति** ॥ शब्दव्यवहार एवेत्यर्थः । तस्य ज्योतिष्ट्वमप्रसिद्धत्वादुपपादयति– **तस्मादिति** ॥ यत्र देशे । स्वः स्वकीयः । पाणिर्हस्तो । न विनिर्ज्ञायते [1]न ज्ञायते । गाढान्धकारदेश इत्यर्थः । अथ तादृशदशायां यत्र देशे वागुच्चरति आह्वानादिशब्दं करोति । तत्र तं देशं प्रत्युपन्येत्येव । उपगच्छत्येवेति हेतोः वागेव ज्योतिरित्यर्थः ॥ ६-३-५ ॥

**अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किं ज्योतिरेवायं पुरुष इत्यात्मैवास्य ज्योति-र्भवतीत्यात्मानैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीति ॥ ६ ॥**

सुप्तौ ज्ञानहेतुं पृच्छति– **अस्तमित इत्यादिना** ॥ आत्मैव परमात्मैवेत्यर्थः । कथं सुप्तौ हरेः जीवज्योतिष्ट्वमित्यत आदित्यादिज्योतिर्दशायामपि हरिरेव जीवस्य ज्ञानहेतुः सन् गमनागमनादिहेतुः किमु वाच्यं सुप्तौ ज्ञानहेतुरिति भावेनाह– **आत्मनैवायमित्यादि** ॥ ६-३-६ ॥

**कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव स हि स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणि ॥ ७ ॥**

---

१.'न जायते' - क. ।

जीवदेहेन्द्रियादिभ्योऽतिविवेकेनात्मनो प्रसिद्धेः पृच्छति– **कतम इति** ॥ जीवदेहा-दितो विवेकेनात्मानमाह– **योऽयमिति** ॥ यो विज्ञानमयः पूर्णज्ञान-रूपः । प्राणेष्विन्द्रियेषु । हृद्यन्तः जीवहृदयान्तः । ज्योतिर्ज्ञानहेतुः सन्वर्तते पुरुषः । अयमात्मेत्यर्थः । तदाह सूत्रे 'ज्योतिर्दर्शनात्' (ब्र.सू.१-३-४०) इति । तस्म महिमानमाह– **स समान इति** ॥ स आत्मा। समानः निर्विकारः सन्नुभौ लोकौ भूलोकद्युलोकौ। तथा जाग्रत्सुप्तिस्थाने च जीवमादायेति शेषः । अनुसञ्चरति । आत्मनो महिमान्तरमाह– **ध्यायतीवेति** ॥ जीवं ध्याययतीत्यन्तर्णीतो णिजत्रोत्तरत्र च ज्ञेयः । जीवस्य ध्याने स्वातन्त्र्यं हरेरेवेति द्योतनार्थमिवशब्दः । लेलायतीव । ला आदाने। जीवं ग्राहयति आदाय यातीत्यर्थः । स हरिः । स्वप्नो भूत्वा । जीवस्य स्वापको भूत्वा । भूलोकप्रापको भूत्वा च । मृत्यो रूपाणि बहुपापहेतुतया मृत्युरूपात्मकं जाग्रदाख्यं भूलोकाख्यं चातिक्रामति । अतिक्रामयति । जीवं दक्षिणाक्षि-रूपजाग्रद्देशान्निष्क्राम्य सुप्तिदेशरूपहृदयस्थं करोति । भूलोकान्निष्क्राम्य द्युलोकस्थं करोतीत्येवमस्य प्रकरणस्य द्व्यर्थपरता ध्येया ॥ ६-३-७ ॥

**स वाऽयं पुरुषो जायमानः शरीरमभिसम्पद्यमानः पाप्मभिः संसृज्यते स उत्क्रामन् म्रियमाणः पाप्मनो विजहाति ॥**

स वा अयं पुरुषः । योऽयं विज्ञानमयः पुरुष इत्युक्तः । स समान इत्यादिना प्रकृतः पुरुषो हरिः । जायमानः । तस्य व्याख्या– **शरीर-मभिसम्पद्यमान इति** ॥ जीवमादाय स्वयमेव पितृप्रवेशद्वारा मातृदेहं प्रविश्याभिनवदेहं प्रतिपद्यत इति स्वातन्त्र्याभिप्रायेणेयमुक्तिः । यद्वा जायमानो जीवं जनयन् शरीरमभिसम्पादयन्निति व्याख्येयम् । संसृज्यते जीवस्य फल-दानाय तत्कृतपापान्युपादत्त इति भावेन संसृज्यत इत्युक्तिः । उत्क्रामन्नित्यस्य विवरणं– **म्रियमाण इति** ॥ स्वयमेव जीवमादाय देहान्निष्क्रामतीति स्वातन्त्र्याभिप्रायेणैवमुक्तिः । उत्क्रामयन्मारयन्निति वा व्याख्या । विजहाति ।

मुक्तिरूपफलदानाय जीवं पापफलादानाज्जहातीत्यर्थः । यदा तु किं ज्योतिरयं पुरुष इत्युपक्रान्तः आत्मज्योतिष्ट्वेनोक्तो जीवः स वा अयं पुरुष इति परामृश्यते । तदा तु यथाश्रुत एवार्थः । न ण्यर्थत्वेन व्याख्या ॥ ६-३-८ ॥

[ज्योतीरूपात्मनः स्थितिस्थानम्]

**तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इदं च परलोकस्थानं च सन्ध्यं तृतीयं स्वप्नस्थानं तस्मिन् सन्ध्ये स्थाने तिष्ठन्नेते उभे स्थाने पश्यतीदं च परलोकस्थानं चाथ यथाक्रमोऽयं परलोकस्थाने भवति तमाक्रममा-क्रम्योभयान् पाप्मन आनन्दाꣳश्च पश्यति स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामुपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयं ज्योतिर्भवति ॥ ९ ॥**

आत्मैवास्य ज्योतिरित्युक्तात्मनः स्थितिस्थानमाह– **तस्य वा एतस्येति** ॥ तस्यैतस्य नियन्तृत्वेन प्रसिद्धस्य पुरुषस्य हरेः । द्वे एव स्थाने भवतः । इदं च परलोकस्थानं चेतीतिशब्दो ध्येयः । भूलोकस्वर्गलोकरूपम् । जाग्र-त्सुषुप्तिदेशरूपं चेति द्वे स्थाने भवत इत्यर्थः । सन्ध्यं जाग्रत्सुप्तिसन्धौ भवं सन्ध्यम् । तृतीयं स्वप्नस्थानम् । जीवस्य स्वाप्नवासनामयपदार्थप्रदर्शनस्थानं कण्ठदेश इति यावत् । तथा द्युभूसन्धौ भवं सन्ध्यम। स्वप्नस्थानशब्दित-मन्तरिक्षम् । तृतीयं स्थानमित्यप्यर्थः । तस्मिन् सन्ध्ये स्थाने कण्ठदेशे-ऽन्तरिक्षे च तिष्ठन्निदं च परलोकस्थानं चेत्युभे स्थाने जाग्रत्सुषुप्तिस्थान-भूतदक्षिणाक्षिहृदयरूपस्थाने पृथिवीद्युलोकरूपस्थाने च पश्यति । अथ जाग्रत्सुषुप्तिस्थानदर्शनानन्तरम् । अयं पुरुषो हरिः परलोकस्थाने सुप्त्याख्ये

द्युलोकाख्ये च जाग्रत्स्थानाद्भूलोकाच्च गन्तव्ये यथाक्रमो यो मार्गो भवति तत्क्रमं मार्गं स्वप्नाख्यं कण्ठदेशमन्तरिक्षं चाक्रम्य प्राप्य । तत्र स्थित्वेति यावत् । उभयानित्यस्य विवरणं 'पाप्मन आनन्दांश्च पश्यति' । जाग्रद्दशायां भूलोके जीवेनानुभूयमानानि पापफलभूतदुःखानि सुप्तौ द्युलोके चानुभूयमाना-नन्दादींश्च पश्यतीत्यर्थः । स आत्मा यत्र यदा स्वपिति जीवं स्वापयति द्युलोकं वा प्रापयति । स्वापप्रकारं व्यनक्ति– **अस्येति**॥ अस्य लोकस्य जनस्य । सर्वावतः आ समन्तात् सर्वं विषयीकुर्वज्ज्ञानानीति यावत् । मात्रामिन्द्रियशक्तिं चोपादाय स्वयं विहृत्यापहृत्य । जीवं बाह्यव्यापारहीनं कृत्वा । स्वयं निर्माय वासनामयान् स्वाप्नपदार्थानन्यादृशान् स्वर्गस्थान् रथादीनुत्पाद्य । स्वेन स्वकीयेन । स्वरूपभूतेनेति वा । भासा बाह्यप्रकाशेन । वचोरूपेण । स्वेन ज्योतिषान्तरप्रकाशेन । प्रस्वपिति । जीवं स्वापयति स्वर्गं वा प्रापयति । अत्रास्मिन् स्वापादिकाले । अयं पुरुषो हरिः । स्वयमेव जीवस्य ज्योतिर्भवतीत्यर्थः ॥ ६-३-९॥

[स्वप्ने-स्वर्गे-अन्तरिक्षे-मोक्षे-चार्थसृष्टिः विष्णवधीना]

**न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते न तत्रानन्दा मुदः प्रमुदो भवन्त्य-थानन्दान् मुदः प्रमुदः सृजते न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्त्यथ वेशान्तान् पुष्करिण्यः सृजते स हि कर्ता ॥ १० ॥**

तृतीयं स्वप्नस्थानमिति प्रकृतस्वप्नावस्थां विविच्य दर्शयति– **न तत्रेति**॥ तत्र स्वप्नावस्थायामन्तरिक्षे च द्युलोके च । रथाः न प्राक् स्थिताः । रथयोगा रथे युज्यमाना अश्वादयः । अथ तस्माद्रथादीन् सृजत इत्यर्थः । आनन्दाः स्वरूपसुखानि । मुदः विषयजन्यसुखानि । प्रमुदः प्रकृष्टविषयजन्य-

मुक्तिरूपफलदानाय जीवं पापफलादानाज्जहातीत्यर्थः । यदा तु किं ज्योतिरयं पुरुष इत्युपक्रान्तः आत्मज्योतिष्ट्वेनोक्तो जीवः स वा अयं पुरुष इति परामृश्यते । तदा तु यथाश्रुत एवार्थः । न ण्यर्थत्वेन व्याख्या ॥ ६-३-८ ॥

[ज्योतीरूपात्मनः स्थितिस्थानम्]

**तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इदं च परलोकस्थानं च सन्ध्यं तृतीयं स्वप्नस्थानं तस्मिन् सन्ध्ये स्थाने तिष्ठन्नेते उभे स्थाने पश्यतीदं च परलोकस्थानं चाथ यथाक्रमोऽयं परलोकस्थाने भवति तमाक्रममा-क्रम्योभयान् पाप्मन आनन्दाꣳश्च पश्यति स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामुपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयं ज्योतिर्भवति ॥ ९ ॥**

आत्मैवास्य ज्योतिरित्युक्तात्मनः स्थितिस्थानमाह– **तस्य वा एतस्येति** ॥ तस्यैतस्य नियन्तृत्वेन प्रसिद्धस्य पुरुषस्य हरेः । द्वे एव स्थाने भवतः । इदं च परलोकस्थानं चेतीतिशब्दो ध्येयः । भूलोकस्वर्गलोकरूपम् । जाग्र-त्सुषुप्तिदेशरूपं चेति द्वे स्थाने भवत इत्यर्थः । सन्ध्यं जाग्रत्सुप्तिसन्धौ भवं सन्ध्यम् । तृतीयं स्वप्नस्थानम् । जीवस्य स्वाप्नवासनामयपदार्थप्रदर्शनस्थानं कण्ठदेश इति यावत् । तथा द्युभूसन्धौ भवं सन्ध्यम। स्वप्नस्थानशब्दित-मन्तरिक्षम् । तृतीयं स्थानमित्यप्यर्थः । तस्मिन् सन्ध्ये स्थाने कण्ठदेशे-ऽन्तरिक्षे च तिष्ठन्निदं च परलोकस्थानं चेत्युभे स्थाने जाग्रत्सुषुप्तिस्थान-भूतदक्षिणाक्षिहृदयरूपस्थाने पृथिवीद्युलोकरूपस्थाने च पश्यति । अथ जाग्रत्सुषुप्तिस्थानदर्शनानन्तरम् । अयं पुरुषो हरिः परलोकस्थाने सुप्त्याख्ये

द्युलोकाख्ये च जाग्रत्स्थानाद्भूलोकाच्च गन्तव्ये यथाक्रमो यो मार्गो भवति तत्क्रमं मार्गं स्वप्नाख्यं कण्ठदेशमन्तरिक्षं चाक्रम्य प्राप्य । तत्र स्थित्वेति यावत् । उभयानित्यस्य विवरणं 'पाप्मन आनन्दांश्च पश्यति' । जाग्रद्दशायां भूलोके जीवेनानुभूयमानानि पापफलभूतदुःखानि सुप्तौ द्युलोके चानुभूयमाना-नन्दादींश्च पश्यतीत्यर्थः । स आत्मा यत्र यदा स्वपिति जीवं स्वापयति द्युलोकं वा प्रापयति । स्वापप्रकारं व्यनक्ति– **अस्येति**॥ अस्य लोकस्य जनस्य । सर्वावतः आ समन्तात् सर्वं विषयीकुर्वज्ज्ञानानीति यावत् । मात्रामिन्द्रियशक्तिं चोपादाय स्वयं विहृत्यापहृत्य । जीवं बाह्यव्यापारहीनं कृत्वा । स्वयं निर्माय वासनामयान् स्वाप्नपदार्थानन्यादृशान् स्वर्गस्थान् रथादीनुत्पाद्य । स्वेन स्वकीयेन । स्वरूपभूतेनेति वा । भासा बाह्यप्रकाशेन । वचोरूपेण । स्वेन ज्योतिषान्तरप्रकाशेन । प्रस्वपिति । जीवं स्वापयति स्वर्गं वा प्रापयति । अत्रास्मिन् स्वापादिकाले । अयं पुरुषो हरिः । स्वयमेव जीवस्य ज्योतिर्भवतीत्यर्थः ॥ ६-३-९॥

[स्वप्ने-स्वर्गे-अन्तरिक्षे-मोक्षे-चार्थसृष्टिः विष्णवधीना]

**न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते न तत्रानन्दा मुदः प्रमुदो भवन्त्य-थानन्दान् मुदः प्रमुदः सृजते न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्त्यथ वेशान्तान् पुष्करिण्यः सृजते स हि कर्ता ॥ १० ॥**

तृतीयं स्वप्नस्थानमिति प्रकृतस्वप्नावस्थां विविच्य दर्शयति– **न तत्रेति**॥ तत्र स्वप्नावस्थायामन्तरिक्षे च द्युलोके च । रथाः न प्राक् स्थिताः । रथयोगा रथे युज्यमाना अश्वादयः । अथ तस्माद्रथादीन् सृजत इत्यर्थः । आनन्दाः स्वरूपसुखानि । मुदः विषयजन्यसुखानि । प्रमुदः प्रकृष्टविषयजन्य-

सुखानि । वेशान्ताः वेश्यागृहाः । पुष्करिण्यः सरांसि । स्रवन्त्यो नद्यः । न केवलमेतावत् । सर्वस्यापि कर्तेत्याह– **स हि कर्तेति** ॥ हि प्रसिद्ध इत्यर्थः । तदाह सूत्रे 'सन्ध्ये सृष्टिराह हि' (ब्र.सू.३-२-१) इति । सुषुप्तिमोक्षोभयविवक्षयैतद्वचनमित्यादि भाष्यानुसारात् तस्य वा एतस्येत्यादिकं संसारमोक्षपरतयापि योज्यम् । तथाहि । तस्यैतस्य पुरुषस्य द्वे एव स्थाने भवत इदं च संसारावस्थारूपं परलोकस्थानं मोक्षाख्यं चेति । सन्ध्यं तृतीयं स्वप्नस्थानं संसारमोक्षोभयसन्धौ भवं तृतीयं जीव-न्मुक्त्याख्यावस्थारूपम् । तस्मिन् जीवन्मुक्त्याख्ये स्वप्नस्थानशब्दिते तिष्ठन्नेते उभे स्थाने । पश्यति । इदञ्च परलोकस्थानं च । अथ संसारमुक्त्युभयदर्शनानन्तरम् । अयं पुरुषो जीवः । परलोकस्थाने मोक्षे गन्तव्ये । यथाक्रमो यन्मार्गो भवति । तमाक्रमं मार्गं जीवन्मुक्त्याख्यमाक्रम्योभयान् । तस्यैव विवरणं संसारेऽनुभूयमानपापफलानि दुःखानि । मोक्षेऽनुभूयमानानन्दांश्च पश्यति । स भगवान् यत्र यदा प्रस्वपिति प्रस्वापयति मोक्षं प्रापयति । तं प्रकारमेव व्यनक्ति । अस्य लोकस्य मुच्यमानस्य । सर्वावतः वृत्तिरूपसर्वज्ञानानि । मात्रामिन्द्रियाभिमानिदेवां-श्चोपादाय । स्वयं विहत्य सांसारिकसर्वव्यापारहीनं कृत्वा स्वयं निर्माय मुक्तौ भोगसाधनपदार्थानुत्पाद्य । स्वेन भासा स्वेन ज्योतिषा । प्रस्वपिति मोक्षं प्रापयति । अत्रास्मिन् मोक्षेऽयं पुरुषो हरिरस्य जीवस्य स्वयमेव विशेषतो ज्योतिर्भवति ज्ञानोद्बोधको भवतीत्यर्थः । न तत्रेत्यादि प्राग्वत् । तदाह सूत्रे 'स्वाप्ययसम्पत्त्यो-रन्यतरापेक्षमाविष्कृतं हि' (ब्र.सू.४-४-१६) इति ॥ ६-३-१० ॥

**तदेते श्लोका भवन्ति–**

**स्वप्नेन [१]शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति ।**
**शुक्रमादाय पुनरेति स्थानं हिरण्मयः पुरुष एक हंसः ॥ ११ ॥**

१. 'शरीर' - ख. ।

स्वप्नाद्यवस्थाप्रेरको भगवानित्युक्तार्थे श्लोकाः सन्तीति प्रतिज्ञाय तानुदाहरति– **तदेत इति** ॥ तत् तत्र । स्वप्नेन सुप्त्या स्वर्गेण मोक्षेण वा । शारीरं जीवं अभिप्रहत्य संयोज्य । स्वयमसुप्तः सुप्तान् सुप्त्यवस्थागतान् स्वर्गगतान् मोक्ष-गतांश्च । शारीरान् जीवानभिचाकशीति पश्यति । एवं सुप्त्यवस्थादर्शनानन्तरम्। शुक्रं शोकेन रत्या च युक्तं जीवमादाय । पुनः स्थानं जाग्रदाख्यं भूलोकाख्यं सृष्टिस्थानं वा एतीत्यर्थः। कीदृशो भगवानित्यत आह– **हिरण्मय इति** ॥ हिरौ रत्यानन्दौ पूर्णौ यस्येति। स्वर्णवर्णत्वाद्वा हिरण्मयः । प्रधान-हंसरूपत्वादेकहंसः पुरुष इति ॥ ६-३-११ ॥

**प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादमृतश्चरित्वा ।**
**स ईयतेऽमृतो यत्र कामꣳ हिरण्मयः पुरुष एकहꣳसः ॥ १२ ॥**

न केवलं [१]शरीर एव स्वप्नदर्शक इत्याह– **प्राणेनेति** ॥ अमृतः पुरुषः । प्राणेन मुख्यवायुना । अवरं दुःखहेतुतया नीचं कुलायं जीवदेहम् । रक्षन् स्वप्ने जीवमादाय एकेनांशेनेति योज्यम् । कुलायाच्छरीराद्बहिश्चरित्वा पुनरेति स्थानमित्यनुषज्यते । कुत्र नयतीत्यत उक्तं– **स ईयत इति** ॥ सोऽमृतो हिरण्मय एकहंसः पुरुषो हरिः यत्र कामः काम्यमानो रूपादिविषयः । ईयते दृश्यते तत्र चरित्वेत्यर्थः ॥ ६-३-१२ ॥

**स्वप्नान्त उच्चावचमीयमानो रूपाणि देवः कुरुते बहूनि ।**
**उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्यन् ॥ १३ ॥**

स्वप्नावस्थाप्रेरकः किंभूत इत्यत आह– **स्वप्नान्त इति** ॥ देवः स्वप्नान्ते उच्चावचमीयमानः वासनामयेषूच्चावचेषु गजमशकादिषु प्रविशन् स्वस्य बहूनि उच्चावचानि रूपाणि कुरुते । उतशब्दश्चशब्दार्थः । उत किञ्च । स्त्रीभि-श्चित्प्रकृतिरूपाभिः सह मोदमान इव मोदरूपस्य स्त्रीभिः सह मोदो विडम्बनं

१. 'शारीर' - ख. ।

इतीवशब्दः । उत किञ्च । जीवस्य भयानि पश्यन्नपि । जक्षदिव हसन्निव मन्दहासस्य नित्यत्वादिवशब्दः ॥ ६-३-१३ ॥

**आराममस्य पश्यन्ति न तं पश्यति कश्चनेति ॥ तं नायतं बोधयेदित्याहुर्दुर्भिषज्यं हास्मै भवति यमेष न प्रतिपद्यतेऽथो खल्वाहुर्जागरितदेश एवास्यैष इति यानि ह्येव जाग्रत्पश्यति तानि सुप्त इत्यत्रायं पुरुषः स्वयञ्ज्योतिर्भवति सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षाय ब्रूहीति ॥ १४ ॥**

एवमवस्थाप्रेरकं हरिं पश्यन्ति किं नेत्याह– **आराममिति** ॥ अस्य हरेराराममाक्रीडास्थानं शरीरं स्वाप्नपदार्थजातं वा । पश्यन्ति तं न पश्यति कश्चनेत्याहुरितीति पदस्यान्वयः । भगवन्तमजानन्तं ज्ञानी बोधयेत्किं नेत्याह– **तमिति** ॥ अयतं यत्नहीनमयोग्यजनं प्रति । तं भगवन्तं न बोधयेदित्याहुः विद्वांसः । कुतोऽयं न बोध्य इत्यत आह– **दुर्भिषज्यमिति** ॥ एष हरिर्यं पुरुषं । न प्रतिपद्यते न प्राप्नोति । यत्प्रतिपत्तिविषयो न भवति । 'सर्वथापि तु त एवोभयलिङ्गात्' (ब्र.सू.३-८-३४) इति सूत्रोक्तन्यायत अस्मै अस्य दुर्भिषज्यं भवति अनिष्टमेव भवति । अभीष्टं न किमपि सिद्ध्यतीत्यर्थः । असुप्तः सुप्तानभिचाकशीतीति स्वप्नाद्यवस्थायामास्थितस्य हरेर्यत्सर्वद्रष्टृत्वमुक्तं, तद्व्यनक्ति– **अथो खल्विति** ॥ तस्मादेव खलु स्वप्नाद्यवस्थास्वपि सर्वद्रष्टृत्वादेव खलु एष जीवस्य स्वप्नसुप्तिदेशः । अस्य हरेर्जागरितदेश एवेत्याहुरार्याः । तद्विवृणोति– **यानीति** ॥ यानि जाग्रत् जागरिते पश्यति । तानि सुप्ते स्वप्नसुषुप्तिकालेऽपि पश्यति । हि प्रसिद्धम् । एवं स्वप्नसुप्त्यवस्थाप्रेरकत्वमुक्त्वोपसंहरति– **अत्रेति** ॥ अत्र स्वप्नसुप्त्याद्यवस्थायाम् । अयं पुरुषो हरिः । जीवस्य स्वयमेव ज्योतिर्भवति । एवं श्रुत्वा राजा गुरुदक्षिणां

प्रतिजज्ञ इत्याह– **सोऽहमिति** ॥ त्वयोपदिष्टोऽहम् । सहस्रं हस्त्यृषभसहस्रम्। अत ऊर्ध्वं इतः परम् । विमोक्षाय विशिष्टमोक्षाय । ब्रूहीति राजोवाचेत्यर्थः ॥ ६-३-१४ ॥

**स वा एष एतस्मिन् सम्प्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्या द्रवति स्वप्नायैव स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इत्येवमेवैतद् याज्ञवल्क्य सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥ १५ ॥**

प्रागुक्तमेव हरेरवस्थाप्रेरकत्वं पूर्वं सङ्कलय्योक्तं अधुना विविच्य सुप्तिस्वप्नजाग्रदवस्थाप्रेरकत्वं प्रत्येकं स्पष्टमाह याज्ञवल्क्यः– **स वा इत्यादिना** ॥ स एष हरिः। सम्प्रसादे सम्यक्प्रसीदति जीवोऽस्यामिति व्युत्पत्त्या सुप्तौ । रत्वा रमणं कृत्वा । चरित्वा । पुण्यं च पापं च दृष्ट्वैव नतु तत्कृतविकारवानित्येवकारार्थः । रत्वा चरित्वा च प्रतिन्यायमवस्थान्तरं प्रवर्तनीयमिति न्यायमनुसृत्य प्रतियोन्या पदव्या । स्वप्नायैव जीवस्य स्वप्नप्राप्तय एव द्रवति स्वप्नदेशं गच्छति । सुप्त्यादौ दृष्टपदार्थाभिलाषेण सज्जते किम्? नेत्याह– **स यत्तत्रेति** ॥ स हरिः तत्र सुप्त्यादौ यत्किञ्चित्पश्यति तेन नानाविधस्वाप्नपदार्थदर्शनेनानन्वागतः अलिप्तो भवति । दर्शनकृतविकारवान्न भवतीत्यर्थः । तत्र हेतुः– **असङ्गो हीति** ॥ इत्युवाच याज्ञवल्क्य इत्यर्थः। तदुक्तमङ्गीकृत्य दक्षिणां प्रतिजज्ञ इत्याह वेदपुरुषः– **एवमेवेत्यादिना** ॥ पूर्वोक्तानामपि मोक्षार्थत्वमस्त्येव तथापि पुनः पुनर्ज्ञानान्तराधिक्येनातिशयो मुक्तावस्तीति तदभिप्रायेणात ऊर्ध्वं विमोक्षाय ब्रूहीत्युक्तिरिति ज्ञेयम् । एवमुत्तरखण्डद्वयेऽपि योजना ध्येया ॥ ६-३-१५ ॥

**स वा एष एतस्मिन् स्वप्नान्तायैव रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्या द्रवति बुद्धान्तायैव स यत्तत्र यत्किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इत्येवमेवैतद् याज्ञवल्क्य सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥ १६ ॥**

बुद्धान्तायैव जाग्रत्स्थानायैवेत्यर्थः । एवं स्वप्नान्तायैवेत्यस्यार्थो ध्येयः ॥ ६-३-१६ ॥

**स वा एष एतस्मिन् बुद्धान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्या दवति स्वप्नान्तायैव ॥**

अत्र स्वप्नशब्दः स्वप्नसुप्त्युभयाभिप्रायः । बाह्याज्ञानस्योभयत्र साम्येनात्रोभयोरेकीकरणेनोक्तिः ॥ ६-३-१७ ॥

**तद्यथा महामत्स्य उभे कूले अनुसञ्चरति पूर्वं चापरं चैवमेवायं पुरुष एतावुभावन्तावनुसञ्चरति स्वप्नान्तं च बुद्धान्तं च ॥ १८ ॥**

स्वप्नस्थानाज्जाग्रत्स्थानं जाग्रत्स्थानात्स्वप्नस्थानं भगवान्जीवमादाय यातीत्युक्तम्। तद्दृष्टान्तेन व्यनक्ति– **तद्यथेति** ॥ तन्निदर्शनं यथेत्यर्थः । यथा महामत्स्यः नद्याः पूर्वं चापरं चेत्युभे कूले अनुसञ्चरति । एवमेवायं पुरुषो हरिः । स्वप्रान्तं च बुद्धान्तं चेत्येतावन्तौ स्थाने । स्वप्नशब्दोऽत्रोभयपर इत्युक्तं ध्येयम् । अनुसञ्चरति ॥ ६-३-१८ ॥

[सुषुप्तौ मुक्तौ च परमात्मसम्बन्धादेव दुःखाभावः]

**तद्यथाऽस्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः संहत्य पक्षौ सल्लयायैव ध्रियत एवमेवायं पुरुष एतस्मा**

**अन्ताय धावति यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति ॥ १९ ॥**

जीवस्य स्थितिप्रकारं दृष्टान्तपूर्वमाह– **तद्यथेति** ॥ श्येनो वा सुपर्णो वाऽस्मिन्नाकाशे विपरिपत्य इतस्ततः पतित्वा । श्रान्तः पक्षौ संहत्य सङ्कुच्य । सल्लयायैव स्वनीडायैव । ध्रियते गच्छति । एवमेवायं पुरुषो जीवः जागरिते संसारे श्रान्तः । एतस्मै अन्ताय सुप्तिमुक्तिरूपदेशाय । धावति गच्छति । यत्र सुप्तिमुक्तिदेशे । सुप्तः । आनन्दरूपं सुशब्दार्थं हरिम् । प्राप्तो जीवः । न कञ्चन कामं कामयते । न कञ्चन स्वप्नं पश्यति । एतस्मा इत्यन्वयः ॥ ६-३-१९ ॥

**ता वा अस्यैता हिता नाम नाड्यो यथा केशः सहस्रधा भिन्नस्तावताऽणिम्ना तिष्ठन्ति शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णा अथ यत्रैनं घ्नन्तीव जिनन्तीव हस्तीव विच्छाययति गर्तमिव पतति । यदेव जाग्रद्भयं पश्यति तदत्राविद्यया मन्यतेऽथ यत्र देव इव राजेवाहमेवेदꣳ सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः ॥ २० ॥**

जीवस्य सुप्तिस्थानमाह– **ता वा इति** ॥ अस्य पुरुषस्य । जीवस्य शरीरे ताः प्रसिद्धाः । एताः वक्ष्यमाणाः । हिता नाम नाड्यः । यथा केशः सहस्रधा भिन्नः । तावता अणिम्ना सूक्ष्मरूपेण तिष्ठन्ति । तासां हितत्वं कुत इत्यतो भगवदधिष्ठानत्वादिति भावेनाह– **शुक्लस्येति** ॥ शुक्लादिवर्णोपेत-रूपपञ्चकेन पूर्णाः अच्छिद्रतयानुप्रविष्टा इत्यर्थः । तासां मध्ये सुषुम्ना तत्र सुप्तिं यातीति शेषः । अथ यत्र । यासु कण्ठदेशे स्थितासु नाडीषु । स्थितो जीवः । एनं स्वप्नदृष्टमात्मानम् । अन्ये घ्नन्तीव पश्यति । बाह्यार्थवैलक्षण्यादिवशब्दः । कदाचित् जिनन्तीव ताडयन्तीव पश्यति । एवं

स्वात्मानं हस्तीव गज इव पश्यति । अन्यः कश्चनैनं विच्छाययति भयेन विगतशोभं करोतीव पश्यति । गर्तं जीर्णं कूपादिकं प्रति । तन्मध्य इति यावत् । पततीव पश्यति। जाग्रदिव भयं च पश्यति। अत्र पश्यतीत्युक्त्या प्राप्तदर्शनस्वातन्त्र्यं जीवस्य निराह– **यदेवेति** ।। यदा यस्यां दशायां यद् भयादिकं जाग्रद्वस्तुवत्पश्यति तद्वस्त्वज्ञाविद्यया अः ब्रह्म तद्विद्यया भगवन्मत्यैव मन्यते पश्यति । न स्वातन्त्र्येणेत्यर्थः। सुप्तौ मुक्तौ च न कश्चन कामं कामयत इत्युक्तं तर्हि कथं तिष्ठतीत्यत आह– **यत्रेति** ।। यत्र सुप्तौ मुक्तौ वा देव इव राजेव। भोगापेक्षया पूर्तिर्भवतीति देवदृष्टान्तः। प्रत्यक्षदर्शनार्थं राजदृष्टान्त इति ज्ञेयम्। अहमेवेदं सर्वोऽस्मि स्वयोग्यतया गुणपूर्णोऽस्मीति मन्यते। विषयभोगेन विना स्वरूपानन्देनैव पूर्ण इत्यहमेवेत्येवशब्दः । स हरिरस्य जीवस्य परमो लोकः आश्रयः ।। ६-३-२० ।।

**तद् वा अस्यैतदतिच्छन्दा अपहतपाप्माऽभयꣳ रूपꣳ तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमेवमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरं तद् वा अस्यैतदाप्तकाममात्मकाममकामं रूपं शोकान्तरम् ।। २१ ।।**

पूर्णत्वमस्य कुतोऽभूदित्यत आह– **तद्वा इति** ।। अस्य भगवतः । तत्प्रसिद्धमेवैतद्रूपम्। अतिच्छन्दाः अतिक्रान्तानि छन्दांसि येनासावतिच्छन्दाः साकल्येन वेदाप्रतिपाद्यः। अपहतपाप्मा । अभयं भयहीनं रूपम् । भगवद्रूपस्यैवंविधत्वे प्रकृते किमायातमित्यतो भगवत्प्राप्त्या पूर्णत्वमस्येति सदृष्टान्तमाह– **तद्यथेति** ।। प्रियया स्त्रिया सम्परिष्वक्तः आलिङ्गितो बाह्यं किञ्चन घटादिकं न वेद आन्तरं दुःखादिकं च न वेद । स्त्रीपरिष्वङ्गसुखेनैव पूर्णो भवति । एवमेवायं पुरुषो जीवः प्राज्ञेन बाह्यपदार्थाज्ञापकेन हरिणा सम्परिष्वक्तः सुप्तः मुक्तो वा न बाह्यं किञ्चन वेद नान्तरं भगवत्प्राप्त्या

स्वयोग्यपूर्णानन्दानुभवप्राप्त्या तृप्तो भवतीत्यर्थः । प्रकृतभगवद्रूपस्य गुणानाह– **तद्वा इति** ।। अस्यात्मनः तत्प्रसिद्धमेतद्रूपं आप्तकामं आप्ता एव नत्वाप्तव्याः कामा येन तदाप्तकामम्। पूर्णसुखरूपत्वादात्मैव काम्यत इत्यात्मकामं विषयकामनारतिम् । शोकानामन्तेनाभावेनैव रमत इति । शोकं विनैव रमत इति शोकान्तरम् ।। ६-३-२१ ।।

[सुप्तिमोक्षस्वरूपम्]

**अत्र पिताऽपिता भवति माताऽमाता लोका अलोका देवा अदेवा वेदा अवेदा अत्र स्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रूणहा चाण्डालोऽचाण्डालो पौल्कसोऽपौल्कसः श्रमणोऽश्रमण-स्तापसोऽतापसोऽनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य भवति ।। २२ ।।**

यत्र सुप्तो न कश्चन कामं कामयत इति । प्रकृतसुप्तिमोक्षस्वरूपं स्पष्टमाह– **अत्र पितेत्यादिना** ।। उक्तगुणेन भगवता सम्परिष्वक्तो जीवः पूर्वं पुत्राणां पितात्र सुप्तौ मुक्तौ वाऽपिता भवति । पुत्रादिकृतश्राद्धादिफलं न भुङ्क्त इत्यर्थः । पूर्वं स्वपुत्राणां माताऽत्र सुप्तौ मुक्तौ अमाता भवति । पुत्रदुःखेनादुःखित्वात् । एवमग्रेऽपि योजना। लोकाः लोकाभिमानिनः । अलोकाः लोकाभिमानहीनाः । देवाः देवाभिमानिनः । अदेवाः वर्षणादिस्वस्व-जगद्व्यापारहीनाः प्रजाकृतयज्ञादिभुजो नेति चार्थः । पूर्वं वेदाः वेदाभि-मानिनः । अवेदाः वेदाभिमानहीनाः । अस्तेन इत्यादेः पापफलस्याननुभवा-भिप्रायो ध्येयः । श्रमणो यतिः । अश्रमणः यतिधर्मादुद्गतरूपत्वादतापसः तपश्चरणादुत्थितत्वात् । पापेन प्राचीनानिष्टपुण्येनानन्वागतः अलिप्तः । पाप-फलप्ययात्पापेनानन्वागतः । तदा सुप्तौ मुक्तौ च सर्वाच्छोकान् तीर्णोऽतिक्रान्तो हृदयस्य हृद्ययत इति हृदयस्थस्य हरेः प्रेरकः शेषभूतो भवति । हि यतोऽत इति ।। ६-३-२२ ।।

[देशान्तरे कालान्तरे वा न विष्णोरितरः प्रेरकः]

**यद् वै तन्न यद् द्वैतं न पश्यन् वै तन्न पश्यति नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद् द्वितीयमस्ति ततोऽन्यद् विभक्तं यत्पश्येत् ॥ २३ ॥**

देशकालान्तरे भगवानिवान्योऽप्यवस्थाप्रेरकोऽस्ति किमित्याशङ्कां सयुक्तिकं निराह– **यद्वैतमित्यादिना** ॥ पूर्वत्र प्रकृतं ब्रह्म यद्वस्तु द्वैतं द्वैतत्वेन समाभ्यधिकत्वेन न पश्यति । तत् द्वितीयं समाभ्यधिकं वस्तु न तु नैवास्ति । भगवतोऽदर्शनमात्रेण कथं तदभाव इत्यत आह– **पश्यन् वैतन्न पश्यतीति** ॥ विद्यमानं सर्वं पश्यन्नपि तन्न पश्यत्यतो नास्त्येव तदिति भावः । ननु विद्यमानमपि द्वैतं भ्रान्त्या न पश्यतीति किन्न स्यादित्यत आह– **नहीति** ॥ विपरिलोपोऽयथार्थत्वं न ह्यस्तीत्यर्थः । कुत इत्यत उक्तम् ॥ **अविनाशित्वान्नित्यत्वान्निर्दोषत्वादिति वा** ॥ दुष्टेषु नष्टपदप्रयोगदर्शनात् । **व्यासतीर्थटीकायां** तु "पश्यन् वै तद्वैतं वस्तु नेत्येव पश्यत्यतो नेत्युक्त्वा नास्तीति प्रत्ययो भ्रान्तिः किन्न स्यादित्यतो नहीति वाक्यम् । इतोऽपि द्वैतं नेत्याह– **तत इति** ॥ ततो भगवतोऽन्यद्द्वितीयं द्रष्टृ तन्नैवास्ति । यद्द्रष्टृ ततो हरेर्विभक्तं विरुद्धम् पश्येदतोऽन्यस्य द्रष्टुरभावात्सर्वद्रष्ट्रा भगवता भ्रान्तिहीनेनादृष्टत्वात्प्रत्युत नास्तीत्येव दृष्टत्वात् द्वैतशब्दितं हरेः समाभ्यधिकमवस्थाप्रेरकमन्यद्वस्तु नेत्यर्थ" उक्तः । तत्त्वनिर्णयटीकायां तु 'शुक्लस्य नीलस्येत्यादिपूर्ववाक्ये परस्परं विलक्षणनानारूपवद्भिर्भगवद्रूपैर्नाडीनां व्याप्तत्वमुक्तम् । तेन तद्रूपाणां भेदः प्राप्तः । तथा तद्वा अस्यैतदाप्तकामात्मकाममकामं रूपमिति षष्ठ्या रूपरूपिणोर्भेदश्च तन्निराकर्तुं यद्वैतमिति वाक्यम् । हृदयस्य भवतीति हृदयशब्देन प्रकृतं ब्रह्म भगवान् यद्यस्माच्छुक्लादिकं रूपं स्वतः अन्योन्यं द्वैतं भिन्नं न पश्यति । तत् द्वितीयं भिन्नं नतु नास्त्येव । तावता कथमभाव इत्यतः पश्यन् सर्वज्ञोऽपि तं न पश्यति । एवं तर्हि जीवजडात्मकमपि

विश्वं ततो न भिन्नं नेत्याह । यद्यस्माद्भगवान् यत् जीवजडादिकं 'विभक्तं' स्वतो भिन्नं पश्येत् तस्मात्तत्ततोऽन्यदेव । भगवता भेदेन दृष्टत्वेऽपि कुतो भिन्नमित्यत उच्यते– **नहीति** ॥ अविनाशित्वा-न्निर्दोषत्वादित्युपलक्षणम् । अबाधितत्वाच्चेत्यर्थ उक्तः । तदुक्तं भाष्ये 'यदवतारादिकं द्वैतत्वेन न पश्यति नतु तत्ततो द्वितीयम्'इत्यादि[१] ॥ ६-३-२३ ॥

**यद्वै तन्न जिघ्रति जिघ्रन् वै तन्न जिघ्रति नहि घ्रातुर्घ्रातेर्विपरिलोपो विद्यतेऽविनाशित्वान्नतु तद्द्वितीयमस्ति ततोऽन्यद् विभक्तं यज्जिघ्रेत् ॥ २४ ॥**

न केवलं भगवान् चक्षुषा द्वितीयं न पश्यतीति किन्तु सर्वेन्द्रियैर्द्वितीयं न पश्यतीत्याह– **यद्वैतं न जिघ्रतीत्यादिना खण्डसप्तकेन** ॥ योजना तु प्राग्वदेव ज्ञेया । घ्रातेः घ्राणसम्बन्धिज्ञानस्य ॥ ६-३-२४ ॥

**यद्वै तन्न रसयते रसयन् वै तन्न रसयते नहि रसयितू रसयतेर्विपरिलोपो विद्यतेऽविनाशित्वान्नतु तद्द्वितीयमस्ति ततोऽन्यद् विभक्तं यद्रसयेत् ॥ २५ ॥ यद्वै तन्न वदति वदन् वै तं न वदति नहि वक्तुर्वक्तेर्विपरिलोपो विद्यतेऽविनाशित्वान्नतु तद् द्वितीयमस्ति ततोऽन्यद् विभक्तं यद्वदेत् ॥ २६ ॥ यद्वै तन्न शृणोति शृण्वन् वै तन्न शृणोति नहि श्रोतुः श्रुतेर्विपरिलोपो विद्यतेऽविनाशित्वान्नतु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यच्छृणुयात् ॥ २७ ॥ यद्वै**

---

१. 'यदवतारादिकं द्वैतत्वेन न पश्यति नतु तत् ततो द्वितीयम्। नित्यज्ञानत्वाद् भ्रमाभावात्। सद् विभक्तत्वेन विष्णुः पश्यति तत् ततोऽन्यदस्ति चेति च । यस्माद् विष्णुर्विश्वं विभक्तत्वेनैव पश्यति तस्मात् तदन्यदस्त्येव' इति भाष्यपाठः ।

**तन्न मनुते मन्वानो वै तन्न मनुते नहि मन्तुर्मतेर्विपरिलोपो विद्यतेऽविनाशित्वान्नतु तद् द्वितीयमस्ति ततोऽन्यद् विभक्तं यन्मन्वीत ॥ २८ ॥ तन्न स्पृशति स्पृशन् वै तन्न स्पृशति नहि स्प्रष्टुः स्पृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्नतु तद् द्वितीयमस्ति ततोऽन्यद् विभक्तं यत् स्पृशेत् ॥ २९ ॥ यद्वै तन्न विजानाति विजानन् वै तन्न विजानाति नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वान्नतु तद् द्वितीयमस्ति ततोऽन्यद् विभक्तं यद् विजानीयात् ॥ ३० ॥**

रसयतेः रसज्ञानस्य ॥ ६-३-२५ ॥ वक्तेः वागिन्द्रियव्यापारस्य । विपरिलोपोऽसत्यत्वम् ॥ ६-३-२६ ॥ श्रुतेः श्रोत्रज्ञानस्य ॥ ६-३-२७ ॥ मतेः मानसज्ञानस्य ॥ ६-३-२८ ॥ स्पृष्टेः स्पार्शनज्ञानस्य ॥ ६-३-२९ ॥ विज्ञातेर्विशेषज्ञानस्य[१] ॥ ६-३-३० ॥

**यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येदन्योऽन्यज्जिघ्रेदन्योऽन्यद्रसयेदन्योऽन्यद्वदेदन्योऽन्यच्छृणुयादन्योऽन्यन्मन्वीतान्योऽन्यत्स्पृशेदन्योऽन्यद्विजानीयात् ॥ ३१ ॥**

ततोऽन्यद्विभक्तं यत् पश्येत्ततोऽन्यद्विभक्तं यज्जिघ्रेदित्यादिनोक्तमुपसंहरति— **यत्र वान्यदिवेति** ॥ यत्र यदा । अन्यद्भगवद्व्यतिरिक्तम् । स्वतन्त्रमिव भवेत् । इवशब्दोऽल्पस्वातन्त्र्यवान् स्यादित्यर्थे । तत्र तदैवान्यो भगवदन्यः पुरुषोऽन्यद्भगवद्दृष्टादन्यत्पश्येज्जिघ्रेदित्यादि युज्यते । तदन्यत्स्वतन्त्रं नास्तीत्यर्थः ॥ ३१ ॥

---

१. विज्ञातेः अन्तःकरणप्रभेदबुद्धिरूपेन्द्रियसम्बन्धिज्ञानस्य - भा.बो. ।

[स्वतन्त्रद्रष्टाऽन्यो नास्ति]

**सलिल एको द्रष्टाऽद्वैतो भवत्येष ब्रह्मलोकः सम्राळिति हैनमनुशशास याज्ञवल्क्य एषाऽस्य परमा गतिरेषाऽस्य परमा सम्पदेषोऽस्य परमो लोक एषोऽस्य परम आनन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति ॥ ३२ ॥**

एवं द्रष्ट्रन्तरनिषेधमुपसंहृत्य स एव सर्वद्रष्टेत्युक्तमुपसंहरतीति वा । अन्यस्य स्वतन्त्रद्रष्ट्रन्तरस्याभावे यद् द्वैतं न पश्यतीत्युक्तं सुस्थमित्याहेति वा सलिल एको द्रष्टेत्यादेर्गमनिका ध्येया । सलिले प्रकृतिरूपे सलील इति प्रथमा वा । एकः समवर्जितः। अद्वितीयः विरोधिद्वितीयशून्यः । द्रष्टा भवति तिष्ठति । विष्णुरेव स्वतन्त्रो द्रष्टा नान्य इति कुत इत्यत आह– **एष इति** ॥ हे सम्राट् एष आत्मा । ब्रह्म पूर्णं लोको ज्ञानं यस्यासौ ब्रह्मलोक इति हैनं जनकमनुशशास याज्ञवल्क्यः । हरेर्महिमान्तरमाह– **एषास्येति** ॥ अस्य हरेरेषा गतिः परमा सर्वगतत्वात् । अस्यैषा सम्पत् परमा पूर्णैश्वर्यात् । अस्यैष लोकः ज्ञानं परमः सर्वविषयकत्वात् । अस्यैष आनन्दः परमः पूर्णत्वात् । आनन्दस्य परमतां व्यनक्ति– **एतस्यैवेति** ॥ अन्यानि भूतानि ब्रह्मादिमुक्तान्यप्येतस्य हरेरानन्दस्य मात्रां प्रतिबिम्बरूपविप्रुट्कमुपजीवन्ति अनुभवन्ति ॥ ६-३-३२ ॥

[तारतम्यानुगुण्येन मुक्ता आनन्दमनुभवन्ति]

**स यो ह वै मनुष्याणां राद्धः समृद्धो भवत्यन्येषामधिपतिस्सर्वैर्मानुष्यकैर्भोगैः सम्पन्नतमः स मनुष्याणां परम आनन्दोऽथ ये शतं मनुष्याणामानन्दाः स एकः पितॄणां जितलोकानामानन्दोऽथ ये शतं पितॄणां जितलोकानामानन्दाः स एको गन्धर्वलोक आनन्दोऽथ ये शतं गन्धलोक आनन्दाः स**

**एकः कर्मदेवानामानन्दो ये कर्मणा देवत्वमभिसम्पद्यन्तेऽथ ये शतं कर्मदेवानामानन्दाः स एक आजानदेवानामानन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ये शतमाजानदेवाना-मानन्दाः स एकः प्रजापतिलोक आनन्दाः स एको ब्रह्मलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथैष एव परम आनन्द एष ब्रह्मलोकः सम्राडिति होवाच याज्ञवल्क्यः सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीत्यत्र ह याज्ञवल्क्यो बिभयाञ्चकार मेधावी राजा सर्वेभ्यो मां तेभ्य उदरौत्सीदिति ॥ ३३ ॥**

किमेकप्रकारेण मुक्तानि भूतानि आनन्दमात्रामुपजीवन्तीत्यतः तारतम्येनेत्याह– **स य इत्यादिना** ॥ स प्रसिद्धः । योऽयं मनुष्याणां चक्रवर्तिनाम् । राद्धः मुक्तः स योग्यसाधनपूर्तिमत्त्वेन समृद्धः अतो राद्ध इत्यर्थः । अन्येषामधिपतिः । मानुष्यकैर्मनुष्यत्वदशायां ज्ञानोत्तरकृतदानादिफलभूतैर्भोगैः सम्पन्नतमो भवति । स मनुष्याणां परम आनन्द आविर्भूतस्वरूपानन्द उक्तगुणविशिष्टस्य य आनन्दः स पूर्वावधिभूतो मानुषानन्द उच्यत इत्यर्थः । अथेत्यर्थान्तरे । ये मानुषानन्दा उक्ताः ते शतगुणिताश्चेत्स एकः पितॄणामानन्द इत्यर्थः ॥ पितॄन्विशिनष्टि– **जितेति** ॥ जितलोकानां प्राप्तस्वयोग्यपूर्ण-ब्रह्मज्ञानानां, मुक्तानामिति यावत् । अत्र प्रकरणे लोकशब्दो ज्ञानपरः । अथोक्तकक्ष्योत्तरत इत्यर्थः । एवमग्रेऽपि । जितलोकानां मुक्तानां पितॄणां ये शतमानन्दाः स एको गन्धर्वलोके । गन्धर्वाणां मुक्तौ । गन्धर्वाणां लोके ब्रह्मज्ञाने नित्योदितब्रह्मज्ञानदशायामिति यावत् । मुक्तावेव नित्योदित-ज्ञानमिति गन्धर्वलोकपदेन गन्धर्वमुक्त्यर्थलाभो ध्येयः । एवमग्रेऽप्यर्थो ज्ञेयः । कर्मदेवाः क इत्यत आह– **य इति** ॥ ये कर्मणा देवत्वं प्राप्नुवन्ति ते

कर्मदेवा इति पूर्वेणान्वयः । आजानदेवानां जातेभ्यो वराणामिन्द्रादीनामित्यर्थः । तान् विशिनष्टि मुक्तत्वज्ञापनाय– **यश्चेति** ।। वचनव्यत्ययः । ये श्रोत्रियाः प्राप्तश्रवणफलाः । अवृजिनो दुःखहीनाः । अकामहताः कामोपद्रवहीनाश्चेति च शब्दान्वयः । तेषां आजानज-देवानामित्यन्वयः । प्रजापतीनां रुद्राणां शेषाणामिति यावत् । लोके ब्रह्मज्ञाने प्रागुक्तदिशा मुक्ताविति यावत् । ये प्रजापतयः श्रोत्रियत्वादिगुणकास्तेषामिति प्राग्वज्ज्ञेयम् । ब्रह्मलोके ब्रह्मणां विरिञ्चानां विष्णुज्ञाने मुक्ताविति यावत् । यश्चेति प्राग्वत् । ज्ञानपादीयानुव्याख्याने तु 'तस्मादमुक्तसुखगं तारतम्यं पृथक् पृथक् । उक्त्वा यश्चेति मुक्तानां तारतम्यं सुखे श्रुतिः । आह (ब्र.सू.अनु. ३-४-१८)' इति मुक्तामुक्तपरतयास्यार्थ उक्तः । हे सम्राट् एवं तारतम्यस्थितानि ब्रह्मादीनि मुक्तान्येतस्यैवानन्दस्य मात्रामुपजीवन्ति यस्मादथ तस्मादेष एव परमानन्दः निरतिशयपूर्णानन्दः । एष ब्रह्मलोकः पूर्णज्ञानः इति होवाच याज्ञवल्क्यः । सम्राडाह– **सोऽहमिति** ।। अत्र एवं राज्ञा पृष्टे सति । याज्ञवल्क्यो बिभयाञ्चकार भीतवान् । भयहेतुमाह मेधावी प्रज्ञावान् राजा सर्वेभ्यः प्रश्नकर्तृभ्यः तेभ्यः आश्वलादिभ्यः मां उदरौत्सीदुत्कृष्टतयाऽवरोधं कृतवानिति । रहस्यं स्वायोग्यं । यदि मामेष पृच्छति । तदा तदपि वक्तव्यं भविष्यति त्वत्पृष्टं सर्वं वक्ष्यामीति राज्ञे वरस्य दत्तत्वादिति भीतिरभूदिति भावः ।। ६-३-३३ ।।

[हरिरवस्थात्रयनियामकः]

**स वा एष एतस्मिन् स्वप्नान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्या द्रवति बुद्धान्तायैव ।। ३४ ।।**

अतिप्रयत्नतो यावत्सुखादिकं मुक्तौ प्राप्तुं शक्यं तावतः सम्प्राप्त्यै ज्ञानपरम्परां क्रमात्प्रष्टुकामः एकमेकं विज्ञाय पुनस्ततस्ततो वरं ज्ञानं मां विमोक्षाय ब्रूहीति राज्ञा पृष्टो विद्यान्तरमाह– **स वा इति** ।। जीवास्वातन्त्र्यज्ञापनाय जीवमादाय

हरिरेव जाग्रदादिषु संयातीति नियम इति ज्ञापयितुमुक्तमेव तात्पर्यज्ञापनाय पुनरनूदितमिति ज्ञेयम् ॥ ६-३-३४ ॥

**तद् यथाऽनः सुसमाहितमुत्सर्जद् यायादेवमेवायं शरीर आत्मा प्राज्ञेनात्मनाऽन्वारूढं उत्सर्जद् याति यत्रैतदूर्ध्वोच्छ्वासी भवति ॥ ३५ ॥**

एवं सुप्त्याद्यवस्था ईशाधीनेत्युक्तं अधुना प्रतिमरणं मुक्तिकालीनं मरणं चेशायत्तमिति भावेन मरणस्वरूपमाह– **तद्यथेति** ॥ तन्निदर्शनं यथा सुसमाहितं पुमधिष्ठितम् । अनः शकटम् । ग्रामादिकं उत्सर्जद्यायात् गच्छेत् । एवमेवायं शारीरः शरीरमानी आत्मा जीवः । यत्र यदा । ऊर्ध्वोच्छ्वासी भवति । एतदेतस्मिन्काले । प्राज्ञेनात्मना हरिणान्वारूढः देहं उत्सर्जन् परित्यजन् याति ॥ ६-३-३५ ॥

**स यत्रायमणिमानं न्येति जरया वोपतपता वाणिमानं निगच्छति तद्यथाम्रमौदुम्बरं वा पिप्पलं वा बन्धनात्प्रमुच्यत एवमेवायं पुरुष एभ्योऽङ्गेभ्यः सम्प्रमुच्य पुनः प्रतिन्यायं प्रतियोन्या द्रवति प्राणायैव ॥ ३६ ॥**

न केवलं साधारणमरण एव भगवतान्वारूढो जीवः किन्तु मोक्षरूपमरणेऽपीत्याह– **स इति** ॥ सोऽयं जीवो । यत्र यदा । अणिमानं न्येति निगच्छति । भगवत्प्राप्तिरूपमोक्षं गन्तुमिच्छतीति यावत् । तदा प्राज्ञेनात्मनान्वारूढ इति पूर्वेणान्वयः । कदा भगवन्तमेतीत्यत आह– **जरयेति** ॥ जरया चरमवयोधर्मेण । उपतपता रोगादिना वाऽणिमानं निगच्छति । ननु सर्वेऽपि जरया चरमवयसाऽणिमानं यन्त्यतः कथमुपतपता वेति पक्षान्तरोक्तिरित्यतो नायं नियम इति दृष्टान्तोक्तिपूर्वमाह– **तद्यथेति** ॥ तन्निदर्शनं यथा । आम्रं औदुम्बरं वा पिप्पलमश्वत्थं वा बन्धनात्प्रमुच्यते । अत्राम्रादिशब्दाः

आम्रादिफलपराः । आम्रादिफलं आम्रादिवृक्षात् पतति । एव-मेवायं पुरुषो जीवः कलौ बाल्ये त्रेतायां मध्यमे वयसि कृते चरमे वयसि एभ्योऽङ्गेभ्यः शरीरावयवेभ्यः शरीरादित इति वा । सम्प्रमुच्य प्रतिन्यायं पूर्वावस्थातोऽवस्थान्तरं प्राप्यमिति न्यायमनुसृत्य । प्राणायैव वायव एव द्रवति । वायुद्वारा भगवन्तं प्राप्य भगवदधिष्ठितो गच्छतीति ॥ ६-३-३६ ॥

[ब्रह्मज्ञानी अर्चिरादिदेवैः पूज्यः]

**तद् यथा राजानमायान्तमुग्राः प्रत्येनसः सूतग्रामण्योऽन्नैः पानैरावसथैः प्रतिकल्पन्तेऽयमायात्ययमागच्छतीत्येवꣳ हैवंविदꣳ सर्वाणि भूतानि प्रतिकल्प्यन्त इदं ब्रह्मायातीद-मागच्छतीति ॥ ३७ ॥**

स जीवो यदा भगवन्तं गच्छति तदा विशेषमाह– **तद्यथेति** ॥ तन्निदर्शनं यथा आयान्तं आगच्छन्तम् । राजानं दृष्ट्वोग्राः अङ्गरक्षकाः । प्रत्येनसो योधाः । सूताः सारथयः । ग्रामण्यश्च भूपालाः । सूतग्रामण्यो जनपदस्थाः राजसमीपस्थाश्चेत् । तत्र जानपदस्थाः सूतग्रामण्यः । अन्नैः पानैरावसथैरावासस्थानैः पूजां प्रतिकल्पन्ते कल्पयन्ति । कथं तेषां राजागमनज्ञानमित्यत आह– **अयमिति** ॥ अयं ध्वज आगच्छति तस्मादयं राजा आयातीति ज्ञात्वा प्रतिकल्पन्त इत्यन्वयः । एवमेवं विदं पूर्वोक्तप्रकारेण भगवदपरोक्षज्ञानिनामायान्तं दृष्ट्वा सर्वाणि भूतानि अर्चिरादिदैवतनि पूजां प्रतिकल्पन्ते । ननु ज्ञानिन्यागते देवाः कुतस्तत्पूजां कुर्युरुग्रादिवत्तेषां तद्भृत्यत्वाभावादित्यत आह– **इदमिति** ॥ इदं मुक्तजीवस्वरूपं आगच्छत्यनेन सहेदं परं ब्रह्मायातीति तत्पूजार्थं प्रतिकल्पन्त इत्यर्थः ॥ ६-३-३७ ॥

**तद्यथा राजानं प्रययासन्तमुग्राः प्रत्येनसः सूतग्रामण्यो-ऽभिसमायन्त्येवमेवेममात्मानमन्तकाले सर्वे प्राणा**

**अभिसमायन्ति यत्रैतदूर्ध्वोच्छ्वासी भवति ॥ ३८ ॥**

**इति ज्योतिर्ब्राह्मणम् ॥ ६-३ ॥**

मुक्तजीवमादाय भगवति प्रतिष्ठमाने शरीरस्थाः प्राणाः किं कुर्वन्तीत्यतः तेऽपि भगवन्तमनुगच्छन्तीति [१]सदृष्टान्तमाह– **तद्यथेति** ॥ राजानं प्रयियासन्तं गन्तु-मिच्छन्तम् । राज्ञा सह स्थिताः उग्राः प्रत्येनसः सूतग्रामण्यः अभिसमा-यन्ति । एवमेवेममात्मानं मुक्तमादाय गच्छन्तं तं हरिं अन्तकाले मुक्तिकाले सर्वे प्राणाः शरीरस्थाः वागीन्द्रियदेवाः अभितः समायन्ति । 'अग्न्यादिगतिश्रुतेः' (ब्र.सू.३-१-४) इति सूत्रं तु संसारिविषयम् । अन्तकालमेवाह– **यत्रेति** ॥ ६-३-३८ ॥

**इति ज्योतिर्ब्राह्मणम् ॥ ६-३ ॥**

## अथ शारीरब्राह्मणम्

**[मरणप्रकारनिरूपणम्]**

**स यत्रायमात्मा बल्यं न्येत्य सम्मोहमिव न्येत्यथैनमेते प्राणा अभिसमायन्ति स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति स यत्रैव चाक्षुषः पुरुषः पराङ् पर्यावर्ततेऽथारूपज्ञो भवति ॥ १ ॥**

तद्यथाऽन इत्यादिनोक्तं प्रतिमरणप्रकारं अन्त्यमरणप्रकारं च विविच्य दर्शयति– **स यत्रायमात्मेत्यादिना** ॥ स पूर्वोक्तः प्रसिद्धः । आत्मा जीवो । यत्र यदा । बल्यं सर्वेषां बलकारिणं हरिम् । नितरामेत्य प्राप्य। मृतेः पूर्वं सम्मोहमिव विमुग्धत्वमिव। न्येति प्राप्नोति । मृतेः पूर्वं विमुग्धत्वं प्राप्य यदा विष्णुं यातीति यावत् । अथ तदा। एनं बल्यं विष्णुम् एते प्राणाः तत्तत् स्थानस्थिताः । तेजःस्वरूपिणो देवाः । अभिसमायन्ति। स

१. **'समायन्तीति'** अधिकं पदमस्ति - ख. ।

जाग्रत्प्रवर्तकत्वेन चक्षुःस्थो हरिः । तेजोमात्राः तेजःस्वरूपभूताः देवताः। समभ्याददानः चक्षुःस्थानाद्धृदयमेवान्ववक्रामति गच्छति । स एष चाक्षुषो दक्षिणाक्षिस्थः ; पुरुषो भगवान् । पराङ् बहिर्व्यापारं कुर्वन् स्थितो यत्र यदा प्रत्यङ् पर्यावर्तते । अन्तरा गच्छति । हृदयं प्रति गच्छति । अथ तदा विष्ण्वाश्रितो जीवः अरूपज्ञो भवति । तदा न किञ्चिद् बाह्यं जानातीत्यर्थः ॥ ६-४-१ ॥

**एकीभवति न पश्यतीत्याहुरेकीभवति न जिघ्रतीत्याहु-रेकीभवति न रसयत इत्याहुरेकीभवति न वदतीत्याहुरेकीभवति न शृणोतीत्याहुरेकीभवति न मनुत इत्याहुरेकीभवति न स्पृशतीत्याहुरेकीभवति न विजानातीत्याहुस्तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तꣳ सर्वे प्राणा अनू-त्क्रामन्ति सविज्ञानो भवति स विज्ञानमेवान्ववक्रामति तं विद्यात्कर्मणी समन्वारभेते पूर्वप्रज्ञा च ॥ २ ॥**

कुतो न जानातीत्यतोऽज्ञत्वनिमित्तं वदन् रूपाज्ञत्वमुपलक्षणमिति भावेनाह– **एकी भवतीति** ॥ जीवेश्वरौ सदा हृदि स्थौ सन्तौ । जाग्रद्दशायां रूपान्तरैश्चक्षु-रादिस्थानेषु तिष्ठतः । यदा हरिः चक्षुरादिस्थरूपैः हृदयस्थरूपेण चैकीभवति तदा जीवोऽपि चक्षुरादिस्थरूपैः हृदयस्थस्वरूपेणैकी भवति । तदा जीवो बाह्यं न पश्यति न जिघ्रतीत्याहुः प्राज्ञा इत्यर्थः । एतच्च देवाद्युत्तमजीवविषयं ध्येयम् । अन्येषां तु सदा हृदयदेश एवावस्थानेन जाग्रदादौ दक्षिणाक्ष्या-दिस्थानेऽभिमानातिशयमात्रत्वात् । उक्तं ह्यैतरेयभाष्ये द्वितीयाध्याये– 'नहि जीवस्याक्षिणि पृथक् शिरोबाह्वादिकं विद्यते। हृदिस्थमेव हि तस्य रूपम्'

इत्यादि । एकीभावानन्तरं किं भवतीत्यत आह– **तस्य हैतस्येति** ॥ भगवन्तं प्राप्तस्य स्वकीयरूपैरेकीभावं प्राप्तस्य बाह्यपदार्थाज्ञस्य जीवस्य ज्ञानिनः हृदयस्याग्रं भगवत्तेजसा प्रद्योतते प्रकाशते । तथाच सूत्रं–'तदोकोग्रज्वलनं तत्प्रकाशितद्वार' (ब्र.सू.४-७-१७) इत्यादि। तेन प्रद्योतितेन प्रकाशित-नाडीद्वारेण । एष आत्मा हरिः । जीवमादाय शरीरान्निष्क्रामति । केन द्वारेणेत्यत आह– **चक्षुषो वेत्यादि** ॥ यदि मुच्यमानो जीवः सूर्यलोके चिरं स्थित्वा मुक्तिमेति । तदा तं जीवमादाय आदित्याभिमतचक्षुर्द्वारा एष आत्मा हरिः निष्क्रामति । यदा तु सत्यलोके वासमेति । तदा मूर्ध्न एव निष्क्रामति। यदा तु श्रोत्रादिमानिलोके स्थित्वा पश्चान्मुक्तिं गन्तुं योग्यः तदा तमादायान्येभ्यः शरीरदेशेभ्यः तत्तद्देवताभिमन्यमानदेहा-वयवेभ्यो निर्यातीत्यर्थः । एवं उत्क्रामन्तं विष्णुमनुसृत्य प्राणो मुख्यवायु-रुत्क्रामति । एनमुत्क्रामन्तं प्राणमनुसृत्य सर्वे प्राणाः शरीरस्थाः देवाः उत्क्रामन्ति। तदा हरिः कथं भवतीत्यत आह– **स विज्ञान इति**॥ स विष्णुः विज्ञानेन जीवेन सहितो भवति । स भगवान् विज्ञानं जीवमेवान्वव-क्रामत्यारूढो गच्छति । एनमारुह्य गच्छन्तं तं भगवन्तमनुसृत्य विद्याकर्मणी विद्याकर्माभिमानिनौ विरिञ्चगरुडौ। समन्वारभेते गच्छतः। पूर्वप्रज्ञा योग्यताभि-मानिनी रमा चान्वारभत इति ॥ ६-४-२॥

**तद्यथा तृणजलूका तृणस्यान्तं गत्वा अन्यमाक्रममाक्रम्या-त्मानमुपसꣳहरत्येवमेवायमात्मेदꣳ शरीरं निहत्याविद्यां गमयित्वाऽन्यमाक्रममाक्रम्यात्मानमुपसꣳहरति ॥ ३ ॥**

तेनैष निष्क्रान्तीत्युक्तं निष्क्रमणं विशदयति– **तद्यथेति** ॥ तन्निदर्शनं यथेति। तृणजलूका जन्तुविशेषः तृणस्यान्तं गत्वा अन्यमाक्रममवष्टम्भभूतं तृणान्तरम्। आक्रम्य प्राप्य। आत्मानं पूर्वतृणादुपसंहरति आदत्ते। पूर्वतृणं परित्यजतीति यावत्। एवमेवायमात्मा हरिर्जीवस्य शरीरं निहत्य निवर्त्य विद्यादानेनाविद्यां

गमयित्वाऽन्यमाक्रमं जीवस्य शुद्धं स्वरूपमाक्रम्यात्मानं जीवस्याशुद्धरूपादुपसंहरति आदत्ते ॥ ६-४-३ ॥

[हरिर्जैवमलमपकृष्य नवतरं कल्याणतमं रूपं तनुते]

**तद्यथा पेशस्करी पेशसो मात्रामुपादायान्यन्नवतरं कल्याणतरꣳ रूपं तनुत एवमेवायमात्मेदꣳ शरीरं निहत्याविद्यां गमयित्वा-न्यन्नवतरं कल्याणतरꣳ रूपं कुरुते पित्र्यं वा गान्धर्वं वा [1]दैवं वा प्राजापत्यं वा ब्राह्मं वाऽन्येषां वा भूतानाम् ॥ ४ ॥**

जीवं नवतरं करोतीति प्रागभिप्रेतमर्थं सदृष्टान्तमाह– **तद्यथेति** ॥ पेशस्कारी सुवर्णकारः पेशसः सुवर्णस्य मात्रामंशं उपादाय तद्गतमलं निहत्य शुद्धमंशमुपादायेत्यर्थः। अन्यदिव नवतरं प्रागननुभूतं कल्याणतरं मलापकर्षणाद्रूपं कटकादिकं तनुते कुरुते। एवमेवायमात्मा हरिः जीवस्य स्वर्णमलस्थानीयमिदं शरीरं निहत्याविद्यां गमयित्वेत्यादि व्यक्तम्। प्राजापत्यं प्रजापतिशब्दितरुद्र-सम्बन्धि। ब्राह्मं ब्रह्मसम्बन्धि। अन्येषां भूतानां मनुष्योत्तमानां रूपमित्यन्वेति ॥ ६-४-४ ॥

[अमितमहिमः हरिः]

**स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजो-मयोऽतेजोमयः काममयोऽकाममयः क्रोधमयोऽक्रोधमयो धर्ममयोऽधर्ममयस्सर्वमयस्तद्यदेतदिदंमयोऽदोमय इति**

---

१. 'दैवं वे' ति नास्ति-ख.ग.। २. यस्य बुद्धिर्बुद्धितत्त्वात्मिका न भवति। यस्य मनो मनस्तत्त्वात्मकं न भवति सोऽमनोमयः एवमादिक्रमेणाविज्ञानमयादिशब्दानां अर्थो ज्ञेयः यस्य गन्धः पार्थिवो न भवति सोऽपृथिवीमयः यस्य तृप्तिरबात्मिका न भवति सोऽनापोमय इत्याद्यर्थो भावबोधे उक्तः।

**यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्मणा भवति पापः पापेनाथो खल्वाहुः काममय एवायं पुरुष इति स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसम्पद्यते ॥ ५ ॥**

नानाप्रकारेण पित्रादिजीवरूपं करोतीत्युक्तं तद्घटनाय तस्य महिमानमाह– **स वा इति** ॥ शुद्धमुक्तस्वरूपकर्तृत्वेन प्रकृतो हरिः दूरस्थत्वात्स इत्युक्तो वै । समीपस्थत्वादयमित्युच्यते । आत्मा व्याप्तः । ब्रह्म गुणपूर्णः । विज्ञानमयः पूर्णज्ञानस्वरूपः । अत्र सर्वत्र मयट् प्राचुर्यार्थः स्वरूपार्थश्च ध्येयः । सर्वमन्तृस्वरूपत्वान्मनोमयः । बलपूर्णस्वरूपत्वात्प्राणमयः । सर्वद्रष्टृस्वरूपत्वाच्चक्षुर्मयः । सर्वश्रोतृस्वरूपत्वाच्छ्रोत्रमयः । सर्वाधारस्वरूपत्वात्सुगन्धस्वरूपत्वाच्च पृथिवीमयः । सर्वतृप्तिकरत्वादापोमयः । अम्मय इति वक्तव्ये छान्दसो निर्देशः । सर्वकर्तृस्वरूपत्वाद्वायुमयः । अवकाशप्रदत्वादाकाशमयः । पूर्णतेजःस्वरूपत्वात्तेजोमयः । अप्राकृततेजःस्वरूपत्वादतेजोमयः । सृष्ट्यादीच्छास्वरूपत्वात्काममयः । अकाममयः । प्राकृतेच्छाशून्यः । सर्वदुष्ट-प्रतीपत्वात्क्रोधमयः । अक्रोधमयः जीवक्रोधसदृशक्रोधशून्यः । सुखादिधर्मस्वरूपत्वाद्धर्ममयः । अधर्ममयः प्राकृतधर्मशून्यः । सर्वमयः प्रकृत्यादिसर्वप्रधानः । सर्वगुणप्रधानश्च । अत्रातेजोमयो क्रोधमय इत्याद्युक्तिरुपलक्षणम् । पूर्वत्र विज्ञानमय इत्यादावपि सर्वत्राविज्ञानमयोऽमनोमयो प्राणमयोऽचक्षुर्मय इत्यादि तन्निषेधवाक्यानि ग्राह्याणि । तेषामर्थस्तु प्राकृतज्ञानमनआदिलक्षणज्ञानादिरहितत्वादविज्ञानमय इत्यादिरूपेण 'अप्रकृतस्वरूपत्वादतन्मय इतीरित' इति भाष्ये व्यक्तः । तत् अतीतवर्तमानकालयोरेकप्रकारम् । यत् ब्रह्माण्डाच्छरीराद्वा बहिरन्तश्चैकप्रकारं एतत् वर्तमानभविष्यत्कालयोरेकप्रकारं वर्तमानजगत्प्रधानत्वादिदंमयः । वर्तमानस्वरूपत्वाच्चेदंमयः । अतीतानागत-

प्रधानत्वादतीतानागतस्वरूपत्वाच्चादोमयः । यदर्थं हरेः स वा इत्यादिना महिमोक्तः तदाह– **इतीति** ।। हेत्वर्थोऽत्रेतिशब्दः । इति यतः स वा इत्यादिनोक्तगुणयुक्तोऽतः स हरिः यथाकारी जीवं यथा करोति । यथाचारी यथाचारयति । तथा तथा भवति जीवः । तदेव व्यनक्ति– **साधुकारीति** ।। स हरिर्जीवं साधुं करोति चेत्साधुर्भवति जीवः । पापं करोति चेज्जीवं पापो भवति जीव इत्यर्थः। ईश्वर एव जीवं साधुं पापं करोति चेत् किं पुण्यपापकर्मणोः कृत्यमित्यतः तत्कारितेन कर्मणा तथा भवतीत्याह– **पुण्य इति** ।। ईश्वराधीनत्वं जीवस्य वृद्धसम्मत्या दृढयति– **अथो खल्विति** ।। अथो तस्मादीशाधीनत्वाज्जीवस्यायं पुरुषो जीवः। काममयः ईश्वरेच्छाधीन इति प्राज्ञा आहुः । कुतः स भगवान्यथाकामो भवति । तत्क्रतुः तथाकामो भवति । इत्थं करिष्याम्येवेति निश्चयरूपः कामः क्रतुशब्दार्थः । यत्क्रतुभर्वति तन्निष्ठावान् भवति । तत्कर्म कुरुते । यत्कर्म कुरुते तदनुगुणं फलं सम्पद्यते । प्राप्नोति । तस्मादीशेच्छाधीनो जीव इति ।। ६-४-५ ।।

[यथा कर्म तथा फलम्]

**तदेष श्लोको भवति ।।**

**तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य ।**
**प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम् ।।**
**तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मण इति नु कामय-मानोऽथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति ।। ६ ।।**

भगवत्प्रेरितो जीवः कर्म कुर्वंस्तत्फलमभिसम्पद्यत इत्युक्तार्थे मन्त्रोऽस्तीत्याह– **तदेष इति** ।। तत् तत्रोक्तार्थे । अस्य संसारिणः । लङ्गशरीरं मनश्च ।

यत्र यस्मिन् फले निषक्तं नितरां सक्तं तत्र फले सक्तः पुरुषः तदेव फलं तत्साधनीभूतस्वकृतकर्मणा सह एति गच्छति । अयं पुरुषः यत्किञ्चेह लोके कर्म करोति । तस्य कर्मणोऽन्तमवसानं प्राप्य तस्माल्लोकात्कर्मफलभूतात्स्वर्गादेः । पुनरस्मै लोकाय भूलोकाय । एत्यागच्छति । किमर्थं कर्मणे कर्म कर्तुम् । मुक्तामुक्तयोर्द्वयोरपि प्रकृतत्वात्किंपरोऽयं मन्त्र इत्यतः उपनिषत्स्वयमेवाह– **इति नु कामयमान इति** ॥ संसारीत्यर्थः । उक्त इति शेषः । संसारिणं निरूप्य मुक्तस्वरूपमाह– **अथाकामयमान इति** ॥ अथेत्यर्थान्तरे । योऽकामः अकारवाच्यविष्णुकामः । निष्कामः अयोग्यकामनारहित 'अकामयमानः' योग्यकामस्यापि कदाचिदेवोद्भूतत्वेनानसर्वकालीनत्वात् अकामयमानः । कामिताशेषप्राप्तेराप्तकामः । चिदानन्दस्वरूप आत्मैव कामः काम्यो यस्येत्यात्मकामः। तस्य एवम्भूतस्य मुक्तस्य । प्राणाः नोत्क्रामन्ति । पुनर्न म्रियन्त इत्यर्थः । प्रलये कथमित्यत आह । स मुक्तो ब्रह्मैव सञ्जीव एव सन् । जीवभावापरित्यागेनैव । परं ब्रह्माप्येति । प्रलये भगवदुदरं प्रविशतीत्यर्थः ॥ ६-४-६ ॥

[मुक्तिर्मृतिविरहिता]

**तदेष श्लोको भवति ॥**

**यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।**
**अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इति ॥**
**तद्यथाऽहिर्निलयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदꣳ शरीरꣳ शेतेऽथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव सोऽहं भगवते सहस्रं ददामीति होवाच जनको वैदेहः ॥ ७ ॥**

न तस्य प्राणा उत्क्रामन्तीत्युक्तार्थे मन्त्रमुदाहरति– **तदेष इति** ॥ अस्य

संसारिणः। ये हृदि स्थिताः अन्तःकरणगताः कामास्ते सर्वे यदा प्रमुच्यन्ते। तदा मुक्तो भवति। अथ मुक्त्यनन्तरं मर्त्यः पूर्वं मरणशीलः। मुक्त्यनन्तरममृतो भवति मृतिहीनो भवति। अत्र मुक्तौ प्रतिप्रलये च। ब्रह्म समश्नुते प्राप्नोति। ज्ञानिनो देहत्यागप्रकारं दर्शयति देहस्य हेयत्वज्ञापनाय **तद्यथेत्यादिना** ॥ तन्निदर्शनं यथा। अहिः सर्पः निलीयतेऽस्यामिति अहिनिलयनी सर्पत्वक्। वल्मीके प्रत्यस्ता परित्यक्ता। मता जीवहीना। शयीत। एवमेवेदं शरीरं जीवेन परित्यक्तं शेते। मुक्त्यनन्तरं जीवो न म्रियत इत्युक्तं तर्हि मुक्तेशयोः को विशेष इत्यत आह– **अथेति** ॥ अथ मुक्त्यनन्तरमेवायं जीवोऽशरीरो भवति। न म्रियत इति यावत्। प्राणोऽमृतः कदापि न म्रियते। कः प्राण इत्यत आह– **ब्रह्मैवेति** ॥ न केवलं प्राणाख्यं परं ब्रह्मैव नित्यमुक्तं किन्तु श्रीरपीत्याह– **तेज इति** ॥ श्रीतत्त्वमेव चामृतं कदापि न मृतमित्यर्थः। एवं श्रुत्वा राजा गरुदक्षिणां प्रतिजज्ञ इत्याह– **सोऽहमिति** ॥ ६-४-७ ॥

[हरिरेव मुक्तिदः]

**तदेते श्लोका भवन्ति ॥**

**अणुः पन्था विततः पुराणो माꣳ स्पृष्टोऽनुवित्तो मयैव ।**
**तेन धीरा अपियन्ति ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वो विमुक्ताः ॥**

भगवान्मोक्षदातेत्युक्तार्थे मन्त्राः सन्तीत्याह– **तदेत इति** ॥ तत्तत्र पूर्वोक्तार्थे। अणुर्विततो व्याप्तः सुखहेतुस्वप्राप्तिसाधनत्वात्पन्थाः। पुराणोऽनादिः। मां श्रियं। श्रियेति यावत्। स्पृष्टः आश्रितः। श्रीपतित्वादिति भावः। मयैव श्रियैव। अनुवित्तो ज्ञातः। ऊर्ध्वः सर्वतो विशिष्टः। यो भगवान् तेन तत्प्रसादेन। धीराः ब्रह्मविदः। इतः संसाराद्विमुक्ताः। स्वर्गं स्वरूपभूत-रमणज्ञानात्मकं लोकं वैकुण्ठादिकमपि यन्ति प्राप्नुवन्ति ॥ ६-४-८ ॥

**तस्मिञ्छुक्लमुत नीलमाहुः पिङ्गलं हरितं लोहितं च ।**

**एष पन्था ब्रह्मणा ह्यनुवित्तस्तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्च ॥ ९ ॥**

तृतीयज्योतिर्ब्राह्मणे तावताणिम्ना तिष्ठन्ति शुक्लस्य नीलस्येत्यादिनोक्तार्थे मन्त्रं पठति– **तस्मिन्निति** ॥ तस्मिन् हरौ तस्य हरेरित्यर्थः । शुक्लं वासुदेवाख्यं नीलमनिरुद्धाख्यं पिङ्गलं सङ्कर्षणाख्यं हरितं प्रद्युम्नाख्यं लोहितं नारायणाख्यं इति पञ्चरूपाणि सन्तीत्याहुरिति योज्यम् । तशब्दश्चशब्दार्थे । एष पञ्चरूपो हरिः पन्थाः सुखहेतुस्वप्राप्तिसाधनत्वात् । ब्रह्मणा चतुर्मुखेन । अनुवित्तो ज्ञातः । ह प्रसिद्धम्। ब्रह्मवित् परब्रह्मज्ञानी । तैजसः महातेजोरूपश्रीतत्त्व-ज्ञानी । पुण्यकृत् भगवत्कर्मकर्तापि। तेनैव भगवत्प्रसादेनैव प्रागुक्तस्वर्गलोक-शब्दितविष्णुलोकमेति प्राप्नोति । एतेन ब्रह्मादिप्रसादेनैव मुक्तिसम्भवे किमीश्वर-प्रसादेनेति निरस्तम् ॥ ६-४-९ ॥

[मिथ्याज्ञाननिन्दासमुचितभगवज्ज्ञानं मुक्तिनिदानम्]

**अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते ।**
**ततो भूय इव ते तमो य उ विद्यायां रताः ॥ १० ॥**

न केवलं भगवज्ज्ञानमेव मुक्तिहेतुः किन्तु मिथ्याज्ञाननिन्दासमुचितमेवेति भावेनाह– **अन्धमिति** ॥ ये अविद्यौ विद्याविरुद्धमिथ्याज्ञानं तद्विषय-मन्यथाकारमिति यावत् । उपासते ते अन्धंतमः प्रविशन्ति । ये विद्यायां उ एव तत्त्वज्ञान एव । रता न मिथ्याज्ञाननिन्दका इति यावत् । ते ततः अन्यथोपासकाद्भूय इव । किञ्चिद्विशेषेण तमः प्रविशन्ति । ये विद्यायां उ एव तत्त्वज्ञान एव । रता न मिथ्याज्ञाननिन्दका इति यावत् । ते ततः अन्यथोपासकाद्भूय इव । किञ्चिद्विशेषेण तमः प्रविशन्तीत्यनुषङ्गः ॥ ६-४-१० ॥

[सत्युपदेष्टरि तत्त्वमविदुषां तम एव भवति]

**अनन्दा नाम ते लोका अन्धेन तमसाऽऽवृताः ।**
**तांस्ते प्रेत्याभिगच्छन्त्यविद्वाꣳसो बुधो जनाः ॥ ११ ॥**

सत्यप्युपदेष्टरि भगवद्द्वेषात्तत्त्वमविदुषां मिथ्याज्ञानिनामनर्थंमन्त्रेणाह– **अनन्दा इति** ॥ बोधयतीति भुत् तस्माद्बुधः । ज्ञानिनः सकाशाद्भगवत्स्वरूपमविद्वांसो ये जनाः ते प्रेत्य अन्धेन आन्ध्यहेतुना तमसा आवृताः अनन्दाः सुखविरुद्ध-दुःखरूपाः । ते प्रसिद्धाः ये लोकाः तानभिगच्छन्ति ॥ ६-४-११ ॥

[ब्रह्माभिन्नश्चेज्जीवः कथं दुःखी स्यात्]

**आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ।**
**किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत् ॥ १२ ॥**

प्राज्ञेनात्मनान्वारूढ इत्यादिना जीवेशयोर्भेद उक्तः तद्दार्ढ्यायाभेदविदो दोषमाह मन्त्रेण– **आत्मानमिति** ॥ चेच्छब्दो यद्यर्थे । यदि पुरुषो जीवः । अयं परमात्मा अहमस्मीति भगवन्तं विजानीयात् । ज्ञातुं योग्यः स्यात्तर्हि किमिच्छन् तस्य विवरणं 'कस्य कामाय' कस्मै कामाय किमर्थमिति यावत् । शरीरमनुसञ्ज्वरेत् सन्तापयेद्दुःखी भवेदित्यर्थः । जीवः स्वस्य भगवत्तादा-त्म्यानुसन्धानयोग्यश्चेत्कुतो देहच्छेदादिना दुःखी स्याद्धरेरदुःखित्वादिति भावः ॥ ६-४-१२ ॥

[भगवज्ज्ञानं मुक्तिनिदानम्]

**यस्यानुवित्तः प्रतिबुद्ध आत्माऽस्मिन् सन्दोहे गहने प्रविष्टः । स विश्वकृत्स हि सर्वस्य कर्ता तस्य लोकः स उ लोक एव ॥ १३ ॥**

भगवज्ज्ञानं मुक्तिहेतुरित्यत्र मन्त्रान्तरमाह– **यस्येति** ॥ हि यस्मात्स आत्मा सर्वस्य कर्ता । तस्मात्स विश्वकृत् । मुख्यवायोः कर्ता । अस्मिन्सन्दोहे देहे । गहने हृदयगुहायां प्रविष्टः । प्रतिबुद्धः सर्वज्ञः । स आत्मा यस्य येनोपासकेनानुवित्तो ज्ञातः । तस्योपासकस्य । लोकः स उ लोक एव प्रसिद्धो भगवल्लोक एव भवतीत्यर्थः । तदाह सूत्रे 'तन्निष्ठस्य मोक्षोपदेशात्' (ब्र.सू.१-१-७) इति ॥ ६-४-१३ ॥

[गुरूपदेशेनैव ज्ञानं सम्पाद्यम्]

**इहैव सन्तोऽथ विद्मस्तद् वयं न चे[1]दवेदीर्महती विनष्टिः ।**
**य एतद् विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति ॥ १४ ॥**

गुरूपदेशेनैव ज्ञानं सम्पाद्यमन्यथानर्थ इत्यत्र मन्त्रमाह– **इहैवेति** ॥ अथ ज्ञानिसद्भावकाले । इह यस्मिन् जन्मन्येव । सन्तः सज्जनाः वयं तत् परं ब्रह्म । विद्मः जानीम इति मन्त्रद्रष्टृवचनम् । कालान्तरे सम्पाद्यतामिति वदन्तं प्रत्याह– **नेति**। न चेदवेदीः परं ब्रह्म न जानीयाश्चेदिति साधुजनं प्रत्युच्यते । तर्हि महती विनष्टिः। गुरूपदेशजन्यज्ञानस्य फलमाह– **य एतदिति** ॥ एतद् ब्रह्म गुरूपदेशेन ये विदुस्ते अमृताः मुक्ताः भवन्ति। अवेदिन उक्तां विनष्टिं व्यनक्ति– **अथेति** ॥ अथेत्यर्थान्तरे। इतरे गुरूपदेशोल्लङ्घनवन्तः । दुःखमेव प्राप्नुवन्तीति ॥ ६-४-१४ ॥

[परमात्मज्ञः भयविकलः]

**यदैतमनुपश्यन्त्यात्मानं देवमञ्जसा ।**
**ईशानं भूतभव्यस्य न ततो विजुगुप्सते ॥ १५ ॥**

भगवतो मुक्तिहेतुत्वे मन्त्रान्तरमाह– **यदैतमिति** ॥ ये भूतभव्यस्येशानम्। देवं क्रीडादिगुणविशिष्टं । एतमात्मानं । यदाञ्जसाऽनुपश्यन्ति । ततः आत्मज्ञानानन्तरं न विजुगुप्सते । आत्मानं गोप्तुं नेच्छति । भयाभावादिति भावः[2] ॥ ६-४-१५ ॥

[हरिर्नित्यमुक्तः सर्वाधारः]

**यस्मादर्वाक्संवत्सरोऽहोभिः परिवर्तते ।**
**तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् ॥ १६ ॥**

---

१. 'चेदीहा' - ख. । २. तदुक्तं ईशावास्यभाष्ये–सर्वगं परमात्मानं सर्वं च परमात्मनि । यः पश्येत्स भयाभावान्नात्मानं गोप्तुमिच्छति ॥ इति ॥

तद्येतदिदंमयोऽदोमय इत्यत्र हरेरविकारत्वमुक्तं तत्र मन्त्रमाह– **यस्मादिति** ॥ अहोभिः सह संवत्सरो यस्मादर्वाक् परिवर्तते । तस्मिन्विकारं कर्तुमसमर्थ इति यावत् । तज्ज्योतिषां ज्योतिः ज्योतिष्ट्वप्रदं आयुः । अचलम् । अमृतं नित्यमुक्तं देवा उपासते । ह प्रसिद्धम् ॥ ६-४-१६ ॥

**यस्मिन् पञ्च पञ्च जना आकाशश्च प्रतिष्ठितः ।**
**तमेव मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम् ॥ १७ ॥**

हरेरेव मुक्तिहेतुत्वे मन्त्रान्तरं पठति– **यस्मिन्निति** ॥ यस्मिन् देहस्थे हरौ पञ्च पञ्चजनाः प्रतिपुरुषं पञ्च पञ्चजनाः । प्रतिष्ठिताः आकाशो मूलप्रकृतिश्च प्रतिष्ठितः स्थितः । तमेवात्मानं मन्ये जानामि । किं तज्ज्ञानेनेत्यत उक्तम्– **विद्वानिति** ॥ अमृतं ब्रह्म विद्वानमृतो मुक्तो भवति ॥ ६-४-१७ ॥

**प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रम् ।**
**मनसो ये मनो विदुस्ते निचिक्युर्ब्रह्म पुराणमग्र्यम् ॥ १८ ॥**

के ते पञ्चजना इत्यतः ज्योतिषां ज्योतिरिति प्रागुक्तं ज्योतिरेकं अन्ये चत्वारः प्राणादय इति भावेन तद्वेदिनः फलं चाह– **प्राणस्य प्राणमित्यादिना** ॥ प्राणादेः प्राणनादिप्रदं ये विदुः ते पुराणं पुरातनं अग्र्यं श्रेष्ठं ब्रह्म निचिक्युः प्राप्नुयुरिति । तदाह सूत्रे 'प्राणादयो वाक्यशेषात्' (ब्र.सू.१-४-१३) 'ज्योतिषैकेषामसत्यन्न' (ब्र.सू.१-४-१४) इति ॥ ६-४-१८ ॥

[ब्रह्मणस्तद्गुणानां च भेददर्श्यधरं तमः याति]

**मनसैवानुद्रष्टव्यं नेह नानास्ति किञ्चन ।**
**मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥ १९ ॥**

शुक्लस्य, नीलस्येत्यादिनोक्तभगवद्रूपाणां विज्ञानमस्य इत्यादिनोक्तगुणानां च भेददर्शिनोऽनर्थं ब्रह्मापरोक्षज्ञानकरणं वदन्नेवाह– **मनसैवेति** ॥ इह ब्रह्मणि । किञ्चन रूपगुणादिकं नाना भिन्नं नास्तीत्यर्थः । इह ब्रह्मणि । किञ्चन

रूपादिकं । नाना भिन्नं इवशब्दाद् भिन्नाभिन्नं वा पश्यति स मृत्योः मृत्युं अन्धन्तमः प्राप्नोतीत्यर्थः ॥ ६-४-१९ ॥

[ब्रह्मणस्तद्गुणानां चाभेद एव ज्ञेयः]

**एकधैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवम् ।**

**विरजः पर आकाशादज आत्मा महान् ध्रुवः ॥ २० ॥**

तर्हि कथं ज्ञेयमित्यत आह– **एकधैवेति** ॥ तस्मादिति ग्राह्यम् । भेदज्ञानेऽनर्थसत्त्वात् । अप्रमयं परिमितिहीनम् । ध्रुवं नित्यम् । विरजः निर्दोषं रजोपलक्षितसर्वदोषरहितम् । आकाशान्मूलप्रकृतेः परं एतद् ब्रह्म । एकधैव एकप्रकारेणैव । गुणक्रियादिभिः सविशेषाभेदेनैव द्रष्टव्यमित्यर्थः । मनसेत्यनुषज्यते । मनसः श्रवणादिकं सहकारीति भावेनाह– **अज इत्यादिना** ॥ धीरो धैर्यशाली । ब्राह्मणो ब्रह्माणनयोग्यो नरः योऽजः जननहीनः । महानपरिच्छिन्नः । ध्रुवः नित्यः आत्मा ॥ २० ॥

**तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।**

**नानुध्यायेद्बहूञ्छब्दान् वाचो विग्लापनꣳ हि तदिति ॥ २१ ॥**

तमेव परोक्षतो विज्ञाय । प्रज्ञां साक्षात्कारम् । कुर्वीत सम्पादयेत् । तमेवेत्युक्तैवकारव्यावर्त्यमाह– **नानुध्यायेदिति** ॥ कुतो न ध्यायेन्नाभ्यसेदित्यत उक्तम्– **वाच इति** ॥ तत् अग्र्यविषयकबहुशब्दव्यवहरणम् । वाचो वागिन्द्रियस्य । विग्लपनं श्रमकरमत इत्यर्थः । इतिशब्दः श्लोकसमाप्तौ ॥ ६-४-२१ ॥

[यज्ञदानतपोभिर्ब्रह्मज्ञानं जायते]

**स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयानेष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष**

**सेतुर्विधरण एषां लोकानामसम्भेदाय तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनैतमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्त्येतद्ध स्म वै तत्पूर्वे विद्वाꣳसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च [1]लोकेषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवतः स एष नेति नेत्यात्माऽगृह्यो नहि गृह्यतेऽशीर्यो नहि शीर्यतेऽसङ्गो नहि सज्जतेऽसितो न व्यथते न रिष्यत्येतमु हैवैते न तरत इत्यतः पापमकरवमित्यतः कल्याणमकरवमित्युभे उ हैवैष एते तरति नैनं कृताकृते तपतः ॥ २२ ॥**

अज आत्मा महान् ध्रुव इति श्रवणात्पूर्वमन्त्रस्य चतुर्मुखपरत्वप्रतीतिं तदनुवादपूर्वं निराह– **स वा एष इति** ॥ एष मन्त्रोक्तो महानज आत्मा । स वै स एव । स कः? यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तमिच्छेत इति वाक्ये 'योऽयं विज्ञानमयः प्राणेषु तिष्ठति'इत्युक्तः यश्च 'य एष प्रसिद्धोऽन्तर्हृदये हृदयान्तर्वर्तमान आकाशस्तस्मिन् शेत' इत्युक्तः स वा इत्यर्थः । तस्य महिमानमाह– **सर्वस्येति** ॥ सर्वमस्य वशे वर्तत इति सर्वस्य वशी । सर्वस्येशस्य ब्रह्मरुद्रादेरनश्चेष्टक इति सर्वस्येशानः। सर्वस्य ब्रह्मरुद्रादेः सकाशाद्गुणैरधिकः पालकश्चेति सर्वस्याधिपतिः । यश्च स प्रसिद्धो हरिः जीववत्साधुना कर्मणा भूयान् न । नो एव नैवासाधुना कर्मणा कनीयान्

१. '**लोकेषणायाश्च**' इति नास्ति-ग. ।

पुण्यपापकृतविकारो नास्त्येवेत्यर्थः । एष सर्वेश्वरः । एष भूताधिपतिः भूत एव पूर्वकालमारभ्यैवाधिपतिर्नास्याधिपत्यमादिमदित्यर्थः । एष भूतपालः । अनादिकालमारभ्यैव पालक इत्यप्यवधेयम् । यश्चैष एषां लोकानां असम्भेदाय असाङ्कर्याय । विधरणः विधारणसमर्थः सेतुराश्रय इति । तदाह सूत्रे 'धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः' (ब्र.सू. १-३-१६) इति । तमेतमुक्तगुणवन्तम् । ब्राह्मणाः ब्रह्माणनयोग्याः । वेदानुवचनेन वेदाध्ययनेन । यज्ञेन दानेन । तपसा कृच्छ्रचान्द्रायणादिकायक्लेशरूपतपसा । अनाशकेनोपवासेन । विविदिषन्ति वेदितुमिच्छन्ति । तदाह सूत्रे 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' (ब्र.सू. ३-४-२६) इति । वेदनफलमाह– **एतमिति** ॥ एतं पूर्वोक्तमहिमयुक्तमेव विदित्वा मुनिः ज्ञानरूपो मुक्तो भवति । किञ्च एतं भगवन्तमेव लोकं आश्रयं इच्छन्तः प्रार्थयमानाः प्रव्राजिनः प्रव्रजनयोग्याः प्रव्रजन्ति निषिद्धकाम्यकर्मत्याग-रूपसन्न्यासवन्तो भवन्ति । उपनिषत्स्वोक्तार्थे पूर्वाचारं प्रमाणयति– **एतदिति** ॥ एतद्भगवानेवाश्रय इत्येतत्प्रमेयं विद्वांसः पूर्वे प्रजां प्रजादिकं न कामयन्ते ह स्म वै । प्रजाद्यकामने हेतुमाह– **किमिति** ॥ येषां नोऽस्माकम् । अयं पूर्वोक्त-महिमयुक्तो हरिः आत्मा स्वामी अयं लोकः आश्रयश्च । ते वयं किं प्रजया करिष्याम इति भावेन प्रजां न कामयन्त इत्यन्वयः । तेह स्मेत्यादिवाक्यं पूर्वाध्याये पञ्चमे कहोळब्राह्मणे व्याख्यातम् । विदित्वेत्युक्तवेदनकर्मणो हरेः महिमान्तरमाह– [१]**स एष नेतीति** ॥ एतदपि वाक्यं व्याख्यातं पूर्वाध्यायान्त्यभागे । मुक्तिस्वरूपमाह–**एतमिति** ॥ अतो हरेः सकाशात्तत्प्रेरणयेति यावत् । अहं पापमकरवम् । कल्याणमकरवमिति । एते भावने एतं मुक्तमेव न तरतो नैव व्याप्नुतः । मुक्तं भावने कुतो न तरत इत्यतः तत्स्वामिनस्तत्तरणादित्याह– **उभे इति** ॥ एष हरिः । एते उभे भावने तरति नित्यं तीर्णो वर्तते । भगवतस्तत्तरणं नाम किमित्यत

१. यज्ज्ञानादीषणात्रयव्युत्थानलक्षणो मोक्षो, यस्माच्चानन्दादिभिक्षा तस्य महिमानमाह– **स एष नेति** । भा.बो. ।

आह– **नैनमिति** ॥ एनं कृताकृते पुण्यपापे न तपत इति । पुण्याकरण-पापकरणनिमित्तविकारो नैव तस्यास्तीत्यर्थः ॥ ६-४-२२ ॥

[ब्रह्मज्ञानिनः पुण्यपापे न तपतः]

**तदेतदृचाभ्युक्तम्। [१]तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति सर्वमात्मानं पश्यति नैनं पाप्मा तरति सर्वं पाप्मानं तरति नैनं पाप्मा तपति सर्वं पाप्मानं तपति विपापो विरजोऽविचिकित्सो ब्राह्मणो भवत्येष ब्रह्मलोकः सम्राळिति होवाच याज्ञवल्क्यः सोऽहं भगवते विदेहान् ददामि मां चापि सह दास्यायेति ॥ २३ ॥**

भगवन्तं पुण्यपापे न तपतः । तज्ज्ञानिनं मुक्तं च न तपत इत्युक्तार्थे मन्त्रमाह– **तदेतदिति** ॥ ब्रह्मणा वेदेन अण्यते गम्यत इति ब्राह्मणो विष्णुः । ब्रह्माण इति वक्तव्ये स्वरव्यत्यय आधिक्यार्थः । तस्य विष्णोः । एष पूर्वोक्तो महिमा नित्यः । कुतः शुभकर्मणा न वर्धते पापकर्मणा नो कनीयान् । तस्य नित्यमहिम्नो हरेः । पदवित्स्वरूपज्ञानी स्यात् । तं विदित्वा । पापकेन कर्मणा न लिप्यते । इतिशब्दो ऋक्समाप्त्यर्थः । तस्माद्भगवज्ज्ञानस्य मुक्तिहेतुत्वात् । एवंवित् भगवज्ज्ञानं मुक्तिहेतुरिति जानन् । शान्तो भगवन्निष्ठः । तितिक्षुः द्वन्द्वसहिष्णुः । समाहितः यथावस्तुज्ञानी भूत्वा आत्मन्येव स्वस्मिन्नेव स्थितमात्मानं हरिं पश्यति पश्येत् कथं ज्ञातव्य इत्यत आह– **सर्वमिति** ॥ पूर्णमात्मानं पश्येदित्यर्थः । तथा ज्ञानिनः फलमाह– **नैनमिति** ॥ एनं ज्ञानिनम् । पाप्मा न तरति न प्राप्नोति । प्रत्युतायमेव सर्वं पाप्मानं तरति

१. यद्वा न केवलं श्रवणमननादिरूपपरोक्षज्ञानमेवापरोक्षज्ञानसाधनं किन्तु शान्त्यादिसहितमिति वदन् ज्ञानस्य मोक्षसाधनत्वे ज्ञानिनामाचारं प्रमाणयति– **तस्मादिति** ।

तीर्णो वर्तते । एतदेव विवृणोति– **नैनमिति** ॥ एवं नैनं रजस्तरति । नैनं विचिकित्सा सन्देहः तरतीत्यपि ध्येयम् । कुत एतदित्यतस्तदुपास्यस्य हरेः पापाद्यस्पृष्टत्वादित्याह– **विपाप इति** ॥ नित्यं विपापो विरजो विरागो अविचिकित्सो अपगतसन्देहो भवति ब्राह्मणो वेदगम्यो हरिः यतः अतस्त-ज्ज्ञान्यपि तादृश इति हे सम्राळेष हरिः ब्रह्मलोकः परिपूर्णज्ञानस्वरूप इति होवाच याज्ञवल्क्यः । एवं श्रुतभगव-त्स्वरूपो राजा गुरुदक्षिणां प्रतिजज्ञ इत्याह– **सोऽहमिति** ॥ ६-४-२३ ॥

**स वा एष महानज आत्माऽन्नादो वसुदानो विन्दते वसु य एवं वेद ॥ २४ ॥**

विद्यान्तरमाह– **स वा इति** ॥ अन्नमत्तीत्यन्नादः । वसु ददातीति वसुदानः । एतज्ज्ञानिनः फलमाह– **विन्दते वसु य एवं वेदेति** ॥ वसु धनम् ॥ २४ ॥

**स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्माभयं वै ब्रह्माभयं हि वै ब्रह्म भवति य एवं वेद ॥ २५ ॥**

विद्यान्तरमाह– **स वा इति** ॥ अजरो जराहीनः न मरिष्यतीत्यमरः । अमृतो मृतिहीनः । अभयः भयहीनः । ब्रह्मणोऽभयत्वं श्रुतिप्रसिद्धमित्याह– **अभयं वै ब्रह्मेति** ॥ तथा ज्ञानिनः फलमाह– **अभयं हीति** ॥ य एवं वेद तस्य ब्रह्म अभयं भवति । भयराहित्यं करोतीत्यर्थः ॥ २५ ॥

इति शारीरब्राह्मणम्

## अथ मैत्रेयिब्राह्मणम्

[मैत्रेय्या अध्यात्मनिष्ठा]

**अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुः मैत्रेयी च कात्यायनी च तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव स्त्रीप्रज्ञैव तर्हि**

**कात्यायन्यथ ह याज्ञवल्क्योऽन्यद्वृत्तमुपाकरिष्यन् ॥ १ ॥ मैत्रयीति होवाच याज्ञवल्क्यः प्रव्रजिष्यन्वा अरेऽहमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्याऽन्तं करवाणीति ॥ २ ॥**

भगवतोऽन्तर्यामित्वेनोक्तं सर्वप्रेरकत्वं सर्वथा ज्ञेयमिति भावेन पुनः प्रागुक्तमेव ब्राह्मणमावर्तयति– **अथ ह याज्ञवल्क्यस्येति** ॥ तर्हि तदानीं अन्यद्वृत्तं सन्यासाश्रम्। प्राग्वदर्थः सर्वत्र ज्ञेयः ॥ ६-५-१,२ ॥

**सा होवाच मैत्रेयी यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात् स्यान्वहं तेनामृताऽहो नेति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवता जीवितं तथैव ते जीवितं स्यादमृतत्वस्य तु नाशाऽस्ति वित्तेनेति ॥ ३ ॥ सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान् वेत्थ तदेव मे ब्रूहीति ॥ ४ ॥**

हे भगोः इयं सर्वा पृथिवी वित्तेन पूर्णा मे यत्स्यात्तेनाहममृता स्यां किन्नु उताहो नेति । सा मैत्रेय्युवाचेति योजना ॥ ६-५-४ ॥

[परमात्मेच्छया सर्वं प्रियं भवति]

**स होवाच याज्ञवल्क्यः प्रिया वै खलु नो भवती सती प्रियामवृधद्धन्त तर्हि भवत्येतद्व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ॥ ५ ॥ सा होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति न**

वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति न वा अरे पशूनां कामाय पशवः प्रिया भवन्त्यात्मनस्तु कामाय पशवः प्रिया भवन्ति न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनस्तु कामाय ब्रह्म प्रियं भवति न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्रं प्रियं भवति न वा अरे लोकानां कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति न वा अरे देवानां कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्रिया भवन्ति न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवत्यात्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदꣳ सर्वं विदितम् ॥ ६ ॥ ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद क्षत्रं तं परादाद्योऽन्यत्रात्मनः क्षत्रं वेद लोकास्तं परादुर्योऽन्यत्रात्मनो लोकान् वेद देवास्तं परादुर्योऽन्यत्रात्मनो देवान् वेद वेदास्तं परादुर्योऽन्यत्रात्मनो वेदान् वेद भूतानि तं परादुर्योऽन्यत्रात्मनो देवान् वेद वेदास्तं परादुर्योऽन्यत्रात्मनो वेदान् वेद भूतानि तं परादुर्योऽन्यत्रात्मनो भूतानि वेद सर्वं

तं परादाद्योऽन्यत्रात्मनः सर्वं वेदेदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमे वेदा इमानि भूतानीदꣳ सर्वं यदयमात्मा ॥ ७ ॥ स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दां-च्छक्नुयाद् ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्यायातस्य वा शब्दो गृहीतः ॥ ८ ॥ स यथा शङ्खस्य ध्मायमानस्य वा न बाह्यान् शक्नुयाद् ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मयस्य वा शब्दो गृहीतः ॥ ९ ॥ स यथा वीणायै वाद्यमानायै न बाह्याञ्छब्दांच्छक्नुयाद्ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥ १० ॥ स यथाऽऽ[1]र्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेवैतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानीष्टꣳ हुतमाशितं पायितमयं च लोकः परश्च लोकः सर्वाणि भूतान्यस्यैवैतानि सर्वाणि निश्वसितानि ॥ ११ ॥

हे भवति नोऽस्माकं प्रिया वै खलु प्रीतिविषयः । सती साध्वी । प्रियां वाचमवृधत् अवर्धयत् भवतीति कर्त्रन्वयः ॥ ६-५.५-११ ॥

[हरिरेव सर्वाश्रयः]

स यथा सर्वासामपाꣳ समुद्र एकायनमेवं सर्वेषां स्पर्शानां त्वगेकायनमेवं सर्वेषां रसानां जिह्वैकायनमेवं सर्वेषां गन्धानां नासिकैकायनमेवं सर्वेषां रूपाणां चक्षुरेकायनमेवं

---

१. 'आर्द्रेन्धनाग्नेः' - ख., ग. ।

**सर्वेषां शब्दानां श्रोत्रमेकायनमेवं सर्वेषां सङ्कल्पानां मन एकायनमेवं सर्वासांविद्यानां हृदयमेकायनमेवं सर्वेषां कर्मणां हस्तावेकायनमेवं सर्वेषामानन्दानामुपस्थ एकायनमेवं सर्वेषां विसर्गाणां पायुरेकायनमेवं सर्वेषामध्वनां पादावेकायनमेवं सर्वेषां देवानां वागेकायनं स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघनः एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥ १२ ॥**

जीवस्य ज्ञानरूपत्वं दृष्टान्तोक्तिपूर्वमाह– **स यथा सैन्धवघन इति** ॥ लवण-खण्डः यथानन्तरोऽबाह्यः बाह्याभ्यन्तरविशेषाभावेन कृत्स्नः लवणरसघन एव एवं अरे मैत्रेयि अयमात्मा अनन्तरो बाह्यः बाह्याभ्यन्तरविशेषहीनतया कृत्स्नः प्रज्ञानघन एव सन् एतेभ्यो देहारम्भकभूतेभ्यः । समुत्थायोत्पन्नः सन् तान्येव भूतन्येवानु विनश्यति भूतापगमेन मुक्तो भवति प्रेत्य मुक्त्यनन्तरं संज्ञा ज्ञानं नास्तीति ब्रवीमीति होवाच याज्ञवल्क्यः ॥ ६-५-१२ ॥

**सा होवाच मैत्रेय्यत्रैव मा भगवान् मोहान्तमापीपिपन्न वा अहमिमं विजानातीति स होवाच न वा अरेऽहं मोहं ब्रवीम्यविनाशी वाऽरेऽयमात्मानुच्छित्तिधर्मा ॥ १३ ॥**

वृत्तिज्ञानं मुक्तस्य नास्ति मुक्तविषयज्ञानममुक्तस्य नास्तीति वा याज्ञवल्क्याभिप्रायमजानन्ती सर्वथा ज्ञानशून्यत्वमुक्तवानिति विपरीतं जानन्ती पृच्छति– **सा होवाचेति** ॥ अहं अहेयमिमं परमात्मानं जीवो न वै नैव जानातीत्यत्रैवावश्यावगन्तव्यप्रमेय एव भगवान्मा मां मोहान्तं मोहाख्यनाशं आपिपत् ।

प्रापयामासेति होवाचेति योजना । स्वाभिप्रायमाह याज्ञवल्क्यः– **स होवाचेत्यादिना** ॥ प्रागिवार्थो ध्येयः ॥ ६-५-१३ ॥

**यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति तदितर इतरं जिघ्रति तदितर इतरꣳ रसयते तदितर इतरमभिवदति तदितर इतरꣳ शृणोति तदितर इतरं मनुते तदितर इतरं स्पृशति तदितर इतरं विजानाति यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं जिघ्रेत्तत्केन कं रसयेत्तत्केन कमभिवदेत्तत्केन कं शृणुयात्तत्केन कं मन्वीत तत्केन कं स्पृशेत्तत्केन कं विजानीयाद्येनेदं सर्वं विजानाति तं केन विजानीयात्स एष नेति नेत्यात्माऽगृह्यो नहि गृह्यतेऽशीर्यो नहि शीर्यतेऽसङ्गो नहि सृज्यतेऽसितो न व्यथते न रिष्यति विज्ञातारमरे केन विजानीयादित्युक्तानुशासनाऽसि मैत्रेय्येतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यो विजहार ॥ १४ ॥**

इति मैत्रेयिब्राह्मणम् ॥ ६-५ ॥

अविनाशीत्यादिना बौद्धाभिमतमोक्षं अनुच्छित्तिधर्मेत्यनेन तार्किकाभिमतं यत्र हीत्यादिनाऽद्वैत्यभिमंत मोक्षं च निरस्यान्ते इत्युक्तानुशासनाऽसि मैत्रेयी-त्युक्त्वोप-संहरति– **एतावदरे खल्वमृतत्वमिति** ॥ अविनष्टस्वस्वरूपः अनुच्छिन्नज्ञानसुखादिधर्मः सनूजीवः स्वरूपभूतसर्वेन्द्रियैर्भगवद्विषयकज्ञान-विषयभोगादिमानित्येव खल्वमृतत्वं मोक्ष इत्यर्थः । ततः किमकरोदित्यत आह वेदपुरुषः । इत्युक्त्वा मैत्रेयी प्रत्युपदिश्य विजहार यथेष्टविहारमकरोदित्यर्थः ॥ ६-५-१४ ॥

इति मैत्रेयिब्राह्मणम् ॥ ६-५ ॥

## अथ वंशब्राह्मणम्

अथ वꣳशः पौतिमाष्यो गौपवनाद् गौपवनः पौतिमाष्यात् पौतिमाष्यो गौपवनाद् गौपवनः कौशिकात्कौशिकः कौण्डिन्यात्कौण्डिन्यः शाण्डिल्याच्छाण्डिल्यः कौशिकाच्च गौतमाच्च गौतमः आग्निवेश्यादाग्निवेश्यो गार्ग्याद्गार्ग्यो गार्ग्याद्गार्ग्यो गौतमाद्गौतमः सैतवात् सैतवः पाराशर्यायणात्पाराशर्यायणो गार्ग्यायणाद्गार्ग्यायण उद्दालकायनादुद्दालकायनो जाबालायनाज्जाबालायनो माध्यन्दिनायनान्माध्यन्दिनायनः सौकरायणात्सौकरायणः काषायणात्काषायणः सायकायनात्सायकायनः कौशिकायनेः कौशिकायनिः घृतकौशिकाद्धृतकौशिकः पाराशर्यायणात्पाराशर्यायणः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्य आसुरायणाच्च यास्काच्चासुरायणस्त्रैवर्णेस्त्रैवर्णिरौपबन्धनेरौपबन्धनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाज आत्रेयादात्रेयो माण्डेर्माण्डिर्गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात्काप्यात्कैशोर्यः काप्यः कुमारहारीतात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद् विदर्भीकौण्डिन्यो वत्सनपादो बाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरात्पन्थाः सौभरोऽयास्यादाङ्गिरसादयस्याङ्गिरस आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्वणाद् दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वंसनान्मृत्युः

**प्रध्वंसनः प्राध्वंसनात्प्राध्वंसन एकऋषेरेकर्षिर्विप्रचित्ते-र्विप्रचित्तिः व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः सनकात्सनकः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः ॥ ६-६ ॥**

इति वंशब्राह्मणम् ॥ ६-६ ॥

इति बृहदारण्यके षष्ठोऽध्यायः

अध्यायद्वयोक्तविद्यासु बुभुत्सुश्रद्धाजननाय तासां विद्यानां प्रवर्तकानृषीनाह– **अथ वंश इत्यादिना** ॥ अत्र पञ्चम्यन्तैरुपदेष्टारः प्रथमान्तैरुपदेश्याः निर्दिश्यन्त इति ज्ञेयम् ।

अत्राश्विप्रभृतिभ्योऽथर्वप्रभृतेराधिक्याभावेऽपि ततः उपदेशं लीलया गृह्णन्तीति तारतम्याविरोधः ॥ १ ॥

**इति वंशब्राह्मणम् ॥ ६-६ ॥**

**इति काण्वोपनिषदर्थसङ्ग्रहे राघवेन्द्रतीर्थकृते षष्ठोऽध्यायः**

# अथ सप्तमोऽध्यायः

## अथ प्रथमं ब्राह्मणम्

**ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।**
**पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥**

[१]चतुर्ष्वध्यायेषूक्तानां भिन्नाः शेषभूताः विद्याः सप्तमाष्टमाभ्यां निरूप्यन्ते । तत्र भगवतोऽवताराणां आविर्भावतिरोभावलक्षणां विद्यामाह– **पूर्णमद इति** ॥ अदो मूलरूपं पूर्णं इदं अवताररूपं पूणम् । पूर्णात् मूलरूपात्पूर्णमवताररूपमुदच्यते उद्गच्छति आविर्भवति । पूर्णस्य मूलरूपस्य यदवताररूपं पूर्णं तदात्मन्यादाय एकीभूय पूर्णं मूलरूपमेवावशिष्यते अवतिष्ठत इत्यर्थः ॥ १ ॥

[मूलरूपस्य हरेः स्वरूपम्]

**ॐ खं ब्रह्म खं पुराणं वायुरं खमिति ह स्माह कौरव्यायणीपुत्रो वेदोऽयं ब्राह्मणा विदुर्वेदैनेन यद्वेदितव्यम् ॥**

**इति प्रथमं ब्राह्मणम् ॥ ७-१ ॥**

अवतारिणो मूलरूपस्य हरेः स्वरूपमाह– **ओमिति** ॥ मूलरूपं सर्वगुणपूर्णत्वादोमित्युच्यते । प्रकाशरूपत्वात् खम् । व्याप्तत्वात् ब्रह्म । सुखरूपत्वात्खम् । अनादित्वात्पुराणम् । वायो रतिदत्वाद्वायुरम् । ख्याततत्वात्खम् । इति कौरव्यायणीपुत्रो बलभद्र आह स्म ह । अयं हरिः ज्ञानरूपत्वात् वेद इति यं ब्राह्मणाः विदुः । न केवलं ज्ञानरूपत्वाद् वेद इति ब्राह्मणा विदुः, किन्तु ज्ञानहेतुत्वाच्च वेद इत्युच्यते इत्याह– **वेदोनेनैनेति** ॥ वेद उ अनेन एन इति पदविभागः । वेद इति यं ब्राह्मणा विदुः । अनेन

---

१. 'चतुर्थाध्यायेनोक्तानाम्'-ख. ।

एन उ निर्दोषत्वहेतुना अकारवाच्येनैव वेदितव्यं ज्ञातव्यं यत् तद्वेद जीवोऽतो वेदेत्यर्थः ॥ ७-१-२ ॥

इति प्रथमं ब्राह्मणम् ॥ ७-१ ॥

## अथ द्वितीयं ब्राह्मणम्

['द' इत्यक्षरात् यथाधिकारं दम-दान-दयाबोधः]

**त्रयाः प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्यमूषुर्देवा मनुष्या असुरा उषित्वा ब्रह्मचर्यं देवा ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदक्षरमुवाच द इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचुर्दाम्यतेति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति ॥ १ ॥ अथ हैनं मनुष्या ऊचुर्ब्रवीतु नो [१]भवानिति तेभ्यो हैतदेवाक्षरमुवाच द इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचुर्दत्तेति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति ॥ २ ॥**

सर्वप्राणसाधारणानुष्ठेयमाह– **त्रया इति** ॥ प्राजापत्याः प्रजापतेर्ब्रह्मणः पुत्राः । त्रयाः त्रिविधाः । ब्रह्मार्थं चरणं ब्रह्मचर्यम् । नोऽस्मभ्यं उपदेष्टव्यं भवान् ब्रवीत्विति देवाः ब्रह्माणं प्रत्यूचुरिति योजना । एवमग्रेऽपि । एवं पृष्टा देवाः ज्ञातवन्तः स्म इत्यूचुरित्याह– **व्यज्ञासिष्मेति** ॥ दाम्यत सद्गुणोच्छ्रितत्वहेतुना अहङ्कारवन्तो मा भवतेति नोऽस्मान् प्रत्यात्थ कथितवानसीति व्यज्ञासिष्मेत्यूचुरित्यर्थः । तत्र ब्रह्मा संवादमकरोदित्याह– **ओमिति** ॥ यूयं द इत्युक्तस्यार्थं व्यज्ञासिष्ट भवन्तो ज्ञातवन्त इति ओं अङ्गीकृतवानस्मीति होवाचेति । प्रजापतिरित्यनुकर्षः । एवगम्रेऽपि प्रश्नप्रत्युत्तरयोजना ज्ञेया ॥ ७-२-१ ॥

---

१. 'भगवानिति' - ख. ।

**अथ हैनमसुरा ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदेवा-क्षरमुवाच द इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचु-र्दयध्वमिति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति तदेत-देवैषा दैवी वागनुवदति स्तनयित्नुर्द द द इति दाम्यत दत्त दयध्वमिति तदेतत् त्रयं॰ शिक्षेद्दमं दानं दयामिति ॥ ७-२-३ ॥**

इति द्वितीयं ब्राह्मणम् ॥ ७-२ ॥

एनं प्रजापतिम् । दत्तेति निष्कामनया मुक्तिहेतुज्ञानसाधनदेवाद्युद्देशेन हविरादिदानं कुरुतेति न आत्थेत्यूचुरित्यर्थः । दयध्वं प्राणिषु कुरुतेत्यर्थः । तदेतदेव ब्रह्मणोपदिष्टमेव । एषा दैवी वाक् स्तनयित्नुर्दाम्यत दत्त दयध्वमिति भावेन ददद इति त्रिरनुवदति । तस्माद्ब्रह्मणैवमुपदिष्टत्वात् दमं दानं दयामित्येत्त्रयं सर्वोऽपि शिक्षेत् अनुतिष्ठेदित्यर्थः ॥ ७-२-३ ॥

इति द्वितीयं ब्राह्मणम् ॥ ७-२ ॥

## अथ तृतीयं ब्राह्मणम्

[विष्णुचतुर्मुखयोः हृदयशब्दवाच्यत्वम्]

**एष प्रजापतिर्यद्धृदयमेतद्ब्रह्मैतत्सत्यं तदेतत्त्र्यक्षर॰ हृदयमिति हृ इत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद द इत्येकमक्षरं ददत्यस्मै स्वाश्चान्ये च य एवं वेद यमित्येक-मक्षरमेति स्वर्गं लोकं य एवं वेद ॥ ७-३-१ ॥**

इति तृतीयं ब्राह्मणम्

चतुर्मुखभगवद्विषयां विद्यामाह– **एष प्रजापतिरिति** ॥ यद् हृदयमिति नाम तद्वाच्यः एषः प्रकृतः । प्रजापतिः प्रजापतिपदोक्तो ब्रह्मा हरिश्चेत्यर्थः ।

यज्ञभागहरणाज्ज्ञानदानादव्यवधानेन हरिप्राप्तेर्निमित्तेन हृदयनाम ब्रह्मणः । हरेस्तु स्वभागहरणाद्दानान्नृणां फलयापनादिति ज्ञेयम् । एतद्धृदयनामकं प्रजापतिशब्दितं द्वयं ब्रह्म एतद्धृदयनामकं द्वयं सत्यम्। सद्गुणरूपत्वात्सत्यनामकं च । हृदयशब्दवर्णार्थितया चोपासनमावश्यकमिति भावेनाह– **तदेतत्त्र्यक्षर-मिति** ।। तत्प्रजापतिनामभूतम्। हृदयमित्येतन्नाम त्र्यक्षरमिति । तानि क्रमेण निर्दिश्य तद्वेदिनः फलमाह– **हृ इत्येकमक्षरमिति** ।। यज्ञभागहरणात् हृ इत्युच्यते ब्रह्मा । स्वभागहरणाद्धरिर्हृ इत्युच्यते। हरतेः विच् । योऽधिकारी एवमुक्तनिमित्तेन हृशब्दार्थत्वेन ब्रह्माणं हरिं च वेद । अस्मै ज्ञानिने स्वाश्च स्वकीयाश्चान्ये च आहरन्ति। इष्टमिति योज्यम्। योऽधिकारी एवं ज्ञानदानाद्द इत्येकमक्षरं एतदक्षरार्थत्वेन वेद । अस्मै स्वाश्चान्ये च ददति प्रयच्छन्ति। अन्येभ्यो हृत्वाऽस्मै प्रयच्छन्तीत्यभिप्रायादाह रन्ति ददतीत्यनयोर्न पौनरुक्त्यम्। योऽधिकारी एवमनन्यद्वारेण परब्रह्म यानात् गमनात् ब्रह्माणं यमित्येकाक्षरार्थत्वेन वेद । तथा नृणां फलयापनात् य इत्यक्षरार्थं हरिं च वेद स स्वर्गाख्यं विष्णुलोकमेति प्राप्नोतीति ।। १ ।।

इति तृतीयं ब्राह्मणम् ।। ७-३ ।।

## अथ चतुर्थं ब्राह्मणम्

[मुमुक्षुप्राप्यं ब्रह्म वासुदेवाख्यम्]

**तद्वैतदेतदेव तदास सत्यमेव स यो हैतं महद्यज्ञं प्रथमजं वेद सत्यं ब्रह्मेति जयतीमान् लोकान् जित इन्वसावसद् य एवमेतं [१]महद्यज्ञं प्रथमजं वेद सत्यं ब्रह्मेति सत्यꣳ ह्येव ब्रह्म ।। १ ।।**

इति चतुर्थं ब्राह्मणम् ।। ७-४ ।।

---

१. 'महद्यक्षं' इति हृषीकेशतीर्थीयः पाठः ।

प्रकृतभगवन्निष्ठं विद्यान्तरमाह– **तद्वैतदिति** ॥ ततत्वान्निर्विकारत्वात्तत् । वै प्रसद्धं एतदेव तत् तादृशततत्वादिगुणयुक्तम् । नान्यत्तादृशमित्यर्थः । सत्यमेवेत्येवकारस्तदित्यत्रान्वेति'। तदेव नारायणाख्यं ब्रह्मैव सत्यम् । मुमुक्षुभिः साध्यतया प्राप्यतया वासुदेवाख्यमास आसीत् । तज्ज्ञानिनः फलमाह– **स य इति** ॥ योऽधिकारी एवं ततत्वादिगुणयुक्तं महद्यज्ञं महायाज्यं प्रथमजं प्रथमाविर्भूतं सत्यं मुमुक्षुभिरासाद्यं वासुदेवाख्यं रूपं ब्रह्मेति वेद। स इमांल्लोकान् जयति । भूम्यादिलोकजयो नाम धर्मज्ञानादिसाधनपूर्तिर्ध्येया। ऐहिकप्राप्तिरानुषङ्गिकीति भावेनाह– **जित इन्वसाविति** ॥ य एवमेतं महद्यज्ञं प्रथमजं सत्यं ब्रह्मेति वेद । तेनासौ परलोको जित एव असत् आसीदिति। सत्यं ब्रह्मेत्युपासनं नाविद्यमानोपासनमित्याह– **सत्यं ह्येव ब्रह्मेति** ॥ १ ॥

इति चतुर्थं ब्राह्मणम् ॥ ७-४ ॥

## अथ पञ्चमं ब्राह्मणम्

[नारायणाद् वासुदेवो जायते]

**आप एवेदमग्र आसुस्ता आपः सत्यमसृजन्त सत्यं ब्रह्म ब्रह्म प्रजापतिं प्रजापतिर्देवांस्ते देवाः सत्यमेवोपासते ॥ १ ॥ तदेतत्त्र्यक्षरꣳ सत्यमिति [१]सत् इत्येकमक्षरं तीत्येकमक्षरं यमित्येकमक्षरं प्रथमोत्तमे अक्षरे सत्यं मध्यतोऽनृतं तदेतदनृतमुभयतः सत्येन परिगृहीतं सत्यभूयमेव भवति नैव विद्वाꣳसमनृतं हिनस्ति ॥ २ ॥**

इति पञ्चमं ब्राह्मणम् ॥ ७-५ ॥

भगवद्विषयविद्यान्तरमाह– **आप इति** ॥ इदमग्रे अस्य प्रपञ्चस्याग्रे आप एव । आ समन्तात्सर्वगुणान् पिबत्यनुभवतीति वा पातीति वा आप इत्युक्तो

१. 'स' इत्येकमक्षरं- ग. ।

नारायण आसीदित्यर्थः । शब्दस्वाभाव्याद्बहुवचनम् । ताः आपो नारायणः सत्यं मुमुक्षुभिरासाद्यं वासुदेवाख्यमसृजत असृजत् । सत्यं किमित्यत आह– **सत्यं ब्रह्मेति** ॥ ब्रह्म वासुदेवाख्यं ब्रह्म प्रजापतिं ब्रह्माणमसृजदित्यनुकर्षः । प्रजापतिर्देवानसृजतेत्यनुषङ्गः । तस्मादिति शेषः । पितृत्वाद्धेतोः ते देवाः ब्रह्मादयः सत्यमेव सत्याख्यं वासुदेवमेवोपासते। सत्याख्योपास्तिः सत्यशब्दार्थयुक्तत्वेनेति भावेनाह– **तदेतदिति** ॥ तद्वासुदेववाचि सत्यमित्येतत्पदं त्र्यक्षरम् । तानि निर्दिशति– **सदित्येकमक्षरमित्यादिना** ॥ प्रथमोत्तमे आद्यन्ते अक्षरे सत्यं सत्ये साधुत्वार्थे मध्यतो मध्ये विद्यमानमक्षरमनृतं ततत्वान्मिथ्याज्ञानार्थकं तदेतदनृतं मिथ्याज्ञानार्थकं तीत्यक्षरं उभयतः पार्श्वद्वये। सत्येन सदित्यनेन यमित्यनेन चाक्षरेण परिगृहीतम् । सत्यं भूयमेव भवति । साध्वर्थमेव भवति । मिथ्याज्ञानसाधनहेतुना सदिति पूर्वाक्षरेणोक्तेन हरिणा मिथ्याज्ञाननाशनहेतुना च । यमित्युत्तराक्षरेणोक्तेन च हरिणा सन्दष्टन्तीत्यनेनोक्तमिथ्याज्ञानं साधुषु व्याप्तिं कथं लभेतेति भावः । एतद्विद्यावेदिनः फलमाह– **नैनमिति** ॥ विद्वांसं एतद्विद्याज्ञानिनमेनमनृतं मिथ्याज्ञानं न हिनस्ति । न बाधत इति ॥ ७-५-१,२ ॥

इति पञ्चमं ब्राह्मणम् ॥ ७-५ ॥

## अथ षष्ठं ब्राह्मणम्

**तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषस्तावेतावन्योन्यस्मिन् प्रतिष्ठितौ रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः प्राणैरयममुष्मिन् स यदोत्क्रमिष्यन् भवति शुद्धमेवैतन्मण्डलं पश्यति नैनमेते रश्मयः प्रत्यायन्ति ॥ १ ॥**

इति षष्ठं ब्राह्मणम् ॥ ७-६ ॥

प्रकृतवासुदेवस्य रूपद्वयविषयं विद्यान्तरमाह– **तद्यदिति** ।। तत्प्रसिद्धं यत्प्रकृतं वासुदेवाख्यं सत्यं तदसौ स आदित्यः हविषामादानादादित्यनामा। क आदित्य इत्यत आह– **य एष इति** ।। एतस्मिन् मण्डले पुरुषो यो वर्तते एष हरिरादित्य इत्यर्थः । यश्चायं दक्षिणेऽक्षन् अक्षणि पुरुषोऽस्ति सोऽपि सत्यमिति योज्यम् । तावेतौ रूपविशेषावन्योन्यस्मिन् प्रतिष्ठितौ। सूर्यमण्डले स्थितोऽक्षणि तिष्ठति । अक्षिगतो मण्डले प्रतिष्ठितोऽस्तीत्यर्थः। स्थितिप्रकारं दर्शयति– **रश्मिभिरिति** ।। एष मण्डलस्थो रश्मिभिरस्मिन्नक्षिण प्रतिष्ठितः । अयमक्षिगतः । प्राणैश्चक्षुरदिभि-रमुष्मिन् मण्डले स्थित इत्यर्थः। मण्डलस्थोऽक्षिस्थ इति कुत इत्यत आह– **स इति** ।। स दक्षिणाक्षिस्थो हरिः । यदास्माच्छरीरादुत्क्रमिष्यन् भवति । तदैव म्रियमाणो जीवः । शुद्धमेव रश्मिहीनमेव। मण्डलं पश्यति। रश्मीनामभवान्न पश्यति किमित्यत आह– **नैनमिति** ।। एते विद्यमाना अपि रश्मयः एनं न प्रत्यायन्ति। आत्मविषयकप्रतीर्तिं न जनयन्तीत्यर्थः । केषाञ्चिन्मृतिसमये केषाञ्चित्सप्तभि-र्दिनैरिति ज्ञेयम् ।। ७-६-१ ।।

इति षष्ठं ब्राह्मणम् ।। ७-६ ।।

## अथ सप्तमं ब्राह्मणम्

[दक्षिणाक्षिस्थसत्यनामकवासुदेवस्यावयवनामनिरूपणम्]

**य एष एतस्मिन् मण्डले पुरुषस्तस्य भूरिति शिर एकꣳ शिर एकमेतदक्षरं भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे सुवरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षर तस्योपनिषदहरिति हन्ति पाप्मानं जहाति च य एवं वेद ।। १ ।। योऽयं दक्षिणेऽक्षन् पुरुषस्तस्य भूरिति शिर एकꣳ शिर एकमेतदक्षरं भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे**

**सुवरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षरे तस्योप-निषदहमिति हन्ति पाप्मानं जहाति च य एवं वेद ॥ २ ॥**

इति सप्तमं ब्राह्मणम् ॥ ७-५ ॥

सूर्याक्षिस्थितवासुदेवरूपयोर्ध्यानार्थमवयवनामान्याह– **य एष इत्यादिना खण्ड-द्वयेन** ॥ य एष एतस्मिन् मण्डले पुरुषो दक्षिणाक्षणि च पुरुषो हरिः । तस्य शिरः दृष्ट्या वाचा च भावयति रक्षतीति भूरित्युच्यते । शिरसो भूर्नामत्वं युक्तमित्याह– **एकं शिर इति** ॥ एतदक्षरम् । भूरित्येतदक्षरं तस्याक्षिमण्डलयोः स्थितस्य । दक्षिणोत्तरबाहू क्रमादुत्पादनविनाशहेतुत्व-निमित्ताभ्यां भु इति व इति चाक्षरप्रतिपाद्यतया भुव इत्युच्येते । बाह्वोर्भुव इत्यक्षरद्वयार्थत्वमुपपादयति– **द्वौ बाहू इति** ॥ तस्य प्रतिष्ठा-प्रतिष्ठे । दक्षिणोत्तरपादौ क्रमात्सुखज्ञानदातृत्वरूपनिमित्ताभ्यां सुवरित्यक्षरद्वयेनोच्येते । तदुपपादयति– **द्वे प्रतिष्ठे इति** ॥ मण्डलाक्षिस्थितयोर्नामाह– **तस्येति** ॥ उपनिषद्रहस्यम् । सर्वलोकप्रकाशनहेतुनाऽहरिति अहेयत्वहेतुनाऽहमिति नामे-त्यर्थः । [1]'अहर्दिनं प्रकाशश्च' इति प्रागुक्तस्मृतेः । एतज्ज्ञानिनः फलमाह– **हन्ति पाप्मानम् इति** ॥ कानिचित्पापानि हन्ति । कानिचित्पापाभिमानिकल्यादीनि जहाति त्यजतीत्यर्थः ॥ ७-७-१,२ ॥

अथ अष्टमं ब्राह्मणम्

[जीवहृदये यवपरिमाणः हरिस्तिष्ठति]

**मनोमयोऽयं पुरुषो भाः सत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्च ॥ १ ॥**

इति अष्टमं ब्राह्मणम् ॥ ७-८ ॥

१. पञ्चमेऽध्याये उषस्तब्राह्मणे इदं प्रमाणवचनमुदाहृतम्–'अहर्मुहूर्तं विज्ञेयं अहर्मासोऽपि भण्यते । अहर्दिनं प्रकाशश्च कचिज्ज्ञानं बलं तथा ॥' इति ।

भगवद्विषयविद्यान्तरमाह– **मनोमय इति** ॥ अयं पुरुषो हरिः । मनोमयो ज्ञानप्रधानः । महाज्ञान इति यावत् । भाः प्रकाशरूपः । सत्यः सद्गुणात्मकः । तस्मिन् जीवसम्बन्धिनि अन्तर्हृदये हृदयमध्ये । तिष्ठतीति शेषः। तस्य परिमाणं दृष्टान्तेनाह– **यथेति** ॥ व्रीहिर्वा यवो वा यत्परिमाणस्तत्परिमाणस्तिष्ठतीत्यर्थः । तस्य महिमान्तरमाह– **सर्वस्येति** ॥ ईशानां रुद्रादीनामनश्वेष्टकः । सर्वस्य जगतोऽधिपतिः स्वामी । यदिदं किञ्च जगत् इदं सर्वं प्रशास्ति नियमयतीति ॥ ७-८-१ ॥

**इति अष्टमं ब्राह्मणम् ॥ ७-८ ॥**

## अथ नवमं ब्राह्मणम्

**[विद्युद् ब्रह्मेति मनीषिणः]**

**विद्युद्ब्रह्मेत्याहुर्विदानाद्विद्युत् विद्यत्येनं पाप्मनो य एवं वेद विद्युद्ब्रह्मेति विद्युद्ध्येव ब्रह्म ॥ १ ॥**

**इति नवमं ब्राह्मणम् ॥ ७-९ ॥**

भगवद्विषयविद्यान्तरमाह– **विद्युदिति** ॥ विशेषेण द्यति खण्डयति अज्ञानादिकमिति वा । सर्ववेदनाद्वा विद्युद्ब्रह्मेत्याहुः । वेदवेदिन इति योज्यम् । कुतो ब्रह्म विद्युदित्युच्यते इत्यतस्तस्यार्थं स्वयमेवाह– **विदाना-दिति** ॥ विशेषेण खण्डनाद्वेदनाद्वा विद्युदित्यर्थः । 'दो अवखण्डने' 'विद ज्ञाने' इति धातोः ॥ फलमाह– **विद्यतीति** ॥ योऽधिकारी एनं भगवन्तमेवमज्ञानादिखण्डकत्वेन वा सर्ववेदनहेतुत्वेन वा विद्युद्ब्रह्मेति वेद । हरिः तस्य पाप्मनो विद्यति । विशेषेण द्यति खण्डयति । तथा स्वात्मानं विद्यति वेदयतीत्यर्थः । विद्युत्त्वेन हरेर्ज्ञानं न मिथ्याज्ञानमिति भावेनाह– **विद्युद्ध्येव ब्रह्मेति** ॥ ७-९-१ ॥

**इति नवमं ब्राह्मणम् ॥ ७-९ ॥**

## अथ दशमं ब्राह्मणम्

[गोरूपा वागुपास्या]

**वाचं धेनुमुपासीत तस्याश्चत्वारः स्तनाः स्वाहाकारो वषट्कारो हन्तकारः स्वधाकारस्तस्यै द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं च वषट्कारं च हन्तकारं मनुष्याः स्वधाकारं पितरस्तस्याः प्राण ऋषभो मनो वत्सः ॥**

इति दशमं ब्राह्मणम् ॥ ७-१० ॥

सर्वविद्यासिद्ध्यङ्गभूतां सरस्वतीविषयविद्यामाह– **वाचमिति** ॥ वाचं वाग्देवीं सरस्वतीं धेनुरूपतया स्थितामुपासीत । तस्याश्चत्वारः स्तनाः । चतुर्भिः स्तनैरभिमन्यमाना इत्यर्थः । तान्निर्दिशति– **स्वाहाकार इत्यादिना** ॥ स्वधाकार इतीतिशब्दो योज्यः । तस्यै तस्याः गोरूपायाः । द्वौ स्तनौ स्तनद्वयाभिमन्यमानौ स्वाहाकारं वषट्कारं चेत्येतौ । देवाः उपजीवन्तीत्यर्थः । मनुष्याः पितर इत्यत्रोपजीवन्तीत्यनुषङ्गः । तस्याः गोरूपायाः वाचः प्राणो मुख्यवायुः । ऋषभः पतिः । मनो मनोमानी रुद्रः वत्सः ॥ ७-१०-१ ॥

इति दशमं ब्राह्मणम् ॥ ७-१० ॥

## अथ एकादशं ब्राह्मणम्

[जाठराग्नौ स्थितः वैश्वानरः]

**अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति नैनं गोपं शृणोति स यदोत्क्रमिष्यन् भवति नैनं घोषं शृणोति ॥ १ ॥**

इति एकादशं ब्राह्मणम् ॥ ७-११ ॥

भगवद्विषयविद्यान्तरमाह– **अयमग्निरिति** ॥ योऽयमन्तःपुरुषे जीवान्तरास्ते । अयं हरिरग्निः अङ्गशब्दितप्राणिशरीरनेतृतया अग्निनामा जाठराग्नौ स्थितः

वैश्वानरो वैश्वानरनामा च । विश्वगुणपूर्णत्वाद्वैश्वः नरीयते न नश्यतीति नरः वैश्वश्चासौ नरश्चेति वैश्वनरः स एव वैश्वानर इत्युच्यते । तस्य व्यापारमाह– **येनेति** ॥ येन जाठराग्निस्थेन यदिदं प्राणिभिरद्यते इदमन्नं पच्यते जीर्णं करोति । तस्य कर्मणि षष्ठी । हरेरेष घोषो भवति । जाठराग्निस्थहरिविषयको वायुना क्रियमाणः स्तुतिरूपः घोषो भवतीत्यर्थः । सर्वप्रत्यक्षः स घोष इत्याह– **यमिति** ॥ एतत् एतौ । स घोषो हरेः स्तुतिरिति कथं ज्ञायत इत्यत आह– **स यदेति** ॥ स हरिः यदाऽस्माच्छरीरादुत्क्रमिष्यन् भवति । तदा जीवः एनं घोषं न शृणोति । तदेव मरणसूचकमित्यर्थः ॥ १ ॥

इति एकादशं ब्राह्मणम् ॥ ७-११ ॥

## अथ द्वादशं ब्राह्मणम्

[अर्चिरादिमार्गेण जीवगतिः]

**यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वं आक्रमते स आदित्यमागच्छति तस्मै स तत्र विजिहीते यथा लम्बरस्य खं तेन स ऊर्ध्वं आक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते यथा दुन्दुभेः खं तेन स ऊर्ध्वं आक्रमते स लोकमागच्छत्यशोकमहिमं तस्मिन् वसति शाश्वतीः समाः ॥ १ ॥**

इति द्वादशं ब्राह्मणम् ॥ ७-१२ ॥

मुमुक्षोरत्यपेक्षितमार्गविषयां विद्यामाह– **यदेति** ॥ यदा पुरुषो जीवः अस्माल्लोकाद्देहात्प्रैति निर्गच्छति । वायुं मुख्यवायुपुत्रं प्रवहम् । तदाह सूत्रे 'वायुशब्दादविशेषविशेषाभ्याम्' (ब्र.सू.४-३-२) इति । स वायुस्तत्र वायुलोके । तस्मै ज्ञानिने । तत ऊर्ध्वगमनाय । विजिहीते विवरं करोति ।

कथं यथा रथचक्रस्य खं विवरं तथेति। तेन छिद्रेण स ज्ञानी ऊर्ध्वः ऊर्ध्वगतिः सन्नाक्रमते गच्छति । स ऊर्ध्वं आक्रान्तः आदित्यं सूर्यमागच्छति तस्मा इत्यादि प्राग्वत् । लम्बरस्य वाद्यविशेषस्य । दुन्दुभेर्वाद्यविशेषस्य स लोकमित्यतः प्राक् स विद्युतमागच्छति । तत ऊर्ध्वमाक्रमते स वैद्युतमिति वाक्यशेषो ध्येयः । 'वैद्युतेनैव' (ब्र.सू. ४-३-६)इति सूत्रात् । स ज्ञानी मुख्यवायुं प्राप्तः अशोकमहिमं शोकोपलक्षितसर्वोपप्लवरहितमहिमोपेतं लोकं विष्णुलोकमागच्छति तस्मिंल्लोके शाश्वतीः समाः अनन्तवत्सरान् वसति। 'अनावृत्तिः शब्दादनावृत्तिः शब्दात्' (ब्र.सू. ४-४-२३) इति सूत्रात् ॥ ७-१२-१ ॥

इति द्वादशं ब्राह्मणम् ॥ ७-१२ ॥

## अथ त्रयोदशं ब्राह्मणम्

[सर्वं दुःखजातं तपः]

**एतद् वै परमं तपो यद् व्याधिस्तप्यते परमꣳ हैव स लोकं जयति य एवं वेदैतद् वै परमं तपो यं प्रेतमरण्यं हरन्ति परमं हैव स लोकं जयति य एवं वेदैतद्वै परमं तपो यं प्रेतमग्नावभ्यादधति परमꣳ हैव स लोकं जयति य एवं वेद ॥ १ ॥**

इति त्रयोदशं ब्राह्मणम् ॥ ७-१३ ॥

विद्यान्तरमाह– **एतदिति** ॥ यद् व्याधिस्तप्यते पुमानेतद्विष्णवे परमं तप इत्येव चिन्तयेत् । [1]योऽधिकारी व्याधिभिस्तपनं हरये तप इत्येवं वेद स परमं लोकं जयत्येव प्राप्नोत्येव ह । यं प्रेतं दाहायारण्यं श्मशानं

---

१. 'व्याधीन् शवहृतिं चैव शवदाहादिकं तथा । विष्णवे तप इत्येव चिन्तयन् याति तत्परम् ॥ अक्लेशितोऽपि क्लेशादीन् अतीतैष्यानपीह यः । विष्णवे तप इत्येव प्रार्पयेत् स परं व्रजेत् ॥' इति भाष्ये ।

हरन्ति तदपि विष्णवे परमं तप इति चिन्तनीयमित्यर्थः । एतज्ज्ञानिनः फलमाह– **परमं हैवेति** ।। प्राग्वदर्थो ज्ञेयः । यं प्रेतं शवमग्नौ अभ्यादधति दहन्ति । तदपि विष्णवे परमं तप इति विद्यात् । वेदिनः फलमाह– **परमं हैवेति** ।। मृतस्य कथमेतच्चिन्तनमिति शङ्का तु 'अक्लेशितोऽपि क्लेशादीनतीत्यैष्यानपीह यः' स्मृत्या निरस्या ।। ७-१३-१ ।।

**इति त्रयोदशं ब्राह्मणम् ।। ७-१३ ।।**

## अथ चतुर्दशं ब्राह्मणम्

**[समानार्थौ ब्रह्मवायू]**

**अन्नं ब्रह्मेत्येक आहुस्तन्न तथा पूयति वा अन्नमृते प्राणात्प्राणो ब्रह्मेत्येक आहुस्तन्न तथा शुष्यति वै प्राण ऋतेऽन्नादेते ह्येव देवते एकधा भूयं भूत्वा परमतां गच्छतस्तद्ध स्माह प्रातृदः पितरं किंस्विदेवैवं विदुषे साधु कुर्यां किमेवास्मा असाधु कुर्यामिति स ह स्माह पाणिनामा प्रातृदः कस्त्वेनयोरेकधा भूयं भूत्वा परमतां गच्छतीति तस्मा उ हैतदुवाच वीत्यन्नं वै वि अन्ने हीमानि सर्वाणि भूतानि विष्टानि रमिति प्राणो वै रं प्राणे हीमानि सर्वाणि भूतानि रमन्ते सर्वाणि ह वा अस्मिन् भूतानि विशन्ति सर्वाणि भूतानि रमन्ते य एवं वेद ।। १ ।।**

**इति चतुर्दशं ब्राह्मणम् ।। ७-१४ ।।**

ब्रह्मवायुविषयां विद्यामाह– **अन्नं ब्रह्मेति** ।।अन्नमानी चतुर्मुखः ब्रह्मा स्वकार्ये भगवदन्यानपेक्ष इत्येके आहुः । तत्तथा न भवति । प्राणात् मुख्यवायुत ऋते । अन्नं अन्नोपजीविशरीरं पूजति दुर्गन्धोपेतं भवति । प्राणः मुख्यवायुः । भगवदन्यानपेक्षः स्वकार्यकर इत्येक आहुः । तत्तथा न भवति । अन्नाद्

ऋते प्राणः शुष्यति । अन्नप्राणयोरन्योन्यानुपजीवित्वे पूयत्वशोषत्वयोः प्राप्तेः कारणादेते त्वेव देवते अन्नप्राणाख्ये। एकधाभूयं एकत्वं भूत्वानुप्राप्यान्नोन्यानुग्राह्यतां प्राप्येति यावत् । परमतां भद्रत्वं गच्छतः । अन्नप्राणावन्योन्यानुग्रहवन्ताविति कुत इत्यतस्तयोस्तथाभावं ज्ञानिप्रशंसापूर्वकमाख्यायिकया दर्शयति– **तद्धस्मा हेति** ।। प्रतृदो वसिष्ठस्तत्पुत्रः प्रातृदः । एवं विदुषे ब्रह्मवायू अन्योन्यापेक्षावेव कार्यक्षमाविति विदुषे । ज्ञानिने । साधु भद्रम्। किंस्वित्किन्नु कुर्याम्। असाधु अभद्रं वा । किन्नु कुर्यां । साधुनातिशयः असाधुना बाधो नास्य शक्यः । कृतकृत्यत्वादिति पितरमाह स्मेति योजना । एवं ब्रह्मवायुज्ञानिनं प्रशस्य स पाणिनामा प्रातृदः अन्योन्यापेक्षिणोरनयोरन्नप्राणयोर्मध्ये कस्तु को वा । एकधाभूयमेकत्वं भूत्वा प्राप्यानुप्रविष्टः सन्निति यावत् । परमतां प्रयोजनविशेषवत्तां गच्छतीति पुनः पितरं वसिष्ठमाह स्म । तस्मै एवं पृष्टवते । प्रातृदाय । प्रतृदः पिता । वीत्येतदु एतदेवोत्तरमुवा ह । किमित्यत आह– **अन्नं वै वीति** ।। अन्ने ब्रह्मणि । विशब्दं निर्वक्ति– **अन्ने हीति** ।। अन्नमानिब्रह्मणि सर्वाणि भूतानि निविष्टानि प्रविष्टानि । विशतेरन्तर्णीत-ण्यर्थात्क्विप्यन्तलोपे च वीति रूपमिति भावः । **रमितीति** ।। उत्तरमुवाच तस्मा इति योज्यम्। रमिति किमित्यत आह– **प्राणो वै रमिति** ।। रमिति शब्दं प्राणे निर्वक्ति– **प्राणे हीति** ।। रमतेरन्तर्णीतण्यर्थात्क्विपि रूपमिति भावः । ब्रह्मा प्रवेशप्रदः । प्राणो रतिप्रदः । इत्यनयोरन्योन्यानुप्रवेशेन तुल्यमेव प्रयोजनमित्युत्तरोक्तेस्तात्पर्यं ज्ञेयम् । एतज्ज्ञानिनः फलमाह– **सर्वाणीति** ।। योऽधिकारी अन्नमानिनि चतुर्मुखे सर्वप्राणिनां प्रवेशः प्राणेन च रमणमित्येवंप्रकारेण वेद ।। अस्मिन् ज्ञानिनि सर्वाणि भूतानि निविशन्ति सर्वाणि भूतानि रमन्त इति ।। ७-१४-१ ।।

इति चतुर्दशं ब्राह्मणम् ।। ७-१४ ।।

## अथ पञ्चदशं ब्राह्मणम्

[उक्थं प्राणमुपासीत]

**उक्थं प्राणो वा उक्थं प्राणो हीदं सर्वमुत्थापयत्युद्धा स्मा उक्थविद्वीरस्तिष्ठत्युक्थस्य सायुज्यं सलोकतां जयति युज्यन्ते हास्मै सर्वाणि भूतानि श्रैष्ठ्याय यजुषः सायुज्यं सलोकतां जयति य एवं वेद ॥ १ ॥**

इति पञ्चदशं ब्राह्मणम् ॥ ७-१५ ॥

चतुर्भिर्ब्राह्मणैः मुख्यवायुविषयां विद्यामाह– **उक्थमिति** ॥ सर्वोत्थापकं निरूप्यत इति । प्रतिज्ञातं किमित्यत आह– **प्राणो वा उक्थमिति** ॥ तस्योक्थत्वं निरुच्य दर्शयति– **प्राणो हीति** ॥ उत्थापयति सृजति इति वा स्वस्वव्यापारेषु वर्तयतीति वार्थः । ज्ञानिनः फलमाह– **उदिति** । योऽधिकारी एवमुत्थापनहेतुत्वेन प्राणं वेद अस्मै ज्ञानिने । उक्थविद्वीरः पुत्रः उत्तिष्ठ ह । उत्पद्यते ह । उक्थस्य प्राणस्य सायुज्यं समानलोकतां जयति । प्राप्नोति ॥ ७-१५-१ ॥

इति पञ्चदशं ब्राह्मणम् ॥ ७-१५ ॥

## अथ षोडशं ब्राह्मणम्

[प्राणो वै यजुः]

**यजुः प्राणो वै यजुः प्राणे हीमानि सर्वाणि भूतानि युज्यन्ते हास्मै सर्वाणि भूतानि श्रैष्ठ्याय यजुषः सायुज्यं सलोकतां जयति य एवं वेद ॥ १ ॥**

इति षोडशं ब्राह्मणम् ॥ ७-१६ ॥

'यजुः' मुक्तप्राप्य उच्यत इत्यर्थः । कि यजुरित्यत आह– **प्राणो वै यजुरिति** ॥ केन हेतुनेत्यत आह– **प्राणे हीति** ॥ इमानि साधुरूपाणि युज्यन्ते

मुक्तौ हि यतोऽतः यजुरिति । ज्ञानिनः फलमाह– **युज्यन्ते हेति** ॥ श्रैष्ठ्यायास्मै युज्यन्ते । एतस्य श्रैष्ठ्यायानुकूलानि भवन्तीत्यर्थः । यजुषः यजुर्नाम्नः वायोः ॥ ७-१६-२ ॥

इति षोडशं ब्राह्मणम् ॥ ७-१६ ॥

## अथ सप्तदशं ब्राह्मणम्

[सामनामकः प्राणः]

**साम प्राणो वै साम प्राणे हीमानि सर्वाणि भूतानि सम्यञ्चि सम्यञ्चि हास्मै सर्वाणि भूतानि श्रैष्ठ्याय कल्पन्ते साम्नः सायुज्यं सलोकतां जयति य एवं वेद ॥ १ ॥**

इति सप्तदशं ब्राह्मणम् ॥ ७-१७ ॥

साम सामनामकः निरूप्यत इत्यर्थः । प्रग्वद्योजना– **प्राणे हीति** ॥ प्रविष्टानीति योज्यम् । सम्यञ्चि हि यतोऽतः सम्यक्करणात्सामेत्युच्यत इत्यर्थः । अस्मै अस्य श्रैष्ठ्याय सर्वाणि भूतानि सम्यञ्चि कल्पन्ते । अनुकूलानि भवन्तीत्यर्थः ॥ ७-१७-१ ॥

इति सप्तदशं ब्राह्मणम् ॥ ७-१७ ॥

## अथ अष्टादशं ब्राह्मणम्

[क्षत्रं प्राणः]

**क्षत्रं प्राणो वै क्षत्रं प्राणे हि वै क्षत्रं त्रायते हैनं प्राणः क्षणितोः प्र क्षत्रमत्र प्राप्नोति क्षत्रस्य ·सायज्यं सलोकतां जयति य एवं वेद ॥ १ ॥**

इति अष्टादशं ब्राह्मणम् ॥ ७-१८ ॥

प्राणः क्षत्रमुच्यत इत्यर्थः । प्राणस्य क्षत्रत्वं प्रसिद्धमित्याह– **प्राणो हि वै क्षत्रमिति** ॥ केन हेतुनेत्यत आह– **त्रायते हैनमिति** ॥ क्षतादेनं

जीवं त्रायते ह इति यतोऽतः क्षत्रमिति । अक्षत्रं रक्षकरहितं जीवम् । शिष्टं प्राग्वत् ॥ ७-१८-१ ॥

इति अष्टादशं ब्राह्मणम् ॥ ७-१८ ॥

## अथ एकोनविंशं ब्राह्मणम्

[गायत्र्युपासना]

**भूमिरन्तरिक्षं द्यौरित्यष्टावक्षरण्यष्टाक्षरं ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत्स यावदेषु त्रिषु लोकेषु तावद्ध जयति योऽस्या एतदेवं पदं वेद ॥ १ ॥**

सर्वापेक्षितगायत्रीनिष्ठां विद्यामाह– **भूमिरित्यादिना** ॥ तत्र तावल्लोकवेदवायुस्थान्यनिरुद्धप्रद्युम्नसंकर्षणाख्यानि त्रीणि रूपाणि पादत्रयप्रतिपाद्यानीत्याह– **भूमिरिति** ॥ द्यौरित्यत्राक्षरद्वयं ध्येयम् । इत्यष्टावक्षराणि । गायत्र्यै गायत्र्याः एकं पदं एकः पादः । अष्टाक्षरमित्यष्टाक्षरसाम्योक्त्या भूम्यन्तरिक्षद्युलोकेषु स्थितं भूम्याद्यष्टाक्षरात्मकपदत्रयवाच्यं अनिरुद्धरूपं गायत्र्या अष्टाक्षरात्मकप्रथमपादप्रतिपाद्यमित्यर्थोऽभिमत इति भावेनाह– **एतदिति** ॥ एतद्भूम्यादिगतं तच्छब्दवाच्यमनिरुद्धाख्यं रूपं एतदु है व । एतदेव हि । अस्याः गायत्र्याः एतत्पादप्रतिपाद्यमित्यर्थः । एतज्ज्ञानिनः फलमाह– **स यावदिति** ॥ यो मुख्योऽधिकारी ब्रह्मा अस्याः गायत्र्याः एतदेवं भूम्यादिलोकस्थं पदं गायत्रीप्रथमपादप्रतिपाद्यमनिरुद्धं वेद । स ज्ञानी एषु त्रिषु लोकेषु यावदस्ति यावद्दूरं व्यक्त्यभिव्याप्य तिष्ठति । पदप्रतिपाद्यमनिरुद्धाख्यं रूपं तावज्जयति मुक्तः सन् तावद्व्याप्नोति भूम्यादिलोकानामधिपतिर्भूत्वा यशस्वी श्रीमांश्च भवतीत्यर्थः ॥ ७-१९-१ ॥

**ऋचो यजूंषि सामानीत्यष्टावक्षराण्यष्टाक्षरं ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत्स यावतीयं त्रयी विद्या**

**तावद्ध जयति योऽस्या एतदेवं पदं वेद ॥ २ ॥**

ऋगित्यष्टाक्षरात्मकऋगादिपदवाच्यं ऋगादिषु स्थितं प्रद्युम्नाख्यं रूपं गायत्र्यै गायत्र्याः अष्टाक्षरात्मकद्वितीयपादप्रतिपाद्यमित्यभिप्रायेणाह– **एतदु हैवास्या एतदिति** ॥ यो गायत्र्या एतत् ऋगादिस्थम् । पदं द्वितीयपादप्रतिपाद्यं वेद **स यावतीयं त्रयीविद्येति** ऋगादिवेदत्रयगतं प्रद्युम्नाख्यं रूपं यावदभिव्याप्य वर्तते व्यक्त्यात्मना तावद्ध जयति व्याप्नोति । ऋगाद्यधिपत्यादिमांश्च भवतीत्यपि ध्येयम् । मुख्याधिकारी मुक्तब्रह्मेत्यर्थः ॥ ७-१९-२ ॥

**प्राणोऽपानो व्यान इत्यष्टावक्षराण्यष्टाक्षरं ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत्स यावदिदं प्राणि तावद्ध जयति योऽस्या एतदेवं पदं वेद ॥ ३ ॥ अथास्या एतदेव तुरीयं दर्शतं पदं परोरजा य एष तपति यद्वै चतुर्थं तत्तुरीयं दर्शतं पदमिति ददृश इव ह्येष परोरजा इति सर्वमु ह्येवैष रज उपर्युपरि तपति एवꣳ हैव श्रिया यशसा तपति योऽस्या एतदेवं पदं वेद ॥ ४ ॥**

व्यान इत्यत्र त्र्यक्षरं ज्ञेयम् । प्राणादिवायुस्थमष्टाक्षरात्मकप्राणादिपदवाच्यं संकर्षणाख्यं रूपं गायत्र्यै गायत्र्या अष्टाक्षरात्मकतृतीयपादप्रतिपाद्यमिति भावेन प्राण इत्यादि स्ववाक्यार्थं व्यनक्ति– **एतदु हैवास्या एतदिति** ॥ **यावदिदं प्राणीति** ॥ प्राणादिवायुस्थसङ्कर्षणाख्यं रूपं तावज्जयति सर्वप्राणाधिपत्यादिमांश्च भवतीत्यर्थः। शिष्टं प्राग्वत् । गायत्रीचतुर्थपादप्रतिपाद्यमाह– **अथेति** ॥ अथ त्रिपाद्युत्त्यनन्तरं चतुर्थं पादमुच्यत इत्यर्थः । अस्याः गायत्र्याः तुरीयं पदमेतदेवेति योजना । तुरीयं पदं विशिनष्टि– **दर्शतं पदं परोरजा इति** ॥ दर्शतं प्रत्यक्षमिव स्थितम् । रजसः रजोगुणात्मकप्रधानात्पर इति व्युत्पत्त्या परोरजा इत्युक्तो वासुदेवः । प्रणवाख्यतुरीयपादप्रतिपाद्य इत्यर्थः । एतदित्युक्तं किमित्यत

आह– **य एष तपतीति** ।। सूर्य-मण्डले स्थित्वा तपति या सत्वात्मिका रमा तत्रस्थो वासुदेवः एतत्तुरीयं पदमित्यर्थः । तुरीयमिति किमित्यत आह– **यद्वा इति** ।। यद्वै तुरीयं तच्चतुर्थमित्यर्थः । दर्शतमिति किमित्यतस्तं व्यनक्ति– **दर्शतमिति** ।। **ददृश इव ह्येष इति** ।। एषः गायत्रीचतुर्थपादप्रणवप्रतिपाद्यः सूर्यमण्डलस्थरमादेवीस्थो वासुदेवः ददृश इव दृष्ट इव । तदधीनतेजःपुंजस्य सूर्यमण्डलस्य दृश्यमानत्वात्सोऽपि ददृश इवातो दर्शतमित्युच्यते तुरीयं पदमित्यर्थः । परोरजा इत्येतद्विवृणोति– **परोरजा इतीति** ।। एष तुरीयपादप्रणवार्थो वासुदेवः सर्वमु रजः सर्वमिव रञ्जनाद्रजःशब्दितां प्रकृतिं । उपर्युपरि तस्या अपि उत्तमः संस्तपति प्रकाशते । हि यतोऽतः परोरजा इत्युच्यत इत्यर्थः । ज्ञानिनः फलमाह– **एवमिति** ।। योऽधिकारी अस्याःगायत्र्याः एतदेव पदं तुरीयपादरूपप्रणवप्रतिपाद्यं वासुदेवं वेद स एवमेव श्रिया यशसा तपति प्रकाशत इत्यर्थः ।। ७-१९-४ ।।

[गायत्री एव सावित्रीति कीर्तिता]

**सैषा गायत्र्येतस्मिंस्तुरीये दर्शते पदे परोरजसि प्रतिष्ठिता तद् वातत्सत्ये प्रतिष्ठितं चक्षुर्वै सत्यं चक्षुर्हि वै सत्यं तस्माद्यदिदानीं द्वौ विवदमानावेयातामहमदर्शमहमश्रौषमिति य एवं ब्रूयादहमदर्शमिति तस्मा एव श्रद्दध्याम तद्वै तत्सत्यं बले प्रतिष्ठितं प्राणो वै बलं तत्प्राणे प्रतिष्ठितं तस्मादाहुर्बल१ँ सत्यादो जीय इत्येवमेषा गायत्र्यध्यात्मं प्रतिष्ठिता सा हैषा गाय१ँस्तत्रे प्राणा वै गयास्तत्प्राणा१ँस्तत्रे तद्यद्गया१ँस्तत्रे तस्माद्गायत्री नाम स यामेवामू१ँ सावित्रीमन्वाहैषैव सा स यस्मा अन्वाह तस्य प्राणा१ँस्त्रायते ।। ५ ।।**

गायत्रीप्रतिपाद्यमुक्त्वा तदभिमानिदेवतामाह– **सैषेति** ।। सैषा गायत्री गायत्र्यभिमानिनी देवता क्रमात् श्रीब्रह्मब्रह्माण्यात्मिका एतस्मिंस्तुरीये दर्शते पदे । परोरजसि वासुदेवे । प्रतिष्ठिता तदाश्रिता । पदानामर्थः प्रागुक्तः । भगवदाश्रितत्वमेव परम्परोक्त्या व्यनक्ति– **तद्वा इत्यादिना** ।। तद्वा एतद्भूमिरन्तरिक्षमित्यादिनोक्तं जगत्सत्ये सन् हरिरस्मिन् यातीति व्युत्पत्त्या सत्यनामके शेषे प्रतिष्ठितं आश्रितम् । किं सत्यमित्यत उक्तं– **चक्षुर्वै सत्यमिति** ।। सत्यं चक्षुर्वै । उपलक्षणमेतत् । चक्षुः सूर्यमण्डलाभिमानी वा । इति प्रसिद्धमेवैतदित्याह– **चक्षुर्हि वै सत्यमिति** ।। चक्षुषः सत्यत्वं प्रसिद्धमेवेत्युक्तं दर्शयति– **तस्मादिति** ।। तस्माच्चक्षुषः सत्यत्वादेव यत् यदि । कस्मिंश्चिदर्थे इदानीं विवदमानौ द्वावेयातामागच्छताम् । किमिति अहमदर्शमश्रौषमिति विवदमानावित्यर्थः । य एवाहमदर्शमिति ब्रूयात्तस्मै । एतत्तदीयमेव वचनं श्रद्दध्याम विश्वसेमेति । एवं चक्षुषः सत्यत्वमुपपाद्य तदाश्रयमाह– **तद्वा एतदिति**।। तज्जगदाधारभूतं चक्षुःसूर्यमानिसत्यनामकं शेषरूपं बले प्रतिष्ठितं आश्रितम् । किं बलमित्यत आह– **प्राण इति** ।। प्राणो मुख्यवायुर्बलं वै बलदेवता वै । तत्सत्यं प्राणे प्रतिष्ठितं । तत्कुत इत्यतो व्यनक्ति– **तस्मादिति** ।। ओजीयः श्रेष्ठं । तद्वा एतद्बलं गायत्र्यां प्रतिष्ठितमित्यपि ज्ञेयम् । यदर्थं परम्परोक्ता तदिदानीमाह– **एवमेवैषेति** ।। एषा बलशब्दितप्राणाधारभूता गायत्रीमानिनी श्रीः । अध्यात्मम् आत्मनामधिपतौ हरौ । प्रतिष्ठिता श्रिता । केन निमित्तेन सा गायत्रीत्युक्तेत्यत आह– **गयांस्तत्र इति** ।। तद्व्यनक्ति– **प्राणा इति** ।। प्राणा वै गयास्तत्प्राणान् भक्तप्राणान् । तत्रे रक्षति । तद्यद्गयांस्तत्रे । तस्मात्प्राणानां रक्षणाद्गायत्री नाम तदभिमानिदेव्याः श्रिय इत्यर्थः । श्रुत्यादौ सावित्रीति काचिदुच्यते । सा किं गायत्री । तद्भिन्नेत्यतो नेत्याह– **स इति** ।। परोरजा इति प्रकृतो हरिः यामेवामुं सावित्रीं अन्वाह वदति । सैषैव गायत्र्यैव स विष्णुर्यस्मै ब्रह्मणे तामन्वाह ब्रूते । तस्य ब्रह्मणः प्राणान् सर्वदा पुत्रवत्त्रायते सेत्यर्थः ।। ७-१९-५ ।।

**तां हैतामेके सावित्रीमनुष्टुभमन्वाहुर्वागनुष्टुबेतद्वाचमनुब्रूम इति तन्न तथा कुर्याद्गायत्रीमेव सावित्रीमनुब्रूयाद्यदि ह वा अप्येवंविद् बह्विव प्रतिगृह्णाति न ह वै तद्गायत्र्या एकं च न पदं प्रति ॥ ६ ॥**

स्वयं गायत्रीं सावित्रीमुक्त्वा केषाञ्चित्पक्षमनूद्य निराह– **तामिति** ॥ एके तामेतामनुष्टुभम् । 'तत्सवितुर्वृणीमहे वयं देवस्य भोजनम् । श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि' इति द्वात्रिंशदक्षरात्मिकामनुष्टुबाख्यां ऋचं सावित्रीमाहुः । तद्वचनप्रकारमाह– **वागनुष्टुबिति** ॥ तद्वाचं तां वाचमनुष्टुबाख्यां सावित्रीमनुब्रूम इति निषेधति– **न तथा कुर्यादिति** ॥ स्वमतमाह– **गायत्रीमेव सावित्रीमनुब्रूयादिति** ॥ गायत्र्युपासकस्य फलोक्तिव्याजेन गायत्रीमहिमानमाह– **यदि ह वा इति** ॥ एवंविद्यदि बह्वपि प्रतिगृह्णातीव । प्रतिग्रहदोषाभावसूचनार्थ इवशब्दः । तत्प्रतिगृहीतं बह्वपि गायत्र्याः एकं चन एकमपि पदं प्रति न हैव भवति । हेति निश्चयः । एकपादविज्ञानफलायापि नालमित्यर्थः ॥ ६ ॥

**स य इमाँस्त्रींल्लोकान् पूर्णान् प्रतिगृह्णीयात्सोऽस्या एतत् प्रथमं पदमाप्नुयात् अथ यावतीयं त्रयी विद्या प्रतिगृह्णीयात् सोऽस्या एतद्द्वितीयं पदमाप्नुयादथ यावदिदं प्राणि यस्ताव-त्प्रतिगृह्णीयात्सोऽस्या एतत्तृतीयं पदमाप्नुयादथास्या एतदेव तुरीयं दर्शतं पदं परोरजा य एष तपति नैव केनचनाप्यं कुत उ एतावत्प्रतिगृह्णीयात् ॥ ७ ॥**

गायत्र्युपासकस्य फलान्तरमाह– **स य इमानित्यादिना** ॥ स प्रसिद्धो योऽधिकारी विरिञ्चः । इमान् पूर्णान् त्रीन् लोकान् विष्णोः प्रतिगृह्णीयात् । सः अस्याः गायत्र्याः प्रथमं पदमाप्नुयात् प्रथमपादोपासनाफलमाप्नुयात् । यो ब्रह्मा । यावती त्रयीविद्या तावत् तावती । विष्णुतः प्रतिगृह्णीयात्स अस्याः

गायत्र्या एतद्वितीयं पदं द्वितीयपादोपासनाफलमाप्नुयात् । अथ यः यावदिदं प्राणिचेतनजातं तावद्विष्णुतः प्रतिगृह्णीयात् स्वामी भवेदिति यावत् । अस्या एतत्तृतीयपादोपासनाफलमाप्नुयात् । अथास्याः गायत्र्याः एतदेव तुरीयं दर्शतं पदं परोरजा य एष तपति दर्शतं दृष्टमिव स्थितम् । रजसः प्रधानाल्लक्ष्म्याः परं यत्सूर्यमण्डलगं एतत्तुरीयं पदं प्रणवाख्यचतुर्थपादप्रतिपाद्यं वासुदेवाख्यं रूपं केनचन केनापि नैवाप्यम् । गायत्र्याः प्रथमादिपादत्रयप्रतिपाद्यस्या-निरुद्धादिरूपत्रयस्य त्रिलोकादिमात्रव्यापितया तद्व्यापनसम्भवेऽपि चतुर्थपाद-प्रतिपाद्यो वासुदेवः सर्वव्यापीति चतुर्थपादप्रतिपाद्योपासकस्य तद्व्यापनरूपफलं नैव लभ्यत इत्यर्थः । चतुर्थपादोपासनाफलं केनापि नाप्यत इति कुत इत्यत आह– **कुत उ एतावत्प्रतिगृह्णीयादिति** ।। वासुदेवोऽनन्तत्वा-द्यावत्प्राप्नोति तावत्कुतः प्रतिगृह्णीयात् न कुतोऽपि ।। ७-१९-७ ।।

**तस्या उपस्थानं गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि नहि सम्पद्यसे नमस्ते तुरीयाय दर्शताय पदाय परोरजसेऽसावदो मा प्रापदिति यं द्विष्यादसावस्मै कामो मा समृद्धीति वा नहैवास्मै स काम ऋद्ध्यते यस्मा एवमुपतिष्ठतेऽहमतः प्रापमिति वा ॥ ८ ॥**

गायत्र्युपासनाप्रकारमाह– **तस्या इति** ।। उपस्थानं मन्त्रकरणकस्तुतिप्रकारो निरूप्यत इत्यर्थः । हे गायत्रि त्वमेकपदी असि । एकैकपादस्य अष्टाक्षरत्वा-त्प्रणवस्याप्यकारोकरमकारनादबिन्दु[१]घोषशान्तातिशान्तभेदेनाष्टाक्षरत्वात् प्रणवेन सह पादचतुष्टयस्यापि प्रत्येकं गायत्रीत्वविवक्षयोच्यते एकपद्यसीति । पादः प्रणवयुक्तश्चेत् द्विपदीति । द्विपद्यसि । प्रणवेन विना त्रिपदी असि । स प्रणवा चतुष्पद्यसि । अपद्यसीत्युक्तं तत्कुत इत्यत आह– **नहि सम्पद्यस**

---

१ **'घोषस्थाने कले'** ति भावबोधे पठ्यते ।

**इति** ।। ब्रह्मणोऽन्येन मुख्यतो न गम्यस इति अपदी असि। नमस्ते तुरीयाय दर्शताय पदाय परोरजसे । एवमुपासको यद्विष्यात् यं द्विष्यात् असौ द्वेष्यः अदः कामितं मा' प्रापत् नैव प्राप्नुयात् । अस्मै द्वेष्याय असौ कामः मा समृद्धि समृद्धो माभूदिति चोपासिता चेद्गायत्री तदा अस्मै द्वेष्यायासौ कामो नैव ऋध्यते ह समृद्धौ नैव भवति । यदा त्वहमदः कामितं प्रापं प्राप्नुयामिति बुद्ध्या यस्मै कामाय गायत्रीमुपतिष्ठते उपास्ते सा गायत्री तस्मै कामपूर्तिं करिष्यत्येवेति योज्यम् ।। ७-१९-८ ।।

[उपासिता गायत्री सर्वप्रतिग्रहदोषं हन्ति]

**एतद्ध वै तज्जनको वैदेहो बुडिलमाश्वतराश्विमुवाच यन्नु हो तद्गायत्रीविदब्रूथा अथ कथꣳ हस्तीभूतो वहसीति मुखꣳ हास्याः सम्राण्न विदाचकारेति होवाच तस्याग्निरेव मुखं यदि ह वा अपि बह्विवाग्नावभ्यादधति सर्वमेव तत्सन्दहत्येवꣳ हैवैवंविद्यद्यपि बह्विव पापं कुरुते सर्वमेव तत्संप्साय शुद्धः पूतोऽजरोऽमृतः सम्भवति ।। ९ ।।**

इति एकोनविंशं ब्राह्मणम् ।। ७-१९ ।।

उपासिता गायत्री सर्वप्रतिग्रहदोषं हन्तीत्येतदाख्यायिकयाह– **एतदिति** ।। जनको ह वैदेहः आश्वतराश्विं अश्वतराश्वगोत्रजं बुडिलनामकं तदेतद्वक्ष्यमाण-मुवाच ह । भो अहं गायत्रीविदिति यदब्रूथाः । तन्न । यदि वेत्थ अथ तर्हि कथं हस्तीभूतः मूर्खः सन् प्रतिग्रहदोषं वहसीत्युवाचेत्यन्वयः। एवमुक्तः स सम्राट् अस्याः गायत्र्याः मुखं प्रथमाक्षरदेवतां न विदाञ्चकार । न ज्ञातवानतोऽहं दोषवाहकोऽस्मीत्युवाच । वेदपुरुषः स्वयं गायत्रीमुखमाह– **तस्या इति** ।। तस्याः गायत्र्याः अग्निः अग्निमण्डलगोऽग्रणीत्वहेतुनाग्निनामाग्निवर्णः परशु-रामः । मुखं प्रथमाक्षरदेवता । मुखज्ञानपूर्वकं गायत्र्युपासकस्य फलं

दृष्टान्तपूर्वमाह– **यदि हेति** ।। यद्यपि बह्विव बह्वपि तृणतूलादिकं अग्नावभ्यादधति प्रक्षिपन्ति । तत्सर्वं सन्दहत्येवाग्निः । यथेत्युपमार्थ इवशब्दः । एवं हैव एवमेव । एवंवित् । यद्यपि बह्विव पापं कुरुते सर्वमेव तत्संप्साय भक्षयित्वा भस्मीकृत्य स्वयं शुद्धः पूतोऽन्यानपि पवित्रं कुर्वन्नजरोऽमृतः सम्भवति ।। ९ ।।

इति एकोनविंशं ब्राह्मणम् ।। ७-१९ ।।

## अथ विंशं ब्राह्मणम्

### [सूर्यनिष्ठनारायणोपासना]

**हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।**
**तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ।। १ ।।**

गायत्र्यर्थत्वेन प्रकृतस्य हरेः सूर्यनिष्ठस्योपासनान्तरमाह– **हिरण्मयेनेति** ।। हिरण्मयमिव हिरण्मयं ज्योतिर्मयम् । पिबत्युदकं तमसः त्रायते जगदिति पात्रम् । हिरण्मयेन पात्रेण सूर्यमण्डलेन । सत्यस्य सद्गुणपूर्णस्य । सूर्यमण्डलस्थस्य तव मुखमुपलक्षणं वपुः सर्वदाऽपिहितमस्ति ।। १ ।।

**पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन् ।**
**समूह तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि ।। २ ।।**
**योऽसावसौ पुरुषः सोऽहमस्मि ।**
**वायुरनिलममृतमथेदं भस्मान्तꣳ शरीरम् ।। ३ ।।**

हे पूषन् पूर्ण । तद्वपुः त्वं सत्यधर्माय सत्यं भगवन्तं हृदये धारयतीति व्युत्पत्त्या त्वद्ध्यानादिमते भक्ताय मह्यम् । दृष्टये मम त्वद्दर्शनाय अपावृणु अपगतावरणं कुरु। हे पूषन् पूर्ण । एकर्षे सर्वविषयकज्ञानादिमन् यम सर्वनियामक । उदकादेरूरीकरणात् सूर्य । प्रजापतिज्ञेयतया प्राजापत्य । रश्मीन् मदीयस्वरूपज्ञानाख्यरश्मीन् व्यूह विस्तारय । तेजः बाह्यवृत्तिज्ञानं समूह विस्तारय । तथैवेशावास्यटीकोक्तेः । तथाच यत्ते रूपं कल्याणतमं

तद्रूपं ते प्रसादादहं पश्यामि । मुख्यवायुगतभगवदुपास्तिमाह– **योऽसाविति** ।। योऽसौ प्रसिद्धः असौ सप्तम्यन्तमिदम् । असुनामके प्राणे स्थित इति शेषः । सोऽहेयत्वादहमित्युक्तः । असुत्वमेयत्वहेतुभ्यामस्मीत्युक्तः । तं च पश्यामीत्यन्वयः । यमसूर्यादौ स्थितस्य तन्नाशेन नाशोऽस्ति किमित्यत आह– **वायुरिति** ।। यद्यपीदं शरीरं भस्मान्तं तथाप्यमृतो भगवान् कुतः अः हरिः निलो निलयनमाश्रयो यस्य सः अनिलं अनिलः भगवदाश्रितो वायुरप्यमृतं अमृतः किमु परमात्मा । वायोरमृतत्वं नित्यज्ञानत्वेन ज्ञेयम् ।। ७-२०-३ ।।

**ॐ क्रतो स्मर कृतꣳ स्मर**
**क्रतो स्मर कृतꣳ स्मर ।। ४ ।।**

प्रणवप्रतीकं प्रार्थयते– **ओमिति** ।। अमृतत्वादिगुणयुक्त क्रतो ज्ञानरूप हरे । मामिति शेषः । स्मर अनुग्रहेण कृतं मदीयध्यानादिकं स्मर । तज्ज्ञात्वा मय्यनुग्रहोन्मुखो भव ।। ७-२०-४ ।।

**अग्ने नय सुपथा राये अस्मान्**
**विश्वानि देव वयुनानि विद्वान् ।**
**युयोध्यस्मज्जुहुराणमेनो**
**भूयिष्ठां ते नम उक्तिं विधेम ।। ५ ।।**

इति विंशं ब्राह्मणम् ।। ७-२० ।।

इति बृहदारण्यके सप्तमोऽध्यायः

अग्निप्रतीकस्थभगवत्प्रार्थनां करोति– **अग्न इति** ।। अङ्गाख्यदेहनेतृतयाऽग्निनामक अग्निस्थहरे । अस्मान् सुपथा अर्चिरादिमार्गेण । राये मोक्षाख्यवित्ताय । नय प्रापय । कुतः हे देव अस्मदीयानि वयुनानि ज्ञानानि । विद्वान् जानन् । जुहुराणम् । अस्मानित्यनुषज्यते । अस्मानल्पीकुर्वत् पापम् । अस्मत् पञ्चमीयम् ।

अस्मत्तः युयोधि वियोजय । वयं ते तुभ्यं भूयिष्ठां भक्त्याद्युपेताम्। नमः नम इत्युक्तिं विधेम कुर्मः । नतु तत्प्रतिकर्तुं शक्नुम इति ॥ ७-२०-५ ॥

इति काण्वोपनिषदर्थसङ्ग्रहे श्रीराघवेन्द्रतीर्थविरचिते सप्तमोऽध्यायः

# अथ अष्टमोऽध्यायः

## अथ प्रथमं ब्राह्मणम्

[वायोः श्रैष्ठ्यवित् इह मुक्तावपि स्वानां मध्ये श्रेष्ठो भवति]

**यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति प्राणो वै ज्येष्ठश्च श्रेष्ठश्च ज्येष्ठश्च श्रेष्ठश्च स्वानां भवत्यपि च येषां बुभूषति य एवं वेद ॥ १ ॥**

एतदध्यायार्थः सप्तमादावेवोक्तः । आदौ प्राणादिविषयो विद्या आह– **यो ह वा इत्यादिना** ॥ योऽधिकारी । ज्येष्ठं वयसोत्तम् । श्रेष्ठं गुणत उत्तम् । वेद । स स्वानां सजातीयानां मध्ये । ज्येष्ठः श्रेष्ठश्च भवति। ह वै को वा ज्येष्ठः श्रेष्ठश्चेत्यत आह– **प्राणो वा इति** ॥ प्राणस्य ज्येष्ठ्यश्रैष्ठ्यज्ञानिनो ज्यैष्ठ्यादिकं भवतीत्येतदपि जानतः फलोक्त्या प्राणस्य ज्यैष्ठ्यश्रैष्ठ्ये साधयति– **ज्येष्ठश्च श्रेष्ठश्च स्वानामिति** ॥ योऽधिकारी। एवं वायोर्ज्यैष्ठ्यादिज्ञानिनो ज्यैष्ठ्यादिकं भवतीति वेद सोऽपि स्वानां मध्ये ज्येष्ठः श्रेष्ठश्च भवति । न केवलमेतावदित्याह– **अपि चेति** ॥ येषां मध्ये श्रेष्ठो भवितुमिच्छति तेषु मध्येऽपि श्रेष्ठो भवतीत्यर्थो ध्येयः । एवमग्रेतनखण्डपञ्चकेऽपि व्याख्या ध्येया ॥ ८-१-१ ॥

**यो ह वै वसिष्ठां वेद वसिष्ठः स्वानां भवति वाग्वै वसिष्ठा वसिष्ठः स्वानां भवत्यपि च येषां बुभूषति य एवं वेद ॥ २ ॥**

वसिष्ठः वसतामुत्तमः । वाग्वै वागिन्द्रियदेवता वह्निर्वै ॥ ८-१-२ ॥

**यो ह वै प्रतिष्ठां वेद प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे चक्षुर्वै प्रतिष्ठा चक्षुषा हि समे च दुर्गे च प्रतितिष्ठति**

**प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे य एवं वेद ॥ ३ ॥**

प्रतितिष्ठति । समे समदेशे प्रतितिष्ठति । दुर्गे उन्नतप्रदेशे स्वर्गादौ । चक्षुर्देवस्य प्रतिष्ठात्वं कुत इत्यतः प्रतिष्ठहेतुत्वादित्याह– **चक्षुषा हीति** ॥ ३ ॥

**यो ह वै सम्पदं वेद सर्वꣳ हास्मै पद्यते यं कामं कामयते श्रोत्रं वै सम्पच्छ्रोत्रे हीमे सर्वे वेदा अभिसम्पन्नाः सꣳ हास्मै पद्यते यं कामं कामयते य एवं वेद ॥ ४ ॥**

सम्पदं सर्ववेदाभिसम्पत्तिहेतुम् । यं कामं कामयते [१]स कामोऽस्मै वेदिने सम्पद्यते। श्रोत्रदेवस्य सम्पत्त्वमुपपादयति– **श्रोत्रे हीति** ॥ ८-१-४ ॥

**यो ह वा आयतनं वेदायतनं [२]स्वानां भवत्यायतनं जनानां मनो वा आयतनमायतनꣳ स्वानां भवत्यायतनं जनानां य एवं वेद ॥ ५ ॥**

आयतनमाश्रय इत्यर्थः । जनानां स्वजातिभिन्न[३]जनानाम् । मनोभिमानिनः शेषाद्याः ॥ ८-१-५ ॥

**यो ह वै प्रजापतिं वेद प्रजायते ह प्रजया पशुभी रेतो वै प्रजापतिः प्रजायते ह प्रजया पशुभिर्य एवं वेद ॥ ६ ॥**

प्रजापतिं प्रजाजननहेतुम् । रेतो वै रेतोऽभिमानी [४]वरुणो वै । य एवं वेदेति चरमवाक्यज्ञानिनः फलं भवतीत्यपि यो वेद तस्यापि तत्फलं भवतीत्यर्थः सर्वत्र ध्येयः ॥ ६ ॥

[यदभावे देहपातः सः प्राणः श्रेयान्]

**ते हेमे प्राणा अहꣳ श्रेयसे विविदमाना ब्रह्म जग्मुस्तद्धोचुः**

---

१. 'स कामयते' - ख. । २. 'जनानाम्'-ख. । ३. 'जातीयानाम्'-ख. । ४. 'वरुणो वै' इति क.ख. कोशेषु नास्ति ।

# अथ अष्टमोऽध्यायः

## अथ प्रथमं ब्राह्मणम्

[वायोः श्रैष्ठ्यवित् इह मुक्तावपि स्वानां मध्ये श्रेष्ठो भवति]

**यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति प्राणो वै ज्येष्ठश्च श्रेष्ठश्च ज्येष्ठश्च श्रेष्ठश्च स्वानां भवत्यपि च येषां बुभूषति य एवं वेद ॥ १ ॥**

एतदध्यायार्थः सप्तमादावेवोक्तः । आदौ प्राणादिविषयो विद्या आह– **यो ह वा इत्यादिना** ॥ योऽधिकारी । ज्येष्ठं वयसोत्तम् । श्रेष्ठं गुणत उत्तम् । वेद । स स्वानां सजातीयानां मध्ये । ज्येष्ठः श्रेष्ठश्च भवति । ह वै को वा ज्येष्ठः श्रेष्ठश्चेत्यत आह– **प्राणो वा इति** ॥ प्राणस्य ज्यैष्ठ्यश्रैष्ठ्यज्ञानिनो ज्यैष्ठ्यादिकं भवतीत्येतदपि जानतः फलोक्त्या प्राणस्य ज्यैष्ठ्यश्रैष्ठ्ये साधयति– **ज्येष्ठश्च श्रेष्ठश्च स्वानामिति** ॥ योऽधिकारी । एवं वायोर्ज्यैष्ठ्यादिज्ञानिनो ज्यैष्ठ्यादिकं भवतीति वेद सोऽपि स्वानां मध्ये ज्येष्ठः श्रेष्ठश्च भवति । न केवलमेतावदित्याह– **अपि चेति** ॥ येषां मध्ये श्रेष्ठो भवितुमिच्छति तेषु मध्येऽपि श्रेष्ठो भवतीत्यर्थो ध्येयः । एवमग्रेतनखण्डपञ्चकेऽपि व्याख्या ध्येया ॥ ८-१-१ ॥

**यो ह वै वसिष्ठां वेद वसिष्ठः स्वानां भवति वाग्वै वसिष्ठा वसिष्ठः स्वानां भवत्यपि च येषां बुभूषति य एवं वेद ॥ २ ॥**

वसिष्ठः वसतामुत्तमः । वाग्वै वागिन्द्रियदेवता वह्निर्वै ॥ ८-१-२ ॥

**यो ह वै प्रतिष्ठां वेद प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे चक्षुर्वै प्रतिष्ठा चक्षुषा हि समे च दुर्गे च प्रतितिष्ठति**

**प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे य एवं वेद ॥ ३ ॥**

प्रतितिष्ठति । समे समदेशे प्रतितिष्ठति । दुर्गे उन्नतप्रदेशे स्वर्गादौ । चक्षुर्देवस्य प्रतिष्ठात्वं कुत इत्यतः प्रतिष्ठहेतुत्वादित्याह– **चक्षुषा हीति** ॥ ३ ॥

**यो ह वै सम्पदं वेद सर्वꣳ हास्मै पद्यते यं कामं कामयते श्रोत्रं वै सम्पच्छ्रोत्रे हीमे सर्वे वेदा अभिसम्पन्ना सꣳ हास्मै पद्यते यं कामं कामयते य एवं वेद ॥ ४ ॥**

सम्पदं सर्ववेदाभिसम्पत्तिहेतुम् । यं कामं कामयते [१]स कामोऽस्मै वेदिने सम्पद्यते। श्रोत्रदेवस्य सम्पत्त्वमुपपादयति– **श्रोत्रे हीति** ॥ ८-१-४ ॥

**यो ह वा आयतनं वेदायतनं [२]स्वानां भवत्यायतनं जनानां मनो वा आयतनमायतनꣳ स्वानां भवत्यायतनं जनानां य एवं वेद ॥ ५ ॥**

आयतनमाश्रय इत्यर्थः । जनानां स्वजातिभिन्न[३]जनानाम् । मनोभिमानिनः शेषाद्याः ॥ ८-१-५ ॥

**यो ह वै प्रजापतिं वेद प्रजायते ह प्रजया पशुभी रेतो वै प्रजापतिः प्रजायते ह प्रजया पशुभिर्य एवं वेद ॥ ६ ॥**

प्रजापतिं प्रजाजननहेतुम् । रेतो वै रेतोऽभिमानी [४]वरुणो वै । य एवं वेदेति चरमवाक्यज्ञानिनः फलं भवतीत्यपि यो वेद तस्यापि तत्फलं भवतीत्यर्थः सर्वत्र ध्येयः ॥ ६ ॥

[यदभावे देहपातः सः प्राणः श्रेयान्]

**ते हेमे प्राणा अहꣳ श्रेयसे विविदमाना ब्रह्म जग्मुस्तद्धोचुः**

---

१. 'स कामयते' - ख. । २. 'जनानाम्'-ख. । ३. 'जातीयानाम्'-ख. । ४. 'वरुणो वै' इति क.ख. कोशेषु नास्ति ।

**को नो वसिष्ठ इति तद्धोवाच यस्मिन् व उत्क्रान्त इदꣳ शरीरं पापीयो मन्यते स वो वसिष्ठ इति ॥ ७ ॥**

प्राणस्य श्रेष्ठत्वं मीमांसया समर्थितमिति भावेनाख्यायिकामाह– **ते हेम इति** ॥ त इति प्राणवाक्प्रभृतयः प्रागुक्तप्राणादिदेवाः । अहं श्रेयसे अहं श्रेयानहं श्रेयानित्येतदर्थे विवदमानाः विवादं कुर्वतः । ब्रह्म परं ब्रह्म जग्मुः प्राप्ताः । तद् ब्रह्म हरिम् । नोऽस्माकं मध्ये को वसिष्ठः वसतामुत्तम इति श्रेष्ठ इति वा ऊचुरित्यर्थः । तद् ब्रह्म यस्मिन्नुत्क्रान्ते इदं ब्रह्मणः शरीरं पापीयः शवकल्पं मन्यते लोक इति शेषः । सः वो युष्माकं मध्ये। वसिष्ठः श्रेष्ठ इत्युवाचेत्यर्थः ॥ ८-१-७ ॥

**वाग्घोच्चक्राम सा संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथाऽकला अवदन्तो वाचा प्राणन्तः प्राणेन पश्यन्तः चक्षुषा शृण्वन्तः श्रोत्रेण विद्वाꣳसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह वाक् ॥ ८ ॥**

एवं हरिणोक्ता देवाः पुनरागत्य ब्रह्मदेहस्थाः श्रैष्ठ्यविज्ञप्त्यै पृथक् पृथक् देहादुत्क्रान्ता इत्याह– **वाग्घोच्चक्रामेत्यादिना खण्डपञ्चकेन** ॥ वाक् वागभिमानी देव उच्चक्राम ब्रह्मदेहान्निर्जगाम । सा वाक् संवत्सरं प्रोष्य प्रवासं कृत्वा । आगत्य हे देवाः मदृते मां विना । जीवितुं कथमशकत शक्ता अभवतेत्युवाच । इत्युक्तास्ते देवाः यथाऽकलाः मूकाः अवदन्तः एवमजीविष्मेत्यूचुरित्यन्वयः । प्राणन्त इत्यादि व्यक्तम् । प्रजायमानाः प्रजां जनयन्त इत्यर्थः । एतद्वचनं श्रुत्वा पश्चाद्देहं प्रविवेश वाक् ह किल ॥ ८ ॥

**चक्षुर्होच्चक्राम तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा अन्धा अपश्यन्तश्चक्षुषा**

**प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण विद्वांसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह चक्षुः ॥ ९ ॥ श्रोत्रं होच्चक्राम तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा बधिरा अशृण्वन्तः श्रोत्रेण प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा विद्वांसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह श्रोत्रम् ॥ १० ॥**

चक्षुरित्यादिखण्डचतुष्कयोजनाप्येवं ज्ञेया। तत् चक्षुः। अन्धाः चक्षुषाऽपश्यन्तो यथा एवमित्यन्वयः ॥ ८-१-९,१० ॥

**मनो होच्चक्राम तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा [1]मुग्धा अविद्वाꣳसो मनसा प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह मनः ॥ ११ ॥**

मुग्धाः षण्मासबाला यथेत्यर्थः ॥ ८-१-११ ॥

**रेतो होच्चक्राम तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा क्लीबा अप्रजायमाना रेतसा प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वांसो मनसैवमजीविष्मेति प्रविवेश ह रेतः ॥ १२ ॥**

---

१. यथोक्तं–षण्मासात्पूर्वबालानां केवल प्राणतो भवेत्। व्यापार्य मनसा सर्वं अतः पश्चादपस्मृतिः' इति भावबोधे।

क्लीबाः नपुंसकाः । अप्रजायमानाः [१]अप्रजनयन्तः ॥ ८-१-१२ ॥

**अथ ह प्राण उत्क्रमिष्यन्यथा महासुहयः सैन्धवः पड्वीश-शङ्कून् संवृहेदेवꣳ हैवेमान् प्राणान् सम्बबर्ह ते होचुर्म भगव उत्क्रामीर्न वै शक्ष्यामस्तदृते जीवितुमिति त्सोय मे बलिं कुरुतेति तथेति ॥ १३ ॥**

तेषामशक्तिप्रकटनानन्तरम् । प्राणः मुख्यवायुः । उत्क्रमिष्यन् ब्रह्मदेहादूर्ध्वं निर्गमिष्यन् स यथा सैन्धवः सिन्धुदेशीयः । महासुहयः ऊर्ध्वं गमिष्यन् पड्वीशशंकून् पादचतुष्टये गले च बध्यमानरज्वा[२]धारादीन् संवृहेत् उन्मूलयेत् । एवं हैव एवमेव ह इमान् प्राणान् वागादीन् देवान् सम्बबर्ह उदमूलयत् । स्थातुमशक्तानकरोदिति यावत् । ते स्थातुमशक्ताः वागादिदेवाः हे भगवन् मोत्क्रमीः उत्क्रान्तो माभूः । त्वदृते वयं जीवितुं नैव शक्ष्याम इत्यूचुः । एवमुक्तः प्राणो वक्ति– **तस्यो म इति** ॥ उ हे देवाः । तस्य मे अतिबलिष्ठस्य मम बलिं पूजां कुरुतेति उवाचेति योज्यम् । एवमुक्तास्ते देवाः तथेत्यूचुरित्यर्थः ॥ १३ ॥

**सा ह वागुवाच यद्वा अहं वसिष्ठाऽस्मि त्वं तद्वसिष्ठोऽसीति यद्वा अहं प्रतिष्ठाऽस्मि त्वं तत्प्रतिष्ठाऽसीति चक्षुर्यद्वा अहꣳ सम्पदस्मि त्वं तत्सम्पदसीति श्रोत्रं यद्वा अहमायतनमस्मि त्वं तदायतनमसीति मनो यद्वा अहं प्रजापतिरस्मि त्वं तत्प्रजापतिरसीति रेतः तस्योमे किमन्नं किं वास इति यदिदं किञ्च आश्वभ्य आ क्रिमिभ्य आ कीटपतङ्गेभ्यस्तत्तेऽन्न[३]मापो वास इति न ह वा अस्यानन्नं**

---

१. 'अप्रजायन्तः' -ग. । २. धारणादीन्' -ख. । ३. नन्वेतदन्नं वासश्च प्राणस्य पूर्वमेव सिद्धं कथं देवैर्दत्तमिति चेत् सिद्धस्यैव देवैः स्वार्थं समर्पणात् । यथोक्तं–'सिद्धमेवान्नवस्त्राद्यं विष्णोः स्वातन्त्र्यतस्तदा । स्वार्थं समर्पयद्विष्णोर्यथा प्राणे सुराः पुरा ॥' इति भावबोधे ।

**जग्धं भवति नानन्नं परिगृहीतं य एवमेतदनस्यान्नं वेद तद्विद्वाꣳसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वा चाचामन्त्येतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते तस्मादेवं विद्वानशिष्यन्नाचामेदशित्वा चाचामेत् ॥ १४ ॥**

इति प्रथमं ब्राह्मणम् ॥ ८-१ ॥

तथेत्युक्ता देवाः प्रत्येकं स्वस्वाधारणधर्मस्तदधीन इति तस्मै समर्पितवन्त इत्याह– **साह वागुवाचेत्यादिना** ॥ वसिष्ठास्मि वसतामुत्तमास्मीति यत् त्वं तद्वसिष्ठोऽसि त्वदधीनं तद्वसिष्ठत्वमित्यर्थः । एवमग्रेऽपि योजना ध्येया । प्रतिष्ठा स्थितिहेतुरिति चक्षुरुवाचेति शेषः । इति श्रोत्रमुवाचेत्याद्यपि नेयम् । एवमुक्तः प्राण आह– **तस्यो म इति** ॥ उ हे देवाः । तस्य मे सर्व-स्वामिनो मम । किमन्नं किं वासः इत्युवाच प्राणः । एवमुक्ता देवा आहुः– **यदिदमिति** ॥ श्वकृमिकीटपतङ्गपर्यन्तं प्राणिभिर्यदिदं किञ्चाद्यते तत्ते सर्वान्तर्यामिणः तवान्नं या आपः पीयन्ते ता आपः ते वासो वस्त्रमित्यूचुरिति योजना । एतज्ज्ञानिनः फलमाह– **न ह वा इति** ॥ योऽधिकारी एवं देवैरुपक्लृप्तत्वप्रकारेणैतत् सर्वप्राणिभिरद्यमानं अन्नं अनस्यान्नं वेद । अस्य एवं वेदिनः अनन्नं जग्धं भक्षितं न भवति ह वै । अनन्नं परिगृहीतं न भवति । एतद्विद्वांसो ज्ञानिनः श्रोत्रियाः छन्दोऽध्येतारः अशिष्यन्तः अन्नभोजनं करिष्यन्तः आचामन्ति । अशित्वा भुक्त्वा चाचामन्ति । तत्तेन भोजनो-पक्रमावसानयोः कृताचमनेनैतं अन्नमनग्नं वसनोपेतं कुर्वन्तो मन्यन्ते । तस्मादेवं विद्वानशिष्यन् आचामेत् । अशित्वा चाऽऽचामेदिति ॥ ८-१-१४ ॥

इति प्रथमं ब्राह्मणम् ॥ ८-१ ॥

## अथ द्वितीयं ब्राह्मणम्

[क्षत्राद् ब्रह्मणः पञ्चाग्निविद्योपदेशः]

**श्वेतकेतुर्ह वा आरुणेयः पञ्चालानां परिषदमाजगाम स**

क्लीबाः नपुंसकाः । अप्रजायमानाः [1]अप्रजनयन्तः ॥ ८-१-१२ ॥

**अथ ह प्राण उत्क्रमिष्यन्यथा महासुहयः सैन्धवः पड्वीशशङ्कून् संवृहेदेवꣳ हैवेमान् प्राणान् सम्बबर्ह ते होचुर्मे भगव उत्क्रामीर्न वै शक्ष्यामस्तदृते जीवितुमिति त्सोय मे बलिं कुरुतेति तथेति ॥ १३ ॥**

तेषामशक्तिप्रकटनानन्तरम् । प्राणः मुख्यवायुः । उत्क्रमिष्यन् ब्रह्मदेहादूर्ध्वं निर्गमिष्यन् स यथा सैन्धवः सिन्धुदेशीयः । महासुहयः ऊर्ध्वं गमिष्यन् पड्वीशशंकून् पादचतुष्टये गले च बध्यमानरज्वा[2]धारादीन् संवृहेत् उन्मूलयेत् । एवं हैव एवमेव ह इमान् प्राणान् वागादीन् देवान् सम्बबर्ह उदमूलयत् । स्थातुमशक्तानकरोदिति यावत् । ते स्थातुमशक्ताः वागादिदेवाः हे भगवन् मोत्क्रमीः उत्क्रान्तो माभूः । त्वदृते वयं जीवितुं नैव शक्ष्याम इत्यूचुः । एवमुक्तः प्राणो वक्ति– **तस्यो म इति** ॥ उ हे देवाः । तस्य मे अतिबलिष्ठस्य मम बलिं पूजां कुरुतेति उवाचेति योज्यम् । एवमुक्तास्ते देवाः तथेत्यूचुरित्यर्थः ॥ १३ ॥

**सा ह वागुवाच यद्वा अहं वसिष्ठाऽस्मि त्वं तद्वसिष्ठोऽसीति यद्वा अहं प्रतिष्ठाऽस्मि त्वं तत्प्रतिष्ठाऽसीति चक्षुर्यद् वा अहꣳ सम्पदस्मि त्वं तत्सम्पदसीति श्रोत्रं यद्वा अहमायतनमस्मि त्वं तदायतनमसीति मनो यद्वा अहं प्रजापतिरस्मि त्वं तत्प्रजापतिरसीति रेतः तस्योमे किमन्नं किं वास इति यदिदं किञ्च आश्वभ्य आ क्रिमिभ्य आ कीटपतङ्गेभ्यस्तत्तेऽन्न[3]मापो वास इति न ह वा अस्यानन्नं**

---

१. 'अप्रजायन्तः'-ग. । २. धारणादीन्'-ख. । ३. नन्वेतदन्नं वासश्च प्राणस्य पूर्वमेव सिद्धं कथं देवैर्दत्तमिति चेत् सिद्धस्यैव देवैः स्वार्थं समर्पणात् । यथोक्तं–'सिद्धमेवान्नवस्त्राद्यं विष्णोः स्वातन्त्र्यतस्तदा । स्वार्थं समर्पयेद्विष्णोर्यथा प्राणे सुराः पुरा ॥' इति भावबोधे ।

**जग्धं भवति नानन्नं परिगृहीतं य एवमेतदनस्यान्नं वेद तद्विद्वाꣳसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वा चाचामन्त्येतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते तस्मादेवं विद्वानशिष्यन्नाचामेदशित्वा चाचामेत् ॥ १४ ॥**

**इति प्रथमं ब्राह्मणम् ॥ ८-१ ॥**

तथेत्युक्ता देवाः प्रत्येकं स्वस्वाधारणधर्मस्तदधीन इति तस्मै समर्पितवन्त इत्याह– **साह वागुवाचेत्यादिना** ॥ वसिष्ठास्मि वसतामुत्तमास्मीति यत् त्वं तद्वसिष्ठोऽसि त्वदधीनं तद्वसिष्ठत्वमित्यर्थः । एवमग्रेऽपि योजना ध्येया। प्रतिष्ठा स्थितिहेतुरिति चक्षुरुवाचेति शेषः । इति श्रोत्रमुवाचेत्याद्यपि नेयम् । एवमुक्तः प्राण आह– **तस्यो म इति** ॥ उ हे देवाः । तस्य मे सर्व-स्वामिनो मम । किमन्नं किं वासः इत्युवाच प्राणः । एवमुक्ता देवा आहुः– **यदिदमिति** ॥ श्वकृमिकीटपतङ्गपर्यन्तं प्राणिभिर्यदिदं किञ्चाद्यते तत्ते सर्वान्तर्यामिणः तवान्नं या आपः पीयन्ते ता आपः ते वासो वस्त्रमित्यूचुरिति योजना । एतज्ज्ञानिनः फलमाह– **न ह वा इति** ॥ योऽधिकारी एवं देवैरुपक्लृप्तत्वप्रकारेणैतत् सर्वप्राणिभिरद्यमानं अन्नं अनस्यान्नं वेद । अस्य एवं वेदिनः अनन्नं जग्धं भक्षितं न भवति ह वै । अनन्नं परिगृहीतं न भवति । एतद्विद्वांसो ज्ञानिनः श्रोत्रियाः छन्दोऽध्येतारः अशिष्यन्तः अन्नभोजनं करिष्यन्तः आचामन्ति । अशित्वा भुक्त्वा चाचामन्ति । तत्तेन भोजनो-पक्रमावसानयोः कृताचमनेनैतं अन्नमनग्नं वसनोपेतं कुर्वन्तो मन्यन्ते । तस्मादेवं विद्वानशिष्यन् आचामेत् । अशित्वा चाऽऽचामेदिति ॥ ८-१-१४ ॥

**इति प्रथमं ब्राह्मणम् ॥ ८-१ ॥**

## अथ द्वितीयं ब्राह्मणम्

[क्षत्राद् ब्रह्मणः पञ्चाग्निविद्योपदेशः]

**श्वेतकेतुर्ह वा आरुणेयः पञ्चालानां परिषदमाजगाम स**

**आजगाम जैबलिं प्रवाहणं परिचारयमाणं तमुदीक्ष्याभ्युवाद कुमारा३ इति स भो३ इति प्रतिशुश्रावानुशिष्टोऽन्वसि पित्रेत्योमिति होवाच ॥ १ ॥**

आख्यायिकापूर्वं विद्यान्तरमाह– **श्वेतकेतुरिति** ॥ अरुणाया अपत्यं श्वेतकेतु[1]र्नाम्ना पाञ्चालानां पञ्चालदेशीयानां परिषदं सभामाजगाम । जिबिलस्यापत्यं जैबिलिं प्रवाहणाख्यं राजानं परिचारयमाणं भृत्यैः परिचर्यां कारयन्तम् । स श्वेतकेतुराजगाम प्राप । राजा तं श्वेतकेतुमुदीक्ष्य दृष्ट्वा कुमारा३ इति त्रिमात्रारूपप्लुतिस्वरेणामन्त्र्याभ्युवाद उवाच । स श्वेतकेतुर्भो इति प्रतिशुश्राव । प्रतिवचनमुक्तवान् । किमुवाच राजेत्यत आह– **अनुशिष्ट इति** ॥ पित्रेदानीमनुशिष्टः उपदिष्टोऽसि किमित्यभ्युवादेत्यन्वयः । अनुशिष्टोऽस्मीत्युक्तवानित्याह वेदपुरुषः– **ओमिति होवाचेति** ॥ ८-२-१ ॥

**वेत्थ यथेमाः प्रजाः [2]प्रयन्त्यो विप्रतिपद्यन्ता३ इति नेति होवाच वेत्थो यथेमं लोकं पुनरापद्यन्ता३ इति नेति होवाच वेत्थ यथाऽसौ लोक एवं बहुभिः पुनः पुनः प्रयद्भिर्न सम्पूर्यता३ इति नेति होवाच वेत्थो यतिथ्यामाहुत्यां हुतायामापः पुरुषवाचो भूत्वा समुत्थाय वदन्ती३ इति नेति होवाच वेत्थो देवयानस्य वा पथः प्रतिपदं पितृयाणस्य वा यत्कृत्वा देवयानं वा पन्थानं प्रतिपद्यन्ते पितृयाणं वाऽपि हि नर्षेर्वचः श्रुतं द्वे सृती अशृणवं पितॄणामहं देवानामुत मर्त्यानां ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरं चेति नाहमत एकंचन वेदेति होवाच ॥ २ ॥**

---

१. **'नामतः'** - ग. । २. येन मार्गेण विशिष्टस्थानं ब्रह्मलोकं चन्द्रलोकं वा प्राप्नुवन्ति तं मार्गं त्वं वेत्थ किमिति । भा.बो. ।

राजा पृच्छति– **वेत्थेति** ।। यथेमाः प्रजाः प्रयन्त्यः प्रयान्त्यः प्रेताः सत्यः । विप्रतिपद्यन्ते विशिष्टं स्थानमाप्नुवन्ति । तं प्रकारं वेत्थ जानासि किमिति पप्रच्छ राजेत्यर्थः । विप्रतिपद्यन्ता३ इति प्लुतः प्रश्नद्योतकः । उत्तरमुक्तवान् कुमार इत्याह वेदपुरुषः– **नेतीति** ।। एवमग्रेऽपि योजना ध्येया । वेत्थो इत्यत्र वेत्थ उ इति विभागः । उ इति कुमारसम्बोधनम् । यथेमं भूलोकं पुनरापद्यन्ते प्राप्नुवन्ति । असौ लोकः परलोकः एवं तस्य विवरणं पुनःपुनः प्रयद्भिः गच्छद्भिः बहुभिर्न सम्पूर्यता३इति । तं वेत्थ किमिति पृष्टवानिति सर्वत्र योज्यम् । यतिथ्यां कतमायामाहुत्यां होमाधारस्थले हुतायां प्रक्षिप्ते सत्यापः अबादिभूतविशिष्टो जीवः । पुरुषवचो भूत्वा पुरुषादिशब्दवाच्यः सन् । समुत्थाय जनित्वा । वदन्ति व्यवहरति । तद्वेत्थ किमित्यर्थः । देवयानाख्यस्य पथः मार्गस्य । प्रतिपदं साधनं वा वेत्थ उ इत्यर्थः । पितृयाणाख्यस्य पथः प्रतिपदं वा वेत्थेत्यर्थः । प्रतिपदमित्युक्तं व्यनक्ति– **यत्कृत्वेति** ।। पितृयाणं वा पन्थानं प्रतिपद्यन्त इत्यन्वयः । पुनः राजा वक्ति– **अपि हीति** ।। मर्त्यानां मनुष्याणां द्वे सृती पितॄणामुत देवानां पितृयाणदेवयानशब्दितौ द्वौ मार्गौ । ताभ्यामिदं विश्वं विधिनिषेधभयादेजत्कम्पमानं सत्समेति । पितरं दिवम् । मातरं भुवं च । अन्तरा । तयोर्मध्ये यन्मार्गद्वयमस्तीत्याह– **अशृणवमिति** ।। यदृषेर्वचः तदपि किं त्वया न श्रुतमिति । एवं राज्ञा पृष्टः कुमारः किमुक्तवानित्यत आह श्रुतिः– **नाहमिति** ।। अतः अत्र त्वत्पृष्टेषु ।। ८-२-२ ।।

**अथैनं वसत्योपमन्त्रयाञ्चक्रे नादृत्य वसतिं कुमारः प्रदुद्राव स आजगाम पितरं तं होवाचेति वाव किल नो भवान् पुरानुशिष्टानवोचदिति कथं सुमेध इति पञ्च मा प्रश्नान् राजन्यबन्धुरप्राक्षीत्ततो नैकञ्चन वेदेति कतमे त इतीम इति ह प्रतीकान्युदाजहार ।। ३ ।।**

अथ स्वपृष्टार्थस्य तेनाज्ञातत्वादेव । वसत्या वसत्यर्थं तत्त्वज्ञानाय स्वसमीपे वसत्यर्थमेनं कुमारं उपमन्त्रयाञ्चक्रे आलोचितवान् । कमारः श्वेतकेतुः वसतिमनादृत्य प्रदुद्राव । द्रु गतौ गतवान् । स ततः प्रद्रुतः कुमारः स्वपितरमाजगाम । आगत्यं तं पितरमुवाच । तदाह । भगवान् पूज्यो भवान् । नोऽस्मानिति वाव किल एवमेव किल अनुशिष्टान् उपदिष्टानुवाच । कथं भवान्सुमेध इति चोवाचेत्यन्वयः । यद्वा कथमनुशिष्टानुवाच । इत्युवाचेत्येव पूर्वेणान्वयः । एवमुक्तः पिता आह– **कथमिति** ।। हे सुमेधः कथं किं जातमित्युवाच पितेत्यर्थः । कुमार आह । राजन्यबन्धुः क्षत्रियाभासः प्रवाहणो राजा मा मां पञ्चप्रश्नान् प्रष्टव्यार्थानप्राक्षीत् पृष्टवान् । ततः तत्र तन्मध्ये नैकश्चन अहं वेदेत्युवाच कुमारः । एवमुक्तः पिता वक्ति । ते प्रश्नाः कतमे कीदृशा इति । इह पितृसमीपे । इम इति वेत्थ यथेमाः प्रजाः इत्यादिप्रतीकानि वाक्यरूपाण्युदाजहार ।। ३ ।।

**स होवाच तथा नस्त्वं तात जानीथा यथा यदहं किञ्चन वेद सर्वमहं तत्तुभ्यमवोचं प्रैहि तु तत्र प्रतीत्य ब्रह्मचर्यं वत्स्याव इति भवानेव गच्छत्विति ।। ४ ।।**

पिता वक्ति– **स हेति** ।। स पितोवाच किमिति । हे तात कुमार । नः अस्मत्सकाशात्तथा जानीथाः यथा यदहं किञ्चन वेद जानामि । तत्तु सर्वं तुभ्यमवोचमिति स पितोवाचेति योजना । पुनः पिता वक्ति । प्रेहि आगच्छ । प्रतीत्य राजानं दृष्ट्वा तत्र राजसमीपे ब्रह्मचर्यं वत्स्याव इति पुत्रमुवाच पितेत्यर्थः । पुत्रो वक्ति । भवानेव गच्छत्विति । स पिता गौतम आजगाम । यत्र प्रवाहणस्य जैबिलेरास गृहमिति योज्यम् ।। ४ ।।

**स आजगाम गौतमो यत्र प्रवाहणस्य जैबलेरास तस्मा आसनमाहृत्योदकमाहरयाञ्चकाराथ हास्मा अर्घ्यं चकार**

**तꣳ होवाच वरं भगवते गौतमाय दद्म इति । स होवाच प्रतिज्ञातो म एष वरो यां तु कुमारस्यान्ते वाचमभाषथास्तां मे ब्रूहीति ॥ ५ ॥**

राजा किमकरोदित्यत आह– **स इति** ॥ स राजा तस्मै गौतमायाऽसनमाहृत्य उदकमाहरयाञ्चकार आहृतवान् । अथोदकाहरणानन्तरम् । अस्मै गौतमायार्घ्यं जलेन भाव्यां क्रियां चकार । तं गौतममुवाच राजा । ते भगवते गौतमाय वरं दद्म इति स गौतम उवाच । मे वरं दद्म इत्येष वरो मे त्वया प्रतिज्ञातः । यां तु वाचं कुमारस्यान्ते समीपे अभाषथाः तां मे ब्रूहीत्युवाच गौतम इत्यर्थः ॥ ८-२-५ ॥

**स होवाच दैवेषु वै गौतम तद्वरेषु मानुषाणां ब्रूहीति स होवाच विज्ञायते हास्ति हिरण्यस्यापात्तं गो अश्वानां दासीनां प्रवराणां परिधानस्य मा नो भवान् । बहो-रनन्तस्यापर्यन्तस्याभ्यवदान्योऽभूदिति स वै गौतम तीर्थे-नेच्छा सा इत्युपैम्यहं भवन्त-मिति वाचाहस्मैव पूर्व उपयन्ति सहोपायनकीर्त्या उवास ॥ ६ ॥**

स राजोवाच ह । तत् कुमारं प्रत्युक्तं वचनं । दैवेषु वरेषु विषये वै तत् गौतम । मानुषाणां मनुष्यसम्बन्धिनां ऐहिकानां वित्तादीनामिति यावत् वराणां मध्ये ब्रूहीति । स गौतम उवाच । हस्तिहिरण्यस्य द्वन्द्वैकवद्भावः । गो अश्वानां दासीनां प्रवाराणां प्रावरणानाम्। परिधानस्य वेष्टनवस्त्रस्य चोपात्तं प्राप्तिः नोऽस्माकं भवता विज्ञायते। बहोर्बहुगुणस्यानन्तस्य नाशरहितस्या-पर्यतस्येयत्तारहितस्य हरेः भवान् अभ्यवदान्योऽदाता नो अस्मभ्यं माभूदित्युवाच गौतमः । एवमुक्तो राजा ह हे गौतम स त्वं तीर्थेण न्यायेनेच्छसि विद्यामिति शेषः । किमिति प्रश्नद्योतकः इच्छसी३ इति प्लुतिः । एवं राज्ञोक्तो गौतमो

न्यायेनैवेच्छामि विद्यामित्याह– **उपैम्यहं भवन्तमिति** ॥ राजा वक्ति । शुश्रूषवः पूर्वे प्राचीनाः विनयवाचं वोपयन्ति स्म हा त उपसत्तिरुचितेति । सहोपायनकीर्त्योपायनकथनेनोवास ॥ ८-२-६ ॥

**स होवाच तथा नस्त्वं गौतममापराध्यस्तव च पितामहा यथेयं विद्येतः पूर्वं न कस्मिंश्चन ब्राह्मण उवास तां त्वहं तुभ्यं वक्ष्यामि को हि त्वेवं ब्रुवन्तमर्हति प्रत्याख्यातुमिति ॥ ७ ॥**

स राजोवाच । त्वत्पुत्रस्याज्ञानं मया प्रकटितमिति हेतोः नोऽस्मान्मापराध्यः अपराधिनो मा कुरु । तव पितामहाश्च न कुर्वन्तु । विद्यां स्तौति– **यथेति** ॥ इयं पञ्चाग्निविद्या इतः पूर्वं कस्मिंश्चन ब्राह्मणे नोवास न स्थिता । तां त्वहं तुभ्यं वक्ष्यामीति । को ह्येवं विनयेन ब्रुवन्तं प्रत्याख्यातुमर्हतीति राजोवाचेत्यर्थः ॥ ७ ॥

**असौ वै लोकोऽग्निर्गौतम तस्यादित्य एव समिद्रश्मयो धूमोऽहरर्चिर्दिशोऽङ्गारा अवान्तरदिशो विष्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुत्यै सोमो राजा सम्भवति ॥ ८ ॥**

यतिथ्यामाहुत्यां हुतायामापः पुरुषवचसो भूत्वेत्यस्योत्तरं पञ्चमखण्डे विवक्षुः प्रथमाहुत्यादिकं पूर्वमाह खण्डचतुष्टयेन– **असावित्यादिना** ॥ असौ वै लोकः द्युलोकः अग्निः जीवरूपहविः प्रक्षेपस्थलत्वादग्निरित्युक्तः । असौ वै लोकपदेन द्युलोकस्थः नारायणः अत्तीति व्युत्पत्त्याऽग्निरित्युच्यते । स एव च नारायणः पुनरादित्यादिपञ्चसु ।तत्तन्नामवाच्यः सन्नारायणादिरूपेण पञ्चधा तिष्ठतीत्याह– **तस्येति** ॥ तस्य द्युलोकस्थस्य नारायणस्यादित्य एवादत्त इति व्युत्पत्त्या आदित्यस्थो नारायण नारायणात्मा समेधनात्समिच्छब्दवाच्यः समित् समिद्रतः ।

रमणाच्छामनाच्च रश्मिनामा । रश्मिषु स्थितो नारायणवासुदेवात्मा धूमः । शत्रूणां धूत्कारहेतुना धूमनामा धूमगतः । अहीनत्वहेतुना अहः अहःशब्दवाच्यः सन्नहर्गतो नारायणसङ्कर्षणात्मा अर्चिः अर्च्यतमत्वहेतुना अर्चिनामा अर्चिस्थः । आदेशनहेतुना दिङ्नामा दिक्षुस्थो नारायणप्रद्युम्नात्मा अङ्गाराः स्वाङ्गरतत्वा-हेतुनाङ्गारनामाङ्गारस्थः । अत्र सर्वत्रान्यगतबहुत्वस्येशायत्तत्वात् 'तदधीनत्वादर्थवत्' इति न्यायेन स्वातन्त्र्याभिप्रायेण तत्तन्निष्ठभगवति बहुवचनं ज्ञेयम् । बहुरूप-त्वाद्वा । अवान्तरं दिशतीति हेतुनावान्तरदिङ्नामावान्तरदिक्स्थो नारायणा-निरुद्धात्मा विष्फुलिङ्गाः विष्वक्त्वहेतुना विस्फुलिङ्गनामा विष्फुलिङ्गगतः । तस्मिन् द्युलोकगे नारायणे एतस्मिन् प्रत्येकमादित्यादिपञ्चात्मना स्थितेऽग्नि-नामके देवास्तत्त्वाभिमानिनः श्रद्धां श्रद्धापूर्वकं यज्ञादिकृतं जीवं जुह्वति प्रक्षिपन्ति । तस्या आहुत्यै आहुतेः आहूयतेत्रेत्याहुतिः । तत्र कियत्कालं स्थित्यनन्तरं पुण्यक्षये सति जीवः तस्माद्धोमाधारस्थानात् द्युलोकात्सोमो राजा सम्भवति चन्द्रमण्डलस्थो भवति । देवाः चन्द्रे स्थापयन्तीत्यर्थः । सोमराजभवनं नाम तत्सायुज्यादिकं यथाधिकारं ध्येयम्। तदाह सूत्रे 'तत्स्वाभाव्या-पत्तिरुपपत्तेः' (ब्र.सू.३-१-२३) इति ॥ ८-२-८ ॥

**पर्जन्यो वा अग्निर्गौतम तस्य संवत्सर एव समिदभ्राणि धूमो विद्युदर्चिरशनिरङ्गारा ह्लादुनयो विष्फुलिङ्गास्तस्मि-न्नेतस्मिन्नग्नौ सोमं राजानं जुह्वति तस्या आहुत्यै वृष्टिः सम्भवति ॥ ९ ॥**

पर्जन्यः परं जनयतीति पर्जन्यनामा मेघचक्रगतो वासुदेवः । अग्निः अग्निनामा जीवप्रक्षेपस्थानम् । संवत्सरः सम्यग्वत्सान् रमयतीति संवत्सरनामा संवत्सरस्थः वासुदेवनारायणात्मा । समिदित्यादि प्राग्वत् । अन्यैरभरणीयत्वहेतुना अभ्र-नामाऽभ्रस्थो वासुदेवात्मा धूमः । विशेषेण द्योतत इति विद्युन्नामा विद्युद्गतः वासुदेवसङ्कर्षणात्मा अर्चिः । अशनाद्भक्षणादशनिनामा अशनिस्थो वासुदेव-

प्रद्युम्नात्मा अङ्गाराः । निह्लादनाद्गर्जनाद्धेतोः ह्लादनिनामा ह्लादनिस्थो वासुदेवा-निरुद्धात्मा । विष्फुलिङ्गाः । बहुवचनं प्राग्वत् । प्रायणादिरूपेण पञ्चधा स्थिते अग्नौ जीवप्रक्षेपस्थाने सोमं राजानं सोमराजान्तःस्थोपि तं पुण्यकृतं जीवं देवास्तत्त्वेशाः जुह्वति प्रक्षिपति । तस्या आहुत्यै । प्रग्वदेवार्थोऽस्य ध्येयः । वृष्टिः सम्भवति वृष्टिस्थो भवति । वृष्टौ स्थापयन्तीत्यर्थः ॥ ८-२-९ ॥

**अयं वै लोकोऽग्निर्गौतम तस्य पृथिव्येव समिदग्निर्धूमो रात्रिरर्चिश्चन्द्रमा अङ्गारा नक्षत्राणि विष्फुलिङ्गास्तस्मि-न्नेतस्मिन्नग्नौ देवा वृष्टिं जुह्वति तस्या आहुत्या अन्नं सम्भवति ॥ १० ॥**

अयं वै लोकः मर्त्यलोकः तल्लोकस्थः तन्नामा सङ्कर्षणः अग्निः । प्रथित-त्वात्पृथिवीनामा पृथिवीगतः सङ्कषर्णनारायणात्मा समित् । अदनादग्निनामा अग्निस्थः सङ्कर्षणवासुदेवात्मा धूमः । रतिकरत्वाद्रात्रिनामा रात्रिस्थः सङ्कर्षण-सङ्कर्षणात्मा अर्चिः । चन्द्रमाः आह्लादनाच्चन्द्रमानामा चन्द्रान्तर्यामी सङ्कर्षण-प्रद्युम्नात्मा अङ्गाराः । अस्य क्षत्रमन्यन्नास्तीति नक्षत्रनामा नक्षत्रस्थः सङ्कर्षणा-निरुद्धात्मा विष्फुलिङ्गाः बहुवचनं प्राग्वत् । तस्मिन्मर्त्यलोकस्थसङ्कर्षणे एतस्मिन्नारायणादि पञ्चधा स्थिते अग्नौ होमाधारेऽग्निामके देवाः वृष्टिं वृष्टौ स्थापितं जीवं जुह्वति । प्रक्षिपन्ति । तस्या आहुत्यै प्राग्वत् । अन्नं सम्भवति । ओषधिप्रवेशद्वारा अद्यमानपदार्थान्तर्गततया देवैः प्रक्षिप्यत इत्यर्थः ॥ ८-२-१० ॥

**पुरुषो वा अग्निर्गौतम तस्या व्यात्तमेव समित् प्राणो धूमो वागर्चिश्चक्षुरङ्गाराः श्रोत्रं विष्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या अहुत्यै रेतः सम्भवति योषा**

**वा अग्निर्गौतम तस्या उपस्थ एव समिल्लोमानि धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विष्फुलिङ्गा-स्तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुत्यै पुरुषः सम्भवति स जीवति यावज्जीवत्यथ यदा म्रियते ॥ ११ ॥**

पुरुषो वा अग्निः । पितृजीवरूपपुरुषगतः जगत्पूरयतीति पुरुषनामा प्रद्युम्नः अग्निः अदनादग्निनामा होमाधारभूतः । तस्य पुरुषनाम्नः प्रद्युम्नस्य पुरुषगतस्य । व्यात्तं आस्योत्पाटनं व्यात्तनामा व्यात्तस्थः प्रद्युम्ननारायणात्मा समित्प्रणयनात्प्राणनामा प्राणान्तःस्थः प्रद्युम्नवासुदेवात्मा धूमः । वक्तीति वाङ्नामा वाचिगतः प्रद्युम्नसङ्कर्षणात्मा अर्चिः । चष्ट इति चक्षुर्नामा चक्षुषि स्थितः प्रद्युम्नप्रद्युम्नात्मा अङ्गाराः । शृणोतीति श्रोत्रनामा श्रोत्रस्थः प्रद्युम्नानिरुद्धात्मा विष्फुलिङ्गाः । तस्मिन्नित्यादि प्राग्वत् । रेतः रेतसोऽन्तः स्थाप्यते देवैरिति यावत् ॥

**योषा वाग्निरिति** ॥ योषिति स्थितः तन्नामाऽनिरुद्धोऽग्निः तस्य योषिति स्थितस्यानिरुद्धस्याग्निनाम्नः उपस्थितत्वादुपस्थनाम्न उपस्थस्थानिरुद्धनारायणात्मा समित् । लोमानि लोपकत्वाल्लोमनामा लोमस्थोऽनिरुद्धवासुदेवात्मा धूमः । यापयति नयति चेति योनिनामा योनिस्थोऽनिरुद्धसङ्कर्षणात्मा अर्चिः । यदन्तः करोति योन्यन्तःकरणकर्ता अनिरुद्धप्रद्युम्नात्माऽङ्गाराः । अभिनन्दयतीत्यभिनन्दा उपमन्त्रणम् । तत्कर्ताऽनिरुद्धानिरुद्धः विष्फुलिङ्गाः । तस्मिन्नित्यादि प्राग्वत् । रेतो रेतोऽन्तर्गतः पुरुषः पुरुषादिपदवाच्यः सन्भूमौ जायत इत्यर्थः । स जातो जीवति यावज्जीवति यावत्कालं जीवनं क्लृप्तं तावज्जीवतीत्यर्थः । अथ जीवनकालसमाप्त्यनन्तरं यदा म्रियते प्राणांस्त्यजतीत्यर्थः ॥ ११ ॥

**अथैनमग्नये हरन्ति तस्याग्निरेवाग्निर्भवति समित्समिद्धूमो धूमोऽर्चिरङ्गारा अङ्गारा विष्फुलिङ्गा विष्फुलिङ्गास्तस्मि-**

**न्नेतस्मिन्नग्नौ देवाः पुरुषं जुह्वति तस्या आहुत्यै पुरुषो भास्वरवर्णः सम्भवति ॥ १२ ॥**

राजा स्वकृतप्रश्नपञ्चकमध्ये यतिथ्यामाहुत्यामिति चतुर्थप्रश्नं योषाख्यपञ्चमाग्निरूपं प्रथमद्वितीयादिचतुरग्न्युक्तिपूर्वमुत्तरितं कृत्वाऽधुना वेत्थ यथेमाः प्रजा इत्यादिना कृतावशिष्टप्रश्नचतुष्टयस्योत्तरं तदुपयुक्तषष्ठाग्न्युक्तिपूर्वमाह– **अथेति** ॥ मृत्यनन्तरं एनं जीवम् अग्नये हरन्ति । तस्य प्रसिद्धस्य षष्ठाग्नेः समित् काष्ठादिराशिः । भास्वरवर्णो ज्योतिर्मयदेहः ॥ ८-२-१२ ॥

[ज्ञानिगम्योऽर्चिरादिमार्गः]

**ते य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते तेऽ[1]र्चिरभिसम्भवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद् या षण्मासानुदङ्ङादित्य एति मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं तान् वैद्युतान् पुरुषो मानव एत्य ब्रह्मलोकान् गमयति ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषां न पुनरावृत्तिः ॥ १३ ॥**

य एवमुक्तप्रकारेणैतदग्निस्वरूपं विदुः । ये चामी अरण्ये श्रद्धां सत्यं सत्यवचनमुपलक्षणं निवृत्तकर्मानुष्ठानपूर्वं ब्रह्मोपासते ते उभयेऽप्यर्चिरभिसम्भवन्ति अर्चिर्लोकं प्राप्नुवन्ति। तदाह सूत्रे 'अर्चिरादिना तत्प्रथितेः (ब्र.सू. ४-३-१)' इति अर्चिष इति पञ्चमी। अर्चिर्लोके कियत्कालं स्थित्वा ततोऽहरभिसम्भवन्तीति क्रियापदं सर्वत्र योज्यम् । अहरभिमानिदेवं प्राप्नुवन्तीत्यर्थः । एवमग्रेऽपि ज्ञेयम् । आपूर्यमाणपक्षं पूर्वपक्षाभिमानिनम्। उदङ्ङुत्तरतः यान्मासानादित्यः एति उत्तरायणाभिमानिनमिति यावत्। वैद्युतं विद्युन्मानिलोकम् । तान् वैद्युतान् तल्लोकगतान् । मानवः पुरुषः वायुरेत्य ।

---

१. 'अर्चिषम्' - क. ।

ब्रह्मलोकान् गमयति । ते ब्रह्मलोकगास्तेषु ब्रह्मलोकेषु । परावतः ब्रह्मायुर्लक्षणपरावतो वर्षान् वसन्ति । तेषां न पुनरावृत्तिरिति ॥ ८-२-१३ ॥

[अज्ञानां पुनरावृत्तिसहितः धूममार्गः]

**अथ ये यज्ञेन दानेन तपसा लोकान् जयन्ति ते धूममभिसम्भवन्ति धूमाद्रात्रिं रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद् यान् षण्मासान् दक्षिणादित्य एति मासेभ्यः पितृलोकं पितृलोकाच्चन्द्रं ते चन्द्रं प्राप्यान्नं भवन्ति तांस्तत्र देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वेत्येवमेनांस्तत्र भक्षयन्ति तेषां यदा तत्पर्यवैत्यथेममेवाकाशमभिनिष्पद्यन्त आकाशाद्वायुं वायोर्वृष्टिं वृष्टेः पृथिवीं ते पृथिवीं प्राप्यान्नं भवन्ति पुनः पुरुषाग्नौ हूयन्ते ततो योषाग्नौ ततो जायन्ते ते लोकान् प्रत्युत्थायिनस्त एवमेवानुपरिवर्तन्तेऽथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकम् ॥ १४ ॥**

इति द्वितीयं ब्राह्मणम् ॥ ८-२ ॥

एवमाद्यप्रश्नोत्तरमुक्त्वा वेत्थो यथेममिति द्वितीयप्रश्नस्योत्तरमाह– **अथेति** ॥ अर्थान्तरेऽथशब्दः । ये यज्ञेन ज्योतिष्टोमादिना । दानेन सत्पात्रे द्रव्यत्यागेन । तपसा कृच्छ्रचान्द्रायणादिना । प्रवृत्तकर्मणेति यावत् । लोकान् जयन्ति प्राप्नुवन्ति । ते मृत्यनन्तरं धूमं धूमाभिमानिलोकं अभिसम्भवन्ति प्राप्नुवन्ति । एवमग्रेऽपि ज्ञेयम् । दक्षिणेत्यव्ययम् । दक्षिणतो यान् षण्मासानादित्य एति । दक्षिणायनलोकमभिसम्भवन्तीत्यर्थः । अन्नं भवन्ति तर्पका भवन्ति देवानां सेवता भवन्तीत्यर्थः । अन्नं भवन्तीत्येतद्व्यनक्ति– **तांस्तत्रेति** ॥ तांस्तत्र देवा भक्षयन्ति । कथं सोमं राजानं सोमलतां आप्यायस्व आप्यायन्ति ।

अपक्षीयस्वापक्षाययन्ति । एवमेनांस्तत्र भक्षयन्तीति योजना । तेषां चन्द्र-स्थानाम् । तददृष्टम् । यदा पर्यवैति समाप्तं भवति। अथान्तरम् । इममेवाकाशमभिनिष्पद्यन्ते प्राप्नुवन्ति । आगतिप्रकारमाह– **आकाशाद्वायु-मित्यादिना** ॥ अन्नं अद्यमानपदार्थान्तर्गता भवन्ति । तदनन्तरं भोजनद्वारा पुरुषाग्नौ हूयन्ते । ततोऽग्नौ हूयन्ते । ततो रेतोद्वारा मातरं प्रविश्य जायन्ते । ते लोकान्प्रत्युत्थायिनः उद्गच्छन्तः एवमेवानुपरिवर्तते पुनःपुनः सञ्चरन्ति । एतेनाद्यद्वितीयप्रश्नद्वयपरिहारेण वेत्थो देवयानस्येत्यादिन कृतप्रश्नद्वयस्यापि परिहार उक्तो ध्येयः । तत्र ये श्रद्धां सत्यमित्यादिना यज्ञेन दानेनेत्यादिना च प्रतिपदं वेत्थेति कृतसाधनप्रश्नस्य परिहारः । ब्रह्मलोकेषु । पितृलोकाच्चन्द्रमित्यनेन विप्रतिपद्यन्त इति कृतविशिष्टस्थानप्राप्तिप्रश्नस्य परिहारः । वेत्थो यथेमं लोकं केन निमित्तेन पुनरापद्यन्त इति प्रश्नस्य न सम्पूर्यत३यिति प्रश्नस्य च तेषां च तात्पर्यं वेत्थेममेवाकाशमित्यादिना परिहारो ध्येयः । देवयान-पितृयाणरूपमार्गद्वयसाधनज्ञानां स्वरूपमाह– **अथ य इति** ॥ पन्थानौ तत्साधने चेति योज्यम् । तं कीटादयो भवन्तीत्यर्थः ॥ ८-२-१४ ॥

**इति द्वितीयं ब्राह्मणम् ॥ ८-२ ॥**

## अथ तृतीयं ब्राह्मणम्

[ऐहिकामुष्मिककफलार्थमुपासनम्]

**स यः कामयेत महत्प्राप्नुयामित्युदगयन आपूर्यमाणपक्षस्य पुण्याहे द्वादशाहं उपसद् व्रती भूत्वोदुम्बरे कꣳसे चमसे वा सर्वौषधं फलानीति सम्भृत्य [1]परिसमूह्य परिलिप्याग्नि-मुपसमाधाय परिस्तीर्यावृताज्यꣳ सꣳस्कृत्य पुꣳसा नक्षत्रेण मन्थꣳसन्नीय जुहोति यावन्तो देवास्त्वयि**

---

१. 'परिसमूह्य-भूशुद्धिं कृत्वा' - भा.बो. ।

**जातवेदस्तिर्यञ्चो घ्नन्ति पुरुषस्य कामांस्तेभ्योऽहं भागधेयं जुहोमि ते मा तृप्ताः सर्वैः कामैस्तर्पयन्तु स्वाहा या तिरश्ची निपद्यतेऽहं विधरणी इति ता त्वा घृतस्य धारया यजे॑संराधनीं मह॑ स्वाहा ॥ २ ॥**

उक्ताः विद्याः ग्रासाभावेन अनुष्ठातुमशक्या इति तदर्थं कांचन विद्यामाह– **स य इत्यादिना** ॥ योऽधिकारी । महत् महत्त्वं ऐहिकामुष्मिकं रूपं प्राप्नुयामिति कामयेत । स उदगयने उत्तरायणे आपूर्यमाणपक्षस्य शुक्लपक्षस्य पुण्याहे पुण्यतिथौ द्वादशाहं होमदिवसात् द्वादशदिवसपर्यन्तं उपसद् व्रती । उपसल्लक्षणव्रतवान् भूत्वा । औदुम्बरे उदुम्बरविकारे । कंसे चमसे वा चमसाख्यपात्रविशेषे वा । सर्वौषधं सर्वौषधिसमुदायम् । फलानीतीतिशब्द आद्यर्थः । फलादीनि । सम्भृत्य आनीय । परिसमूह्य मेलयित्वा । परिलिप्य । कुण्डमिति शेषः । तत्राग्निमुपसमाधाय । दर्भान् परिस्तीर्यावृताज्यं होम्याज्यम् । संस्कृत्य । पुंसा पुल्लिङ्गवाच्येन पुनर्वस्वादिनक्षत्रेण । सर्वौषधीनां मन्थम् । आलोडितं पिष्टं सन्नीय समीपमानीयाज्यं जुहोतीत्यन्वयः । होममन्त्रावाह– **यावन्त इति** ॥ हे जातवेदस्त्वयि यावन्तो देवास्तिर्यञ्चो मध्ये स्थिताः सन्तः पुरुषस्य कामान् घ्नन्ति तेभ्यो भागधेयं हविर्भागम् । जुहोमि ददामि । ते तृप्तास्सन्तः मा मां सर्वैः कामैस्तर्पयन्तु स्वाहा । अहं या तिरश्ची विधरणी विघ्नकर्त्रीति निपद्यते । तां त्वा संराधिनीनामिकां । घृतस्य धारया अहं यजे स्वाहेति ॥ ८-३-१ ॥

**ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहेत्यग्नौ हुत्वा मन्थे स॑स्रवमवनयति प्राणाय स्वाहा वसिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे स॑स्रवमवनयति वाचे स्वाहा प्रतिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे स॑स्रवमवनयति चक्षुषे स्वाहा**

**सम्पदे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति श्रोत्राय स्वाहा आयतनाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति मनसे स्वाहा प्रजापतये स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति रेतसे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥ २ ॥**

प्राणादिविषयहोमानाह– **ज्येष्ठायेति** ॥ संस्रवं धारामवनयति । हुतशेषं मन्थे पिण्डे निक्षिपेदित्यर्थः । ज्येष्ठायेत्यादेः कोऽर्थ इत्यतः प्राण एव ज्येष्ठश्रेष्ठशब्दार्थ इत्याह– **प्राणाय स्वाहेति** ॥ एवमग्रेऽप्यर्थो ध्येयः ॥ ८-३-२ ॥

**[१]अग्नये स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति सोमाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भूः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भुवः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति स्वः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भूर्भुवःस्वः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ब्रह्मणे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति क्षत्राय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भूताय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भविष्यते स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति विश्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति सर्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति प्रजापतये स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥ ८-३-३ ॥**

---

१. 'नक्षत्राय'-ख. ।

प्राणादिविषयहोममुक्त्वा प्रकारान्तरेण होममाह ॥ **अग्नये स्वाहेतीति** ॥ भूताय उत्पन्नाय । भविष्यते उत्पत्स्यमानाय ॥ ८-३-३ ॥

**अथैनमभिमृशति भ्रमदसि ज्वलदसि पूर्णमसि प्रस्तब्धमस्येकशफमसि हिंकृतमसि हिंक्रियमाणमस्युद्गीथमसि उद्गीयमानमसि श्रावितमसि प्रत्याश्रावितमस्यार्द्रे सन्दीप्तमसि विभुरसि प्रभुरस्यन्नमसि ज्योतिरसि निधनमसि संसर्गोऽसीति ॥ ४ ॥**

मन्थं स्पृष्ट्वा जप्यं मन्त्रमाह– **अथैनमिति** ॥ एनं मन्थमभिमृशति स्पृशति । किमिति । भ्रमदसीत्यादिना मन्त्रेणान्तःस्थो हरिः स्तूयत इति ज्ञेयम् । विभुरसि व्याप्तोऽसीत्यर्थः । संवर्गो वायुरसि ॥ ८-३-४ ॥

**अथैनमुद्यच्छत्यामꣳ स्यामꣳ हि ते महि स हि राजेशानोऽधिपतिः स माꣳ राजेशानोऽधिपतिं करोत्विति ॥ ५ ॥**

मन्थमुद्धृत्य जप्यमन्त्रमाह– **अथेति** ॥ एनं मन्थमुद्यच्छत्यूर्ध्वं धत्ते । 'आमं श्यामं हि ते मही'त्यादि मन्त्रेणापि मन्थस्थो हरिरेवोच्यते ॥ ५ ॥

**अथैनमाचामति तत्सवितुर्वरेण्यं मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः माध्वीर्नः सन्त्वोषधीर्भूः स्वाहा भर्गो देवस्य धीमहि मधु नक्तमुतोषसो मधुमत्पार्थिवꣳ रजः मधु द्यौरस्तु नः पिता भुवः स्वाहा धियो योनः प्रचोदयात् मधुमान्नो वनस्पतिर्मधु माꣳ अस्तु सूर्यः माध्वीर्गावो भवन्तु नः स्वः स्वाहेति सर्वां च सावित्रीमन्वाह सर्वाश्च मधुमतीरहमेवेदं सर्वं भूयासं भूर्भुवःस्वः स्वाहेत्यन्तत**

**आचम्य पाणी प्रक्षाल्य जघनेनाग्निं प्राक्शिराः संविशति प्रातरादित्यमुपतिष्ठते दिशामेकपुण्डरीकमसि अहं मनुष्याणामेकपुण्डरीकं भूयासमिति यथेतमेत्य जघनेनाग्निमासीनो वंशं जपति ॥ ६ ॥**

मन्थभक्षणं मन्त्रपूर्वकमाह– **अथेति** ॥ अथ जपानन्तरम् । एनं मन्थमाचामति । अत्ति । सवितुः जगत्प्रसवितुः । तत् वरेण्यं वरणीयमिति । सावित्र्या एकपादः । मधु भद्रमुद्दिश्य। वाताः वायवः । ऋतायते ऋतायन्तु पवन्तु । मधु उद्दिश्य सिन्धवः नद्यः क्षरन्ति प्रवहन्तु । ओषधीः ओषधयः । नोऽस्माकं माध्वीः भद्राः सन्त्विति मन्त्रमुक्त्वा भूः स्वाहेत्याचामतीत्यर्थः । एवमग्रेऽपि सावित्र्या एकैकं पादं मधुमत्याः पादत्रयं चोच्चार्य भुवः स्वाहा स्वः स्वाहेत्याचामतीत्याह– **भर्ग इति** ॥ देवस्य भर्गः भरणगमनशीलम् । वरेण्यं रूपम् । धीमहि ध्यायेम । नक्तं रात्रिः मध्वस्तु । उत किञ्च उषसः सकाशान्मधु भद्रमस्तु । पार्थिवं रजः मधुमत् मद्विषये भद्रोपेतमस्तु । नोऽस्माकं पिता द्यौः मध्वस्त्विति मन्त्रमुक्त्वा भुवः स्वाहेत्याचामतीत्यर्थः । यः नः धियः प्रचोदयात् प्रेरयेत्तस्य देवस्येत्यर्थः । नोऽस्माकं वनस्पतिः मधुमानस्तु । सूर्यो मधुमानस्तु । नोऽस्माकं गावो माध्वीर्भवन्तु इत्युक्त्वा स्वः स्वाहेत्याचामतीत्यर्थः । सावित्रीपादेन मधुमत्या भूरादिव्याहृत्या च त्रिवारभक्षणं उक्त्वा सर्वां च सावित्रीशब्दितगायत्रीं सर्वाश्च मधुमतीः सर्वाश्च व्याहृतीर्जप्त्वा भक्षयेदित्याह– **सर्वां चेति** ॥ सावित्रीशब्दितां गायत्रीमित्यर्थः । अन्वाहेत्यस्य सर्वाश्च मधुमतीरित्यत्राप्यन्वयः । अहमेवेदं सर्वं भूयासं स्वयोग्यसर्वपूर्तिमान् भवेयमित्युक्त्वा सर्वां गायत्रीं सर्वा मधुमतीश्चानूच्य भूर्भुवःस्वः स्वाहेत्यन्तत आचम्य मन्थं भक्षयित्वा पाणी प्रक्षाल्य अग्नि-जघनेनाग्न्यपेक्षया नीचस्थले । प्राक् शिराः संविशति । प्रातरादित्यमुपतिष्ठते । दिशां दिगवस्थितप्राणानां मध्ये एकपुण्डरीकमसि मुख्यश्रेष्ठोऽसि । मनुष्याणां मध्ये अहमेकपुण्डरीकं श्रेष्ठो भूयासमिति मन्त्रेणोपतिष्ठत इत्यर्थः । यदि यदा एतमग्निं जघनेनासीनः

अग्नितो नीचस्थाने स्थितो वर्तते। तदा वंशं एतद् विद्योपदेशकाचार्यपरम्परालक्षणं जपति जपेत् ॥ ८-३-६ ॥

[आचार्यपरम्परा]

**तं हैतमुद्दालक आरुणिर्वाजसनेयाय याज्ञवल्क्यायान्तेवासिन उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ७ ॥**

जप्यं वंशमाह– **तं हैतमिति** ॥ तमेतं निर्माणक्रमसहितं मन्थमुक्त्वा तस्य य एनं शुष्क इत्यादिमहिमानं चोवाचेत्यर्थः। अरुण्या अपत्यमारुणिः उद्दालको नामतः शुष्केऽपि स्थाणौ एनं मन्थं निषिञ्चेत्। तदा जायेरंच्छाखाः प्ररोहेयुः पलाशानि पर्णानि । इतिशब्दस्योवाचेत्यन्वयः ॥ ८-३-७ ॥

**एतमु हैव वाजसनेयो याज्ञवल्क्यो मधुकाय पैङ्ग्यायान्तेवासिन उक्त्वोवाचापि य एनं शुष्के स्थाणौ निज्ञायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ८ ॥**

एतमु हैवेत्यादिखण्डपञ्चकेऽप्येवमेवार्थो ध्येयः । मधुकाय मधुकनाम्ने पैङ्ग्याय पिङ्गस्य पुत्राय ॥ ८-३-८ ॥

**एतमु हैव मधुकः पैङ्ग्यश्चूलाय भागवित्तयेऽन्तेवासिन उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ९ ॥**

चूलाय भागवित्तये चूलनाम्ने भगवित्तिपुत्राय अन्तेवासिने शिष्याय एवं मन्थ-प्रकारमुक्त्वेति सर्वत्र ध्येयम् ॥ ९ ॥

**एतमु हैव चूलो भागवित्तिः जानकय आयस्थूणायान्तेवासिन उक्त्वोवाचापि 'य एनं शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः**

**प्रोहेयुः पलाशानि' इति तमेतं नापुत्राय वाऽनन्तेवासिने वा ब्रूयात् ॥ १२ ॥**

जानकये जनकस्यापत्याय आयःस्थूणाय आयः स्थूणनाम्ने । चूलो नामतः भगवित्तस्यापत्यं उवाचेत्यर्थः ॥ १० ॥ सत्यकामाय सत्यकामनाम्ने जाबालाय जबालापुत्राय ॥ ११ ॥ तमेतं मन्थनिर्माणप्रकारं अपुत्राय पुत्रभिन्नायानन्तेवासिने वा न ब्रूयात् ॥ १२ ॥

**चतुरौदुम्बरो भवत्यौदुम्बरः स्रुव औदुम्बरश्चमस औदुम्बर इध्म औदुम्बर्यौ उपमन्थन्यौ दश ग्राम्याणि धान्यानि भवन्ति व्रीहियवास्तिलमाषा अणुप्रियङ्गवो गोधूमाश्च मसूराश्च खल्वाश्च खलकुलाश्च तान् पिष्टान् दधनि मधुनि घृत उपसिञ्चत्याज्यस्य जुहोति ॥ १३ ॥**

इति तृतीयं ब्राह्मणम् ॥ ८-३ ॥

औदुम्बरे कंसे चमसे वेत्यादि पूर्वोक्तवाक्यापेक्षितमनुक्तं भागमाह– **चतुरौदुम्बर इति** ॥ उपमन्थिन्यौ अरणी । अणुप्रियङ्गव इत्यत्र अणवः श्यामाकाः मसुराश्चेत्यादि त्रयः शब्दाः धान्यविशेषार्थकाः । तान् व्रीह्यादीन् पिष्टान् चूर्णितान् दधिमधुघृतद्रव्येषूपसिञ्चति मथितं कृत्वाज्यस्य जुहोत्याज्यस्य भागं जुहोतीत्यर्थः ॥ ८-३-१३ ॥

इति तृतीयं ब्राह्मणम् ॥ ८-३ ॥

## अथ चतुर्थं ब्राह्मणम्

[वामदेवयज्ञः]

**एषां वै भूतानां पृथिवी रसः पृथिव्या आपोऽपामोषधय ओषधीनां पुष्पाणि पुष्पाणां फलानि फलानां पुरुषः पुरुषस्य रेतः ॥ १ ॥**

अनेनोपनिषदुक्तविधानेन जातः पुत्रः स्वर्गापवर्गयोग्यो भवतीति भावेन तृतीयखण्डादौ तस्या वेदिरित्यादिना गृहिणां वामदेवाख्यं यज्ञं वक्तुं तदुपयुक्तमाह– **एषामित्यादिना**॥

**सह प्रजापतिरीक्षाञ्चक्रे हन्ताऽस्मै प्रतिष्ठां कल्पयानीति स स्त्रियꣳ ससृजे तां सृष्ट्वाऽध उपास्त तस्मा स्त्रियमध उपासीत स एतं प्राञ्चं ग्रावाणमात्मन एव समुदपारयत्तेनैनामभ्यसृजत् ॥ २ ॥**

यदर्थं रेतसः श्रैष्ठ्यमुक्तं तदाह– **स हेति** ॥ स प्रजापतिर्ब्रह्मा इक्षाञ्चक्रे आलोचितवान्। कथमस्मै अस्य रेतसः प्रतिष्ठामाधारं कल्पयानि हन्त हर्षे इतीक्षां कृतवानित्यर्थः । स एवमीक्षावान् स्त्रियं ससृजे । सृष्ट्वा अधः कृत्वोपास्त तस्माद्यतनोऽपि स्त्रियमधः कृत्वोपासीत । स एवमुपासीनः प्रजापतिः एतं प्राञ्चं प्राक्कालीनं ग्रावाणं ग्रावनिनिभं रेत आत्मान एव स्वदेहादेव । समुदपारयत् निष्कासयेत् । तेन निष्कासितेन रेतसा एनां स्त्रियं अभ्यसृजत् संयोजितवान् ॥ २ ॥

**तस्या वेदिरुपस्थो लोमानि बर्हिश्चर्माधिषवणे समिद्धो मध्यतस्तौ मुष्कौ स यावान् ह वै वाजपेयेन यजमानस्य लोको भवति तावानस्य लोको भवति य एवं विद्वानधोपहासं चरत्यासां स्त्रीणां सुकृतं वृङ्क्तेऽथ यदिदमविद्वानधोपहासं चरत्यस्य स्त्रियः सुकृतं वृञ्जते ॥ ३ ॥**

तस्याः स्त्रियाः उपस्थः वेदिः लोमानि बर्हिः चर्मचर्मणी अधिषवणफलके मध्यतो मध्य- देशे विद्यमानौ मुष्कौ वृषणौ । समिधौ तस्य फलमाह– **स यावदिति** ॥ य एवं विद्वान् प्रजापतिनैवमनुष्ठितमिति विद्वान् तदा भगवन्मनस्कः स्वस्त्रियमधः कृत्वोपहासं सङ्गं करोति सः वाजपेयेन यागेन

यजमानस्य भगवन्तमाराधयतः सुप्रसिद्धो यावांल्लोको भवति तावान् अस्य ज्ञानिनो भगवन्निष्ठस्य लोको भवति । किञ्च य एवं विद्वान् आसां भुज्यमानस्त्रीणां सुकृतं वृङ्क्ते आदत्ते च । अथ चेत्यर्थान्तरे । य इदमविद्वान-धोपहासं चरति । अस्य पुंसः सुकृतं स्त्रियः वृञ्जते स्वीकुर्वन्ति ॥ ३ ॥

**एतद्ध स्म वै तद्विद्वान् उद्दालक आरुणिराहैतद्ध स्म वै तद् विद्वान् नाको मौद्गल्य आहैतद्ध स्म वै तद् विद्वान् कुमार हारीत आह बहवो मर्या ब्राह्मणायना निरिन्द्रिया विसुकृतोऽस्माल्लोकात्प्रयन्ति य इदमविद्वां-ँसोऽधोपहासं चरन्तीति बहु वा इदं सुप्तस्य वा जाग्रतो वा रेतः स्कन्दति ॥ ४ ॥**

एवमुक्तप्रकारेणोपहासप्रकारज्ञानपूर्वमुपहासचरणं श्रेयःसाधनमित्येतद्वृद्धसम्मत्या द्रढयति– **एतद्ध स्मेति** ॥ तदेतत् । उक्तरूपोपहासप्रकारं विद्वानाहेति वाक्यत्रयेष्वप्यर्थो ध्येयः । मुनित्रयेणापि किमुक्तमित्यत आह– **बहव इति** ॥ बहवो मर्या मर्त्याः ब्राह्मणायनाः ब्राह्मणा इवाचरन्तः ब्राह्मणाभासा इति यावत् । निरिन्द्रियाः विसुकृतो विगतसुकृताः अस्माल्लोकात्प्रयन्ति ते के इत्यत आह– **य इदमविद्वांस इत्यादि** ॥ इत्याहेति पूर्वेणान्वयः । उपहासं विना रेतःस्कन्दने प्रायश्चित्तं वक्तुमाह– **बहु वा इति** ॥ सुप्तस्य वा जाग्रतो वा इदं बहुरेतः स्कन्दतीति ॥ ४ ॥

**तदभिमृशेदनु वा मन्त्रयेत यन्मेऽद्य रेतः पृथिवीमस्कन्दद्य-दोषधीरप्यसरद्यदप इदमहं तद्रेत आददे पुनर्मामैत्विन्द्रियं पुनस्तेजः पुनर्भगः पुनरग्निर्धिष्ण्यो यथास्थानं कल्पन्तामित्य-नामिकाङ्गुष्ठाभ्यामादायान्तरेण स्तनौ वा भ्रुवौ वा निमृज्यात् ॥ ५ ॥**

तदा कर्तव्यं प्रायश्चित्तमाह– **तदिति** ॥ तद्रेतोऽभिमृशेत् स्पशेत् । स्पृष्ट्वाभिमन्त्रयेतेत्यर्थः । मन्त्रमाह– **यन्मेऽद्येति** ॥ मे यद्रेतोऽद्य पृथिवीमस्कान्त्सीत् । यदोषधीरप्यसरत् प्राप्नोत् । यदपः प्राप्नोत्तदिदं रेत आददे । तत्र मन्त्रमाह – **पुनरिति** ॥ मा मां इन्द्रियं पुनरेतु तेजः पुनर्मामेतु भगः पुनर्मामेतु । धिष्ण्यो नामाग्निः मामेतु आगतानीन्द्रियादीनि यथास्थानं कल्पन्तामित्यनामिकाङ्गुष्ठाभ्यामादायान्तरेण स्तनौ स्तनयोर्मध्ये भ्रुवौ भ्रुवोर्मध्ये वा निमृज्यात् लिम्पेत् ॥ ८-४-५ ॥

**अथ यद्युदक आत्मानं परिपश्येत्तदभिमन्त्रयेत मयि तेज इन्द्रियं यशो द्रविणं सुकृतमिति ॥ ६ ॥ श्रीर्ह वा एषा स्त्रीणां यन्मलोद्वासास्तस्मान्मलोद्वाससं यशस्विनीमभिक्रम्योपमन्त्रयेत ॥ ७ ॥**

प्रायश्चित्तप्रसङ्गादन्यस्यापि तदाह– **अथ यद्यीति** ॥ उदक आत्मानं स्वदेहं परिपश्येत्प्रतिबिम्बं पश्येदित्यर्थः । तत्प्रतिबिम्बतया परिणतं उदकं अभिमृशेत् स्पृशेत् । अभिमन्त्रयेत् । तत्र मन्त्रमाह– **मयीति** ॥ अस्त्विति शेषः । स्पष्टोऽर्थः । स्त्रीभिरुपहासस्येत्थंभावमाह– **श्रीरिति** ॥ स्त्रीणां मध्ये यत् या मलोद्वासाः ऋतुमती एषा श्रीः शोभना । ह वै प्रसिद्धिः । तस्मात् स्त्रीत्वाद्यशस्विनीं मलवद्वाससं स्नानादिशुद्धामिति योज्यम् । अभिक्रम्य गत्वा । उपमन्त्रयेत् । सङ्गमार्थं वदेदित्यर्थः ॥ ८-४-६,७ ॥

**सा चेदस्मै न दद्यात्काममेनामवक्रीणीयात्सा चेदस्मै नैव दद्यात्काममेनां यष्ट्या वा पाणिना वोपहत्यातिक्रामेदिन्द्रियेण ते यशसा यश आदद इत्ययशा एव भवति ॥ ८ ॥**

सा एवमुपामन्त्रिता स्त्री । अस्मै पुंसे । कामं उपहासं न दद्याच्चेत् । एनां स्त्रियमवक्रीणीयात् । शिक्षान्तरं चाह– **सा चेदिति** ॥ अतिक्रामेत् ।

अतिक्रम्य त्यक्त्वा गच्छेत् । गमने वक्तव्यमाह– **इन्द्रियेणेति** ।। मदीयेनेन्द्रियेण यशसा ते यश आददे गृह्णामीति वाच्यमित्यर्थः । ततः अयशा एव सा भवतीत्यर्थः ।। ८ ।।

**सा चेदस्मै दद्यादिन्द्रियेण ते यशसा यश आदधामीति यशस्विनावेव भवतः । स यामिच्छेत्कामयेत मेति तस्यामर्थं निष्ठाय मुखेन मुखं सन्धायोपस्थमस्या अभिमृश्य जपेदङ्गादङ्गात्सम्भवसि हृदयादधिजायसे सत्वमङ्गकषायोऽसि दिग्धविद्धामिव मादयेमाममूं मयीति ।। ९ ।।**

**सा चेदिति** ।। इन्द्रियेण मदीयेन यशसा च ते यश आदधामीति वाच्यं पुंसेत्यर्थः । ततः किं भवतीत्यत आह– **यशस्विनावेति** ।। दम्पती इति योज्यम् । उपहासे इत्थं भावान्तरमाह– **स यामिति** ।। एषा । मा मां कामयीतेति यां स पुमानिच्छेत्तस्यामर्थं शिश्नं निष्ठाय निधाय मुखेन मखं सन्धाय अस्या उपस्थमभिमृश्य स्पृष्ट्वा जपेत् । तत्र मन्त्रमाह अङ्गादङ्गादिति । प्रत्यङ्गात्सम्भवसि हृदयादधिजायसे । हे अङ्ग रेतोऽन्तर्गतभगवन्नङ्गानां सारोऽसीति स त्वं कषायोऽसि याममु मयि दिग्धविद्धामिव दिग्धा औषधलिप्तेव विद्धां परवशामिव आदधे सम्पादयेति जपेदित्यर्थः ।। ९ ।।

**अथ यामिच्छेन्न गर्भं दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखं सन्धायाभिप्राण्यापान्यादिन्द्रियेण ते रेतसा रेत आदद इत्यरेता एव भवति ।। १० ।।**

उपहासे इत्थंभावान्तरमाह– **अथ यामिच्छेदिति** ।। अभिप्राण्य श्वासं मुक्त्वा अपान्यात्सङ्गृह्णीयात् । तत्र जाप्यमन्त्रमाह– **इन्द्रियेणेति** ।। मदीयेनेन्द्रियेण मदीयेन चेतसा ते रेत आददे इति जपन्नभिप्राण्यापान्यादित्यर्थः । सा तथैव गर्भहीनैव भवतीत्याह– **अरेता एव भवतीति** ।। ८-४-१० ।।

**अथ यामिच्छेद् गर्भं दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखं सन्धायापान्याभिप्राण्यादिन्द्रियेण ते रेतसा रेत आदधामीति गर्भिण्येव भवति ॥ ११ ॥**

**अथ यामिति** ॥ या गर्भं दधीतेतीच्छेदित्यर्थः । अपान्यश्वा समादाय अभिप्राण्याच्छ्वासं मुञ्चेत् । इन्द्रियेणेत्यादि प्राग्वत् । आदधामि प्रक्षिपामि ॥ ८-४-११ ॥

**अथ यस्य जायायै जारः स्यात्तं चेद् द्विष्यादामपात्रेऽग्निमुपसमाधाय प्रतिलोमं शरबर्हिस्तीर्त्वा तस्मिन्नेताः शरभृष्टीः प्रतिलोमाः सर्पिषाक्ता जुहुयान्मम समिद्धेऽहौषीः प्राणापानौ त आददेऽसाविति मम समिद्धेऽहौषीः पुत्रं पशूंस्त आददेऽसाविति मम समिद्धेऽहौषीरिष्टासुकृते त आददेऽसाविति मम समिद्धेऽहौषीराशा पराकाशौ त आददेऽसाविति स वा एष निरिन्द्रियो विसुकृतोऽस्माल्लोकात्प्रैति यमेवं विद्वान् ब्राह्मणः शपति तस्मादेवंविच्छ्रोत्रियस्य दारेण नोपहासमिच्छेदुत ह्येवंवित्परो भवति ॥ १२ ॥**

उपहासप्रयुक्ताभिचारमाह– **अथ यस्येति** ॥ जायायै जायायाः जारः स्यात् । तं च द्विष्यात् आमपात्रे अपक्वपात्रे । अग्निमुपसमाधाय । प्रतिलोमं शरबर्हिस्तीर्त्वा प्रस्तीर्य । तस्मिन्नग्नौ एताः शरमुष्टीः शरस्तम्बानि । सर्पिषाक्ता घृतार्द्राणि । प्रतिलोमाः प्रतिलोमानि । जुहुयात् । होममन्त्रमाह– **ममेति** ॥ मम समिद्धे सन्दीप्ते । भार्याग्नाविति शेषः । अहौषीः हुतवानभूः रेतो निहितवानभूः । असाविति जारस्य नामरूपादिनिर्देशः । अदो नामा अदोरूपः त्वमहौषीः । ते तादृशनामरूपादिमतः तव प्राणापानावाददे गृह्णामीति । एवमग्रेऽप्यर्थो

ध्येयः । इष्टासुकृते । अन्येभ्योऽपि दृश्यत इति दीर्घः । इष्टं यजनं सुकृतं स्नानदानादिकं पुण्यम् । आशापराकाशौ आशा अभिलाषः पराकाशः तेजः । स च होमो अमोघ एव भवतीत्याह– **स वा इति** ॥ स एष जारः निरिन्द्रियः अजितेन्द्रियः । विगतसुकृतः अस्माल्लोकाद्देहात्प्रैति। एवमुक्तप्रकारेणाभिचारं विद्वान् ब्राह्मणः यं शपति सोऽपि निरिन्द्रियादिर्भवतीत्यर्थः। ततः किमित्यत आह– **तस्मादिति** ॥ एवमुक्तप्रकारेणाभिचारं विद्वान् श्रोत्रियस्य दारेण स्त्रिया नोपहासं कुर्यात् । नेच्छेदु नेच्छेदपि । उपहासप्रकरणे बाधकमाह– **एवमिति** ॥ एवंवित् अभिचारवित् । उपहासं श्रोत्रियदारेण करोति चेत्परः वैरी भवतीत्यर्थः ॥ ८-४-१२ ॥

**अथ यस्य जायामार्तवं विन्देत् त्र्यहं कंसेन पिबेदहतवासा नैनां वृषलो न वृषल्युपहन्यात् त्रिरात्रान्त आप्लुत्य व्रीहीनवघातयेत् ॥ १३ ॥**

स्त्रियो रजस्वलात्वप्राप्तौ कर्तव्यमाह– **अथेति** ॥ यस्य जाया आर्तवं रजः विन्देत् प्राप्नुयात् त्र्यहं त्रिदिनं कंसेनाखर्वपात्रेण पिबेत् अहतवासाः अधौतवासाः । एनां वृषलः शूद्रः वृषली शूद्रा वा नोपहन्यात् न स्पृशेत् । त्रिरात्रान्त आप्लुत्य स्नात्वा व्रीहीन् धान्यानि अवघातयेत् ॥ १३ ॥

[इष्टपुत्रप्राप्त्युपायाः]

**स य इच्छेत्पुत्रो मे शुक्लो गौरो जायेत वेदमनुब्रवीत सर्वमायुरियादिति क्षीरौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातां ईश्वरौ जनयितवै ॥ १४ ॥**

अथ यामिच्छेद्गर्भं दधीतेति प्रकृतपुत्रार्थं कर्तव्यमाह– **स य इच्छेदिति** ॥ यः स गर्भकर्ता मे पुत्रः शुक्लो गौरो जायेत वेदमेकमनुब्रूवीत सर्वमायुरियादितीच्छेत् । स क्षीरौदनं पाचयित्वा सर्पिष्मन्तमश्नीयाताम् । दम्पती इति योज्यम् ।

जनयित वै तादृशं पुत्रं जनयितुमीश्वरौ समर्थौ भवत इत्यर्थः ॥ १४ ॥

**अथ य इच्छेत्पुत्रो मे कपिलः पिङ्गलो जायेत द्वौ वेदावनुब्रवीत सर्वमायुरियादिति दध्योदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १५ ॥**

कपिलो लोहितः लोहितत्वं च पिङ्गलत्वेनेत्याह– **पिङ्गल इति** ॥ शिष्टं प्राग्वत् ॥ १५ ॥

**अथ य इच्छेत्पुत्रो मे श्यामो लोहिताक्षो जायेत त्रीन् वेदाननुब्रुवीत सर्वमायुरियादित्युदौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १६ ॥**

अथ इत्यादि खण्डचतुष्टयेऽपि पूर्ववद्योजना। उदौदनं उदकपक्कमन्नम् ॥ १६ ॥

**अथ य इच्छेद्दुहिता मे पण्डिता जायेत सर्वमायुरियादिति तिलौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १७ ॥**

दुहिता पुत्री । पण्डिता अभिज्ञा ॥ १७ ॥

**अथ य इच्छेत्पुत्रो मे पण्डितो विजिगीथः समितिङ्गमः शुश्रूषितां वाचं भाषिता जायेत सर्वान् वेदाननुब्रुवीत सर्वमायुरियादिति मांसौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवा औक्षेण वार्षभेण वा ॥ १८ ॥**

विजिगीथो जेता । समितिङ्गमः सभाप्रवेष्टा । शुश्रूषितां श्राव्यां वाचं भाषिता वक्ता । मांसमिश्रितमोदनं मांसौदनं । किमीयं मांसमित्यत आह– **औक्षेणेति** ॥ औक्षेण गोवृषसम्बन्धिना आर्षभेण बलीवर्दसम्बन्धिना वेत्यर्थः ॥ १८ ॥

[पुत्रोत्पत्त्युपयुक्तहोमप्रकारः]

**अथाभिप्रातरेव स्थालीपाकावृताज्यं वेष्टित्वा स्थालीपाकस्योपघातं जुहोत्यग्नये स्वाहाऽनुमतये स्वाहा देवाय सवित्रे सत्यप्रसवाय स्वाहेति हुत्वोद्धृत्य प्राश्नाति प्राश्येतरस्याः प्रयच्छति प्रक्षाल्य पाणी उदपात्रं पूरयित्वा तेनैनां त्रिरभ्युक्षत्युत्तिष्ठातो विश्वावसोऽन्यामिच्छ प्रभव्यां सं जायां पत्या सहेति ॥ १९ ॥**

सत्पुत्रोत्पत्त्युपयुक्तं होममाह– **अथाभिप्रातरेवेति** ॥ प्रातरेव स्थालीपाकावृताज्यं स्थालीपाकं अवृताज्यं होमाज्यं च द्वन्द्वैकवद्भावः । दर्भैर्वेष्टयित्वा स्थालीपाकस्योपघातं स्थाल्यां पक्वचरोर्भागं जुहोति । होममन्त्रानाह– **अग्नय इत्यादिना** ॥ सत्यप्रसवाय सत्पुत्रजनयित्रे । हुत्वा हुतशेषमुद्धृत्य प्राश्नाति स्वयं प्राश्येतरस्याः जायायैः प्रयच्छति ददाति । प्रक्षाल्य पाणी उदपात्रं पूरयित्वा तेन पुण्याहोदकेनैनां त्रिरभ्युक्षति । अभ्युक्षणे मन्त्रमाह– **उत्तिष्ठेति** ॥ हे विश्वावसो गन्धर्व अतः मद्भार्यातः उत्तिष्ठ अन्यामुद्वाह्यामिच्छ पत्या मया सह जायांसं योजयेत्यर्थः ॥ १९ ॥

**अथैनामभिपद्यतेऽमोऽहमस्मि सा त्वं सा त्वमस्यमोऽहं सामाहमस्मि ऋक्त्वं द्यौरहं पृथिवी त्वं तावेहि सꣳरभावहै सह रेतो दधावहै पुंसे पुत्राय वित्तय इति ॥ २० ॥**

विश्वावसुप्रार्थनानन्तरं भार्यां प्रति वक्तव्यं वक्तुमाह– **अथैनामिति** ॥ अभिपद्यते प्राप्नोति । वक्तव्यमाह– **अमोहमिति** ॥ अमः अहमस्मि त्वं सा असि वाग्वै साऽम एषः सा च अमश्चेति सामेति पूर्वत्र तृतीयाध्याये उक्ततयाहं प्राणसन्निधियुतः त्वं वाणीसन्निधानयुतासीत्यर्थः । एवमग्रेऽपि । व्यत्यासेनाप्याह– **सेति** ॥ त्वं सा अहं अमोऽस्मीति ब्रूयादित्यर्थः । एवं सामेत्यवान्तरं

विभागेनोक्त्वा इदानीमविभागेनाह– **सामेति** ॥ अहं सामास्मि त्वं ऋगसि द्यौरहं पृथिवी त्वं एहि आगच्छ । तौ एवमर्धनारीपुमात्मना स्थितसामर्गादिशब्दवाच्यवाणीवाणीशसन्निधियुतावावामिति शेषः । सम्रभावहै सम्रम्भं उपहासं कुर्वः । रेतः सह दधावहै मिलितं कुर्वः । किमर्थं पुत्राय पुंनामकनरकात् त्रात्रे वित्तये विदित्रे पुंसे ज्ञानाढ्यपुत्रोत्पत्तय इति यावत् ॥ ८-४-२० ॥

**अथास्या ऊरू विहापयति विजिहीथां द्यावापृथिवी इति तस्यामर्थं निष्ठाय मुखेन मुखं सन्धाय त्रिरेना-मनुलोमामनुमार्ष्टि**

**विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिꣳशतु ।**
**आ सिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥**
**गर्भं धेहि सिनीवालि गर्भं धेहि पृथुष्टुके ।**
**गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥ २१ ॥**

एवं तां प्रत्युक्त्यनन्तरं कर्तव्यमाह– **अथेति** ॥ अनन्तरं द्यावापृथिवी विजिहाथां । ओहाक् त्यागे । विभक्ते भवतमिति मन्त्रेण अस्या ऊरू विहापयति विभक्तौ करोति। तस्यामर्थं गुह्येन्द्रियं निष्ठाय निधाय मुखेन मुखं सन्धाय त्रिः त्रिवारमेतां अनुलोमां शिर आरभ्यानुमार्ष्टि हस्तेनानुमार्जनं करोति । तत्र मन्त्रमाह– **विष्णुरिति** ॥ विष्णुर्वासुदेवात्मा योनिं कल्पयतु शुद्धां करोतु। त्वष्टा त्वष्टृनामकः संकर्षणः रूपाण्यङ्गानि पिंशतु करोतु। प्रजापतिः प्रद्युम्न आसिञ्चतु रेतः इति योज्यम् । धाताऽनिरुद्धः ते गर्भं दधात्वित्यनेन मन्त्रेणानुमृज्यादित्यर्थः । तदुक्तं 'योनिक्लृप्तिर्वासुदेवाद्रूपं सङ्कर्षणाद्भवेत् । आसेककर्म प्रद्युम्नादनिरुद्धाच्च धारणम्'इति छान्दोग्यभाष्ये द्वितीयाध्याये । सिनीवाली चतुर्दशीमिश्रिता अमावास्या तद्देवता प्रत्युच्यते। हे सिनीवालि

गर्भं धेहि कुरु। पृथुष्टुकेति काचिद्देवता तस्याः सम्बुद्धिः। अश्विनौ कृष्णरामौ पद्ममालिनौ कृष्णरामौ तथाश्विनाविति छान्दोग्यभाष्योक्तेः। देवौ ते गर्भं आधत्तां कुरुताम् ॥ ८-४-२१ ॥

**हिरण्मयी अरणी याभ्यां निर्मन्थतामश्विनौ ।**
**तं ते गर्भं हवामहे दशमे मासि सूतये ।**
**यथाऽग्निगर्भा पृथिवी यथा द्यौरिन्द्रेण गर्भिणी ।**
**वायुर्दिशां यथा गर्भ एवं गर्भं दधामि तेऽसाविति ॥ २२॥**

हिरण्मयी हिरण्मय्यौ अरणी अरण्यौ आवामिति शेषः। याभ्यामावाभ्यां अश्विनौ कृष्णरामौ ते त्वयि गर्भं निर्मथतां मथ्नतः। अतः दशमे मासि सूतवे पुत्रप्रसवाय। त्वां वयं हवामहे। तं ते गर्भमित्युक्तं सदृष्टान्तमाह– **यथेति** ॥ पृथिवी यथा अग्निगर्भा बहुव्रीहिः । असावित्यस्य बुद्धिस्थैतन्नामकैतद्गुणकैतद्रूपं गर्भमित्येवं प्रागुक्तशुक्लपिङ्गलादिरूपादिनिर्देशोर्थः ॥ २२ ॥

[प्रसवकालकर्तव्यम्]

**सोष्यन्तीमद्भिरभ्युक्षति यथा वायुः पुष्करिणीं समिङ्गयति सर्वत एवा ते गर्भ एजतु सहावैतु जरायुणा इन्द्रस्यायं व्रजः कृतः सार्गलः सपरिश्रयतमिन्द्र निर्जहि गर्भेण सावरं सहेति ॥ २३ ॥**

प्रसवकाले कर्तव्यमाह– **सोष्यन्तीमिति** ॥ अद्भिरभ्युक्षति तत्र मन्त्रमाह– **यथेति** ॥ यथा वायुः पुष्करिणीं सरोवरं सर्वत एव समिंजयति कम्पयति। तथा ते गर्भः सूतिका वायुना एजतु स्थानाच्चलतु । तदनन्तरं जरायुणा वैतु अधः पततु । इन्द्रस्य इन्द्रेणायं व्रजो गर्भदुर्गः सार्गलः निरोधसहितः सपरिश्रयो रक्षकसहितश्च कृतः । हे इन्द्र तं व्रजं निर्जहि निवर्तय । 'गर्भेण सह सावरां' इति मन्त्रेण अभ्युक्षतीत्यर्थः ॥ ८-४-२३ ॥

[स्विष्टकृद्धोमः कार्यः]

**जातेऽग्निमुपसमाधायाङ्क आधाय कंसे पृषदाज्यं सन्नीय पृषदाज्यस्योपघातं जुहोति अस्मिन् सहस्रं पुष्यासमेधमानः स्वे गृहे अस्योपसद्यां मा च्छेत्सीः प्रजया च पशुभिश्च स्वाहा मयि प्राणां स्त्वयि मनसा जुहोमि स्वाहा यत्कर्मणाऽत्यरीरिचं यद्वा न्यूनमिहाकरम् । अग्निष्टस्त्विष्टकृद्विद्वान् स्विष्टꣳसुहुतं करोतु नः स्वाहेति ॥ २४ ॥**

प्रसवानन्तरं कर्तव्यमाह– **जात इति** ॥ अङ्के पुत्रं समाधायेत्यर्थः । कंसे पात्रविशेषे पृषदाज्यं संस्कृताज्यं सन्नीय निक्षिप्य । पृषदाज्यस्योपघातं भागं जुहोति । होममन्त्रमाह– **अस्मिन्निति** ॥ अस्मिन् स्वगृहे एधमानो वर्धमानः सहस्रं पुष्यासं भूयासं अस्येमामुपसद्यां प्राप्तिं प्रजया पशुभिश्च मा च्छेत्सीः न छेदय। स्वाहा मयि स्थितान् प्राणान् मनसा सह त्वयि जुहोमि त्वद्विषयान् करोमि स्वाहा । कर्मणा यदत्यरीरिचं । यदधिकं यद्वा न्यूनमिहाकरं । तत्सर्वं विद्वान् जानन् स्विष्टकृन्नामाग्निः नोऽस्माकं स्विष्टं अत्यन्तमिष्टं सुहुतं करोतु स्वाहेति मन्त्रेण जुहोतीत्यन्वयः ॥ ८-४-२४ ॥

[नामकरणसंस्कारः स्तन्यप्राशनादि]

**अथास्य दक्षिणं कर्णमभिनिधाय वाग्वागिति त्रिरथ दधि मधु घृतं सन्नीयानन्तर्हितेन जातरूपेण प्राशयति भूस्ते दधामि भुवस्ते दधामि स्वस्ते दधामि भूर्भुवःस्वः सर्वं त्वयि दधामीति ॥ २५ ॥**

स्विष्टकृद्धोमानन्तरं कर्तव्यमाह– **अथेति** ॥ अस्य कुमारस्य दक्षिणं कर्णमभिनिधाय दक्षिणकर्णं प्रतिमुखं निधाय । वाग्वागिति त्रिर्जपेदिति शेषः । अथानन्तरं दधिमधुघृतं द्वन्द्वैकवद्भावः । सन्नीय मेलयित्वानन्तर्हितेन

वस्त्रादिनाऽनाच्छादितेन जातरूपेण स्वर्णेन । प्राशयति भोजयति । तत्र मन्त्रमाह– **भूरिति** ॥ ८-४-२५ ॥

**अथास्य नाम करोति वेदोऽसीति तदस्य तद्गुह्यमेव नाम भवति ॥ २६ ॥**

अथानन्तरमस्य पुत्रस्य वेदोऽसीति नाम करोति । तच्छास्त्रप्रसिद्धं तद्वेद इति नामास्य गुह्यं रहस्यं भवति ॥ २६ ॥

**अथैनं मात्रे प्रदाय स्तनं प्रयच्छति यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवे करिति ॥ २७ ॥**

अथ नामकरणानन्तरं एनं पुत्रं मात्रे प्रदाय स्तनं प्रदापयेत् । तत्र मन्त्रमाह– **यस्त इति** ॥ हे सरस्वति यस्ते स्तनः शशयः शेमुखे शेत इति शशयः । यो मयोभूः मया सुखं भावयतीति मयोभूः । यो रत्नधाः आभरणरूपरत्नं दधत् । यश्च वसु विन्दते प्राप्नोतीति वसुवित् । यश्च सुदत्रः सम्यक् दाता रक्षकश्च येन च स्तनेन विश्वा विश्वानि भार्याणि भरणीयानि ब्रह्मादीनि । पुष्यसि पुष्णासि । तं स्तनं शिशोः धातवे पातुं अकः अकार्षीरिति मन्त्रेण स्तनं प्रयच्छतीत्यन्वयः ॥ २७ ॥

**अथास्य मातरमभिमन्त्रयत इलासि मैत्रावरुणी वीरे वीरमजीजनत् सा त्वं वीरवती भव याऽस्मान्वीरवतोऽकरदिति तं वा एतमाहुरतिपिता बताभूरतिपितामहो बताभूः परमां बत काष्ठां प्रापच्छ्रिया यशसा ब्रह्मवर्चसेन य एवंविदो ब्राह्मणस्य पुत्रो जायत इति ॥ २८ ॥**

इति चतुर्थं ब्राह्मणम् ॥ ८-४ ॥

अथानन्तरं अस्य शिशोर्मातरमभिमन्त्रयते । तत्र मन्त्रमाह– **इलासीति** ॥ हे वीरे मित्रावरुणयोः पुत्री मैत्रावरुणी । इला त्वमसि । वीरं कुमारं अजीजनत् । भवतीति शेषः । सा तादृशी त्वं पुनश्च वीरवती भव। या त्वमस्मान् वीरवतोऽकरत् । अकार्षीरित्यभिमन्त्रयत् इत्यन्वयः । शिशुं प्रति ज्ञातिभिर्वक्तव्यमाह– **तमिति** ॥ हे पुत्र त्वं अति पिता पितरमतिक्रान्तो भूः । बत हर्षे । पितामहमतिक्रान्तः अतिपितामहो भूः । श्रिया यशसा ब्रह्मवर्चसेन परमां काष्ठां उन्नतिं प्रापदिति तमेतं शिशुं प्रति ज्ञातय आहुरित्यर्थः । य एवं पुत्रोत्पादनप्रकारं वेद तस्य विदः जानतः ब्राह्मणस्य पुत्रो नरकात्त्राता पुत्रो जायत इत्यर्थः ॥ ८-४-२८ ॥

इति चतुर्थं ब्राह्मणम् ॥ ८-४ ॥

## अथ वंशब्राह्मणम्

[ऋषिपरम्परा]

**अथ वꣳशः पौतिमाषीपुत्रः कात्यायनीपुत्रात् कात्यायनीपुत्रो गौतमीपुत्रात् गौतमीपुत्रो भारद्वाजीपुत्रात् भारद्वाजीपुत्रः पाराशरीपुत्रात् पाराशरीपुत्र औपस्वस्तिपुत्रात् औपस्वस्तिपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रः कात्यायनीपुत्रात् कात्यायनीपुत्रः कौशिकीपुत्रात् कौशिकीपुत्रः आलम्बीपुत्राच्च वैयाघ्रपदीपुत्राच्च वैय्याघ्रपदीपुत्रः काण्वीपुत्राच्च कापीपुत्राच्च कापीपुत्रः ॥ १ ॥ आत्रेयीपुत्रादात्रेयीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो वात्सीपुत्राद्वात्सीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो वार्कारुणीपुत्राद्वार्कारुणीपुत्रो आर्तभागीपुत्रादार्तभागीपुत्रः शौङ्गीपुत्राच्छौङ्गीपुत्रः साङ्कृतीपुत्रात्साङ्कृतीपुत्र**

[१]आलम्बायनीपुत्रादालम्बायनीपुत्र आलम्बिनीपुत्रादालम्बिनीपुत्रो जायन्तीपुत्राज्जायन्तीपुत्रो माण्डूकायनीपुत्रान्माण्डूकायनीपुत्रो माण्डूकीपुत्रान्माडूकीपुत्रः शाण्डिलीपुत्राच्छाण्डिलीपुत्रो राथीतरीपुत्राद्राथीतरीपुत्रो बालुकीपुत्राद्वालुकीपुत्रः क्रौञ्चिकीपुत्राभ्यां क्रौञ्चिकीपुत्रौ [२]वेदभृतीपुत्राद्वेदभृतीपुत्रः कार्शिकेयीपुत्रात्कार्शिकेयीपुत्रः प्राचीनयोगीपुत्रात्प्राचीनयोगीपुत्रः साञ्जिवीपुत्रात् साञ्जीवीपुत्रात्साञ्जीवीपुत्रः प्राश्नीपुत्रादासुरिवासिनः प्राश्नीपुत्रा आसुरायणादासुरायण आसुरेरासुरिः ॥ २ ॥ याज्ञवल्क्याद्याज्ञवल्क्य उद्दालकादुद्दालको अरुणादरुण उपवेशेरुपवेशिः कुश्रेः कुश्रिर्वाजस्रवसो वाजश्रवा जिह्वावतो बाध्योगाज्जिह्वावान्बाध्योगोऽसिताद्वार्षगणादसितो वार्षगणो हरितात्कश्यपाद्धरितः कश्यपः शिल्पात् कश्यपात् शिल्पः कश्यपः कश्यपात् नैध्रुवेः कश्यपो नैध्रुविर्वाचो वागम्भिण्या अम्भिण्यादित्यादादित्यानीमानि शुक्लानि यजूꣳषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते ॥ ३ ॥ समानमासाञ्जीवीपुत्रात् साञ्जीवीपुत्रो माण्डूकायनेर्माण्डूकायनिर्माण्डव्यान्माण्डव्यः कौत्सात्कौत्सो माहित्थेर्माहित्थिर्वामकक्षायणाद्वामकक्षायणः शाण्डिल्याच्छाण्डिल्यो वात्स्याद्वात्स्यः कुश्रेः कुश्रिर्यज्ञवर्चसो राजस्तम्बायनाद्यज्ञवर्चाराज-

---

१. 'आलम्बीपुत्रात्' -ख.,ग. । २. 'वैदभृती' ।

**स्तम्बायनस्तुरात्कावषेयात्तुरः कावषेयः प्रजापतेः प्रजापतिः ब्रह्मणो ब्रह्म स्वयम्भुब्रह्मणे नमः ॥ ४ ॥**

**इति वंशब्राह्मणम् ॥ ८-५ ॥**

**इति बृहदारण्यके अष्टमोऽध्यायः**

अथ वंशब्राह्मणम् । अध्यायद्वयोक्तविद्याप्रवर्तकपरम्पराप्रस्तावपूर्वमाह– **अथ वंश इत्यादिना** ॥ अत्र पञ्चम्यन्ता उपदेष्टारः प्रथमान्ता उपदेश्या इति ज्ञेयाः । ब्रह्मा स्वयम्भूः स्वतन्त्रः सर्वज्ञ इति वा ।

श्रीमत्काण्वोपनिषदो भाष्याद्युक्तार्थसङ्ग्रहः ।
राघवेन्द्रेण यतिना कृतस्सज्जनसंविदे ॥
[१]अशेषगुणपूर्णाय दोषदूराय विष्णवे ।
नमः श्रीप्राणनाथाय भक्ताभीष्टप्रदायिने ॥

**इति वंशब्राह्मणम् ॥ ८-५ ॥**

**इति अष्टमाध्यायः सम्पूर्णः**

---

१. अयं श्लोकः ख.कोशे विद्यते ।

# Publications of 2005-2006

1. Prabhakara Vijaya — Ed. : Prof. D. Prahladachar
2. Geeta Tatparyam — Ed. : Prof. D. Prahladachar
3. Tatvaprakashika Sharadagama — Ed. : Prof. K. Hayavadana Puranik, Vidwan H.P. Nagaraj.
4. Geeta Bhashya Vol. 3 — Ed. : Prof. P. Venkatesh Bayari
5. Anandamayadhikarana Vimarsha — Ed. : Prof. A. Haridas Bhat
6. Mundaka, Mandookya & Taittiriya Upanishad — Ed. : Dr. A.V. Nagasampige, Vidwan P.V. Upadhyaya
7. Brahmasutra Bhashyam (Sheshachandrika) — Ed. : Prof. D. Prahladachar
8. Importance of Pancharatra — Ed. : Dr. V.N. Pandūrangi, Dr. Srinivasa Varakhedi
9. Research Journal - Prajna — Ed. : Dr. A.V. Nagasampige, Vidwan Ranganatha Katti
10. Srishti Muktavali — Ed. : Dr. A.V. Nagasampige, Vidwan P.P. Upadhyaya
11. Tatva Petika — Ed. : Dr. A.V. Nagasampige
12. Rigartha Manjari — Ed. : Vidwan Ranganatha Katti, Vidwan Shankaranarayana Adiga
13. Bhedojjeevana with five commentaries — Ed. : Vidwan Tirumala Kulkarni, Dr. H. Satyanarayana
14. Adhikarana Saravali — Ed. : Dr. Rajalakshmi Srinivasan